समस्तः सर्वोऽपि लोकः, कीदृशः, दुरन्ताऽपारा या मिथ्यावाग् कुमतिवासिता मृषोक्तिस्तद्रूपो यो ग्रीष्म उष्णर्तुस्तस्य यो भीष्मातपो घोरतापस्तेन तप्तं गात्रमङ्गं यस्य स दुरन्तमिथ्यावाग्ग्रीष्मभीष्मातपतप्तगात्रः, यैर्गुरुभिः, पानीयवाहैर्जलदैरिव, कीदृशैः, प्रीतं प्रीणितं विश्वं जगद् यैस्तैः, अन्यत्र प्रीता विश्वा विश्वम्भरा यैस्तैः प्रीतविश्वैः; पुनः किं०, सान्द्रशब्दैर्गभीरनादैः, लोकः कीदृशः, अस्ततापो ध्वस्तसन्तापः, विदधे व्यधायीति ॥ ३० ॥

सद्दर्शनं ज्ञानमथो चरित्रं
रत्नत्रयीयं मनुजैरवापि ।
यतः पयोधेरिव देववृन्दै-
श्चन्द्रश्च लक्ष्मीश्च सुधा च सद्यः ॥ ३८ ॥

सच्छोभनं दर्शनं सम्यक्त्वं ज्ञानं चरित्रं चेति रत्नत्रयी, यतः सूरीन्द्राद्, मनुजैरवापि प्राप्ता। दृष्टान्तमत्राह—यथा पयोधेः समुद्राद्, देववृन्दैस्त्रयस्त्रिंशत्कोटिप्रमितामरनिकरैः, चन्द्रः, पुनर्लक्ष्मीश्च, पुनः सुधाऽपि चेति । अत्र देवैर्बहूनां रत्नानामुपादानेऽप्यत्र तु चन्द्रलक्ष्मीसुधारूपा रत्नत्रयी त्रित्वसंख्यानुरोधादेवोपात्तेति रहस्यम् ॥३८॥

मरुस्थलीमालवमेदपाट-
मुख्येषु देशेषु जनानशेषान् ।
बोधिप्रदानात् सुखयांबभूवु-
र्ये तोयवर्षादिव तोयवाहाः ॥ ३९ ॥

ये गुरवः, मरुस्थलीमालवमेदपाटप्रमुखेषु देशेषु अशेषान् जनान् बोधिप्रदानात् सम्यक्त्वसमर्पणात्, सुखयांबभूवुः

सुखिनो व्यधुः, यथा तोयवाहा मेघाः, तोयवर्षाद् वारिवर्षणादिति दृष्टान्तः ॥ ३९ ॥

सत्यं च धर्मश्च तपश्च नष्टा
अमी गुणा यत्कलिकालदोषात् ।
एतन्मयैर्यैर्यतिपैः स जह्रे-
त्रयीमयेणात्र तमोऽशुनेव ॥ ४० ॥

सत्यं समीचीनवचनं, धर्मश्च क्षान्त्यादिर्दशविधो यतिधर्मः, तपश्च द्वादशधा, अमी त्रयो गुणाः कलिकालस्य दुःषमाकालस्य दोषान्नष्टा बभूवुः, स दोषः एतन्मयैः सत्यधर्मतपोमयैः, यैर्यतिपैर्मुनीन्द्रैः, जह्रेऽहारि; अत्र प्राचुर्यार्थे मयट्प्रत्ययः। दृष्टान्तमाह-यथा "त्रयीतेजोमयो भानुः" इति वचनात् त्रयीमयेण अंशुना सूर्येण, तमो ध्वान्तमिवेति ॥ ४० ॥

प्रकाममेषां समतारसेन
सन्तोषिताऽशेषधरातलेन ।
चारित्रधर्मत्रिदशद्रुमो द्राक्
सिक्तः पुनः पल्लवभाग् बभूव ॥ ४१ ॥

एषां गुरूणां परमगुरूणां, समतारसेन साम्यसलिलेन, किंलक्षणेन, सन्तोषितं सम्यक् तोषितं अशेषं धरातलं भूतलं येन तेन सन्तोषिताशेषधरातलेन, सिक्तः सेचनविषयीकृतः, चारित्रधर्मत्रिदशद्रुमः सुविहितसाधुधर्मकल्पवृक्षः, पुनः पल्लवभाग् बभूव, अन्तरा म्लानोऽपि पुनः पल्लवित इति ॥ ४१ ॥

तेपे तपो दुस्तपमस्तपापं
षष्ठाष्टमाद्यं बहुधा बुधाच्यैः ।

ईर्यादियत्नैर्यतिवृन्दवर्यैः

स्वस्मिन् शरीरेऽपि गतस्पृहैर्यैः ॥ ४२ ॥

यैः पूज्यैः, किं०, बुधाचार्यैर्विद्वत्पूज्यैः; पुनः किं०, ईर्यादिषु प्रवचनजननीषु यत्नं मनोवचस्तनुसावधानत्वमप्रयत्नं येषां तैः ईर्यादियत्नैः; पुनः किं०, यतिवृन्दे सुविहितसार्थे वर्यैर्वरेण्यैः सम्यक्प्रवृत्तिनिष्ठत्वान्नायकत्वाच्चेति, पुनः किं०, स्वस्मिन् निजे शरीरेऽपि निःस्पृहैरिति; अत एव बहुधा बहुभिः प्रकारैः, अनशनन्यूनोदरतादिभिः, तपः किं०, दुस्तपं हीनसत्त्वैः, पुनः किं०, अस्तपापं ध्वस्तपातकं; पुनः किं०, षष्ठाष्टमाद्यं तेपे तप्तमिति; अत्राद्यशब्दादालोचनातपोविंशतिस्थानकतपोवीरस्वामिनिर्मितद्विशतैकोनात्रिंशत्षष्ठतपोऽष्टकर्मनाशकतपःप्रमुखबहुतपोग्रहः, यतस्तैः सप्तानां कर्मणां तपस्तु यथोक्तचतुर्थषष्ठाष्टमादिभिः पूर्णं निर्ममे, नामकर्मणस्तु प्रकृतिप्राचुर्यादायुषोऽवसानाच्च न चक्रे इति श्रुतिः ॥ ४२ ॥

पीयूषपादैरिव पूज्यपादै-

स्तपागणव्योम्नि समुद्गतैर्यैः ।

श्रीमन्महावीरपरम्पराब्धि-

वेला समुल्लासमियाय भूयः ॥ ४३ ॥

यैः पूज्यपादैः पीयूषपादैश्चन्द्रैरिव, तपागणव्योम्नि तपागच्छगगने, समुद्गतैरुदयं प्राप्तैः सद्भिः, श्रीमतो महावीरस्य परम्परारूपाऽब्धिवेला भूयो बहु, समुल्लासं इयाय प्राप्तेत्यर्थः ॥४३॥

कल्पांह्रिपाङ्कुरमिवात्यतुच्छ-

च्छायं महानन्दफलं ददानम् ।

संस्थाप्य पट्टे विजयादिदाना-

भिधानमाचार्यमहार्यधैर्यम् ॥ ४४ ॥

कल्पांह्रिपस्य कल्पपादपस्य अङ्कुरमिव, अत्यतुच्छच्छायं अतिसम्पूर्णशोभं, पुनः किं कुर्वाणं, महानन्दफलं मोक्षफलं ददानं, पक्षे अत्यतुच्छा छायाऽनातपरूपा यत्र तं, पुनः, महानन्दो महान् प्रमोदो यस्मात् तद् महानन्दं, महानन्दं च तत् फलं चेति कर्मधारये महानन्दफलम्, ददानमित्यत्र प्रयोज्यम्, स्वे पट्टे विजयादिदानाभिधानं आचार्यं श्रीविजयदानसूरिं, संस्थाप्य निवेश्य, किं०, अहार्यं हर्तुमशक्यं धैर्यं यस्य तमहार्यधैर्यमिति ॥ ४४ ॥

वर्षे रसाङ्केषुहिमांशुसङ्ख्ये
समाधिभाजः शमिसिन्धुरास्ते ।
भूमेरलंचक्रुरमर्त्यलोकं
द्वीपात् परं द्वीपमिवांशुमन्तः ॥ ४५ ॥

रसाः षट्, अङ्का नव, इषवः पञ्च, हिमांशुः एकश्चेत्येषां वामतो मिलितानां पञ्चदशशतोत्तरषण्णवतिरूपा १५९६ सङ्ख्या यत्र तत्र रसाङ्केषुहिमांशुसङ्ख्ये, वर्षे, समाधिभाजः शुभध्यानवन्तः, ते शमिसिन्धुरा मुनिकुञ्जराः श्रीआनन्दविमलसूरयः, भूमेर्मनुष्यलोकाद्, अमर्त्यलोकं देवलोकं, अलंचक्रुर्नवभिरुपवासैरहम्मदावादद्रङ्गपार्श्ववर्त्तिनि निजामपुरे चेति शेषः । दृष्टान्तो यथा, द्वीपात् परमन्यं, द्वीपं अंशुमन्तः सूर्या इवेति ॥ ४५ ॥ युग्मव्याख्या ॥

सांप्रतमवसरसङ्गतान् पूज्यपट्टप्रतिष्ठितान् श्रीविजयदानसूरीनुपश्लोकयति कविः—

गङ्गासुधाम्भोधिसुता यदंह्रि-

वाग्दृक्षु पूज्यामलपेशलासु ।
संचक्रमुर्यन्मिलितास्विमास्व-
ऽनश्यन्नघव्याधिधनार्तयो द्राक् ॥ ४६ ॥

गङ्गासुधे प्रसिद्धे, अम्भोधिसुता लक्ष्मीरेतास्तिस्रः, यदंह्रिवाग्दृक्षु येषां श्रीविजयदानसूरीणां अंह्री पादौ, वाग् वाणी, दृग् दृष्टिस्तासु यदंह्रिवाग्दृक्षु; किं०, पूज्यामलपेशलासु महनीयनिर्मलमनोहरासु, क्रमेणेदं विशेषणत्रयं स्थानकत्रिके स्थापनीयम्; संचक्रमुर्मिलिताः । कथमवगतमिति चेत् । उच्यते । यस्मात्कारणात् इमासु अंह्रिवाग्दृक्षु, मिलितासु सतीषु, अघानि पापानि, व्याधयश्च भावरोगाः, धनार्तयश्च निर्धनत्वपीडाः अघव्याधिधनार्तयः पातककर्मामयदारिद्र्याणि; अनश्यन्नेशुः । अंह्रिपूजकानां वाक्श्रोतॄणां दृशा विलोकनाविषयीकृतानां मानवानामिति शेषः ॥ ४६ ॥

बभुस्तमां ये तमसां प्रपञ्च-
मपि स्खलन्तस्तपना नवीनाः ।
पद्मोत्सवायोदयमप्यवाप्ता-
मुदेऽभवन् कौशिकचक्षुषां यत् ॥ ४७ ॥

ये पूज्याः, तमसां अन्धकाराणां पापानां वा प्रपञ्चं विस्तारं,स्खलन्तोऽपि नाशयन्तोऽपि, नवीनास्तपना नूतनाः सूर्याः, बभुस्तमां भृशं भान्ति स्मेत्यन्वयः । पश्चिमार्द्धेन तदेव दृढयति-यदिति यस्माद्धेतोः, पद्मानां पङ्कजानां पद्माया लक्ष्म्याश्चोत्सवाय, उदयं आप्ताः प्राप्ता अपि कौशिकचक्षुषां घूकनयनानां मुदेऽभवन्नासन्; अयं विरोधः, तत्परिहारस्तु “कौशिकः शक्र-

घूकयोः" इति श्रीहेमाचार्यवचनात् कौशिकचक्षुषां शक्रलोचनानामिति ॥ ४७ ॥

ये नाम्बुधित्वेन सतां विशन्ति
स्वान्ते श्रियो जन्मकृतोऽपि पूज्याः ।
दोषाकरोऽप्यात्तसरस्वतीनां
येषां न तोषाय बभूव दृष्टः ॥ ४८ ॥

ये पूज्याः श्रियो लक्ष्म्याः शोभाया वा, जन्मकृतः उत्पादका अपि, शब्दच्छलात् श्रियो जनका अपि, अम्बुधित्वेन समुद्रतया, सतां स्वान्ते चित्ते, न विशन्ति न प्रतिभान्तीत्यर्थः । तद्धेतुमेवाह—आप्ता प्राप्ता सरस्वती वाक्, पक्षे आप्ताः सरस्वत्यो-नद्यो यैस्तेषां आप्तसरस्वतीनामपि दोषाणां मदमोहमायाममतामत्सरादीनां आकरो निकरः दोषाकरः, पक्षे चन्द्रः, दृष्टः, तोषाय तुष्टये, न बभूवेति समुद्रताऽभानकारणमित्याकूतम् ॥४८॥

मन्यामहे नेति विचार्य राज्ञो
यानप्यवाप्तोत्तमराज्यलीलान् ।
दोषागमं द्रागहरन्नपीताः
सर्वज्ञचूडामणितामभी यद् ॥ ४९ ॥

अवाप्ता उत्तमस्य राज्यस्य तपागच्छसाम्राज्यस्य लीला यैस्तान् अवाप्तोत्तमराज्यलीलानपि, यान् गुरून्, राज्ञश्चन्द्रान्, न मन्यामहे, वयमिति यावत् । किं कृत्वा, विचार्य विमृश्य, कथमिति तदेवाह-यदिति यतः,अमी गुरवः सर्वज्ञचूडामणितां सर्वे च ते ज्ञाः प्राज्ञाश्चेति कर्मधारयस्तेषु सर्वज्ञेषु सकलपण्डितेषु चूडामणितां शिरोमणितां, पक्षे सर्वज्ञस्य महादेवस्य चूडामणितां,

इताः प्राप्ता अपि, द्राक् शीघ्रं, दोषाणां आगमं, चन्द्रपक्षे दोषाणां रात्रीणां आगमं दोषागमं, अहरन् हरन्ति स्मेति ॥ ४९ ॥

येषां प्रतापैरतितीव्रतापै-
रहर्निशं पेशलपुण्यभाजाम् ।
कथं तुलामेति मयूखमाली
प्रतापवान् वासरभाग एव ॥ ५० ॥

पेशलपुण्यभाजां अद्भुतभाग्यवतां, येषां गुरूणां, प्रतापैः, कीदृशैः, अतितीव्रतापैः परासह्यत्वेनातितापवद्भिः, कथम्, अहर्निशं दिवानिशं, दिवसेऽपि निशायामपि चेति यावत्, मयूखमाली भानुमाली, सूर्य इति यावत्, कथं तुलामेति कथं तुल्यः स्यात् । तत्र हेतुमाह-सूर्यः किं० वासरभागे एव दिवसांश एव, प्रतापवान् प्रतापीत्यर्थः ॥ ५० ॥

कामं स कामः सुभगत्वरूप-
श्रिया न यैः साकमवाप साम्यम् ।
महाव्रतिप्रीतिमुरीचकार
न यः स्वयं मूर्तिगुणैः प्रहीणः ॥ ५१ ॥

काममत्यर्थं स कामः कन्दर्पः सुभगत्वरूपयोः सौभाग्यसौन्दर्ययोः श्रिया लक्ष्म्या, यैः पूज्यैः साकं, साम्यं तुल्यतां, नावाप न प्राप्तवान् । तत्कारणमेव व्यनक्ति--यो महाव्रतिभिर्महामुनिभिरुत्तमसाधुभिरिति यावत्, पक्षे महाव्रतिना हरेण प्रीतिं, न उरीचकार नाङ्गीचक्रे, च पुनः, स्वयं यः कीदृशः, मूर्त्तिगुणैः प्रहीणो रहितोऽनङ्गत्वादिति ॥ ५१ ॥

न ब्रह्मचार्यप्यजनिष्ट तुल्यः

शीलेन यैर्जह्नुसुतासुतोऽत्र ।
यतो यमध्वंसिनि बद्धरागो
बभार यस्तारकवैरितां च ॥ ५२ ॥

ब्रह्मचार्यपि जह्नुसुताया गङ्गायाः सुतो गाङ्गेयः, शीलेन ब्रह्मचर्येण यैर्गुरुभिः तुल्यो नाजनिष्ट न जातवानिति । कथं न जात इति तन्निमित्तमेवाह—यतो हेतोर्यो गाङ्गेयः यमध्वंसिनि हरे बद्धरागः, वर्त्तत इति शेषः । गुरुस्तु यमध्वंसिनि पञ्चमहाव्रतलोपिनि बद्धरागो नेति, च पुनः, यः तारकेण दैत्येन वैरितां बभार, गुरुस्तु तारकाः संसारसागरतारका अर्थात्तीर्थङ्करादयस्तैः सह वैरितां न दधाति तदाराधकत्वादिति ॥ ५२ ॥

येषां मुखाम्भोरुहमद्भुताय
बभूव भूयो विदुषां न केषाम् ।
यत् पश्यतामेव जगज्जनाना-
मामोदमक्ष्णोः प्रददे प्रकामम् ॥ ५३ ॥

येषां गुरूणां, मुखाम्भोरुहं वदनकमलं, केषां विदुषां पण्डितानां, नाद्भुतायाभूत्ः अपि तु सर्वेषामिति । तद्धेतुमेवाह—यतः पश्यतामेव जगज्जनानां विश्वलोकानां, अक्ष्णोर्नेत्रयोः, प्रकाममतिमात्रं, आमोदं हर्षं गन्धं च प्रददे ददौ, अन्यत्तु कमलं घ्राणस्य गन्धं दत्ते, न नेत्रयोरित्यद्भुतहेतुः ॥ ५३ ॥

येषां गतौ सङ्गतकौशलायां
केषां मनः कौतुकमाप नेति ।
गजोक्षहंसा गतिपण्डितत्वेऽ-

प्यात्तेऽनया यद्गतिपण्डितास्ते ॥ ५४ ॥

येषां पूज्यानां गतौ, किं०, सङ्गतं मिलितं कौशलं प्रावीण्यं यस्यां तस्यां सङ्गतकौशलायां, केषां मनः कौतुकं नाप, सर्वेषामपि मनः कौतुकं प्राप। कथमिति तदेवाह--यत् गजोक्षहंसाः कुञ्जरवृषभमरालाः, गतिपण्डितत्वे गमनचातुर्ये, अनया यद्गुरुगत्या, आत्ते गृहीतेऽपि, ते त्रयः पूर्वोक्ता गतिपण्डिताश्चतुरगमना दृश्यन्ते । तेनाहो गुरुगतेः कौशलं, येन परगतिग्रहणेऽपि तेषां गतिस्खलना न जातेति भावार्थः ॥ ५४ ॥

येषां प्रभूणां प्रबलान् प्रतापान्
कथं विदध्मः सदृशोऽशनिभ्याम् ? ।
चिरप्रभैर्यैर्विदधेऽत्र गोत्रो-
ल्लासः शुभानां यशसां निवासः ॥ ५५ ॥

येषां प्रभूणां गच्छस्वामिनां, प्रबलान् प्रतापान्, अशनिभ्यां विद्युद्वज्राभ्यां, सदृशस्तुल्यान्, कथं विदध्मः कुर्मः ?। तदकरणे कारणमाह--चिरं बहुकालं प्रभा येषां तैश्चिरप्रभैः,यैः प्रतापैः, गोत्रोल्लासो विदधे, कीदृशः, शुभानां भव्यानां यशसां निवासः, सत्कीर्तिस्थानमिति यावत् । अत्र चिरप्रभैरित्यनेनाचिरप्रभाया विद्युतः, गोत्रोल्लास इत्यनेन गोत्रच्छिदः पर्वतभिदो वज्रस्य च दोषदुष्टता स्पष्टीकृतेति ॥ ५५ ॥

सामोदपद्मोत्सवकारिपादै-
र्मार्गा इवाम्भोजकरैः कृता यैः ।
आल्हादितच्छेकमनेकवार-
मेकादशाङ्गीप्रतयो विशुद्धाः ॥ ५६ ॥

यैः पूज्यैः, किं०, अम्भोजकरैः कमलहस्तैः, कोमलकरत्वादिति, पक्षे अम्भोजकरैः सूर्यैरिव, कीदृशैः, एकत्र सामोदः सहर्षः पद्मया लक्ष्म्या उत्सवः, अन्यत्र सामोदः सगन्धः पद्मानां पङ्कजानां उत्सवः, तत्कारिणः पादाश्चरणा एकत्र, अन्यत्र तु पादाः किरणा येषां तैः सामोदपद्मोत्सवकारिपादैः; मार्गाः पन्थानः, यथा तथा एकादशाङ्गीप्रतयः उपलक्षणत्वाद् द्वादशोपाङ्गपुस्तका अपि विशुद्धा दूषणवर्जिताः कृताः, कथं, आह्लादितच्छेकमिति क्रियाविशेषणम् ; पुनः कथम् , अनेकवारमिति पुनः पुनर्न सकृदेवेति तत्त्वम् । अत्रायमाशयः--यथा सूर्यैर्मार्गाः शुद्धाः क्रियन्ते, तथा यैः श्रीपूज्यैरेकादशाङ्गद्वादशोपाङ्गप्रतयः शुद्धाश्चक्रिरे । वारं वारमिति शेषः ॥ ५६ ॥

अभङ्गवैराग्यतरङ्गरङ्गा-
आजन्म पूज्या विकृतीर्व्यमुञ्चन् ।
पञ्चापि पञ्चेषुमदप्रपञ्च-
पञ्चाननक्रीडनकन्दरा ये ॥ ५७ ॥

ये पूज्याः, किं०, अभङ्गोऽक्षयो यो वैराग्यतरङ्गः वैरङ्गिकत्वकल्लोलस्तत्र रङ्गो रक्तता येषां ते अभङ्गवैराग्यतरङ्गरङ्गाः, आजन्मेत्याभवं, जीवितावधीति यावत् । पञ्चापि दुग्धदधिगुडपक्वान्नतैलाख्या विकृतीः, किं०, पञ्चेषोः स्मरस्य मदप्रपञ्चो गर्वविस्तारः स एव पञ्चाननः केसरी तत्क्रीडनाय कन्दरा इव कन्दरा गुहास्तद्ग्रहणे हि तत्प्रादुर्भावादिति, व्यमुञ्चन् न जगृहुः; इति ये पञ्चविकृतीस्त्यक्तवन्त इति भावः ॥ ५७ ॥

यान् श्रीसुधर्मप्रतिरूपरूपान्
शुद्धस्वरूपान् सुगुरूनवाप्य ।

मेने जनैर्जन्म निजं कृतार्थं
दुःस्थैरिवार्थान् फलवत्पुमर्थान् ॥५८॥

यान् सुगुरून्, किं०, श्रीसुधर्मा वर्द्धमानस्वामिपट्टधरस्तत्प्रतिरूपं तत्तुल्यं रूपं येषां तान् श्रीसुधर्मप्रतिरूपरूपान्, पुनः किं०, शुद्धं निर्मलं स्वरूपं स्वभावः शीलं वा येषां तान् शुद्धस्वरूपान्, अवाप्याधिगम्य गुरुत्वेन प्राप्येति यावत्, जनैर्निजं जन्म कृतार्थं सार्थकं, मेने अमानि । दृष्टान्तोऽत्र यथा-फलवन्तः सफलाः पुमर्थाः पुरुषार्था धर्मकाममोक्षलक्षणा येभ्यस्तान् फलवत्पुमर्थान्, अर्थान् धनानि, प्राप्य, दुःस्थैर्दरिद्रैः, स्वावतारः फलेग्रहिर्मन्यते तथेति ॥ ५८ ॥

ऐश्वर्यवाल्लभ्यपृथुप्रतापान्
निरीक्ष्य येषां वरभूरितीव्रान् ।
श्रीकण्ठवैकुण्ठकठोरपादा-
गोपत्वमाप्तास्त्रपितास्त्रयोऽत्र ॥ ५९ ॥

येषां गुरूणां, ऐश्वर्यं ईश्वरता, वाल्लभ्यं विश्ववल्लभता, पृथुर्विशालो यः प्रतापस्तेजस्तान् ऐश्वर्यवाल्लभ्यपृथुप्रतापान्, कीदृशान्, वरभूरितीव्रान्, विशेषणत्रयमिदं विशेष्येषु त्रिष्वनुसन्धेयम् । तथाहि--ऐश्वर्यं किं०, वरं वरीयः, वाल्लभ्यं किं० भूरि भूयः, प्रतापः किं० तीव्रश्चण्डश्चेति निरीक्ष्य, श्रीकण्ठो महादेवः, वैकुण्ठो वासुदेवः, कठोरपादः सूर्यश्चैते त्रयोऽपि किं त्रपिता लज्जिताः, इतो जातार्थः गोपत्वं हरे पशुपतित्वात्, विष्णौ गोकुलरक्षकत्वात्, रवौ गवां किरणानां पतित्वाच्च; अत्र शब्दच्छलत्वात् गोपत्वं पशुपालकत्वं वल्लवत्वमिति यावत्, अत्र जगति, आप्ताः प्रापुरिति ॥ ५९ ॥

चेतश्चमत्कारि मनोज्ञवर्ण-
पुष्पैकपात्रं गुणवल्ललाम ।
दामेव मूर्ध्ना वहतां यदाज्ञां
स्वयंवरा श्रीः सकला समागात् ॥ ६० ॥

चेताश्चित्तं चमत्करोतीत्येवंशीलं चेतश्चमत्कारि, पुनः किं०, मनोज्ञवर्णपुष्पैकपात्रं मनोज्ञो वर्णो यशस्तदेव पुष्पं प्रसूनं तस्यैकमद्वितीयं पात्रं भाजनं, पुनः किं०, गुणवल्ललाम गुणवतां ललाम तिलकं तैरेव मूर्ध्नि धार्यत्वात्, दामेव मालावत्, यदाज्ञां येषां पूज्यानामादेशं, मूर्ध्ना वहतां पुंसां, सकला सर्वा, श्रीर्ज्ञानादिलक्ष्मीः, स्वयंवरा सन्मुखा, समागात् प्राप्तेति ॥६०॥

अथावदातद्वारेण विशेषतस्तानेव वर्णयति—

तेऽन्येद्युरार्यास्तपगच्छधुर्या-
हंसा इवाम्भोरुहिणीं विहारैः ।
मरुस्थलीं मञ्जु विभूषयन्तः
स्वयं समेता अजमेरुदुर्गम् ॥ ६१ ॥

अन्येद्युरेकदा, ते आर्याः पूज्याः श्रीविजयदानसूरयः, किं०, तपगच्छस्य धुर्या वृषभा इव तद्भारनिर्वाहकत्वात्, अम्भोरुहिणीं नलिनीं, हंसा इव मरुस्थलीं मरुदेशभूमिं, मञ्जु यथा भवति तथा साध्विति यावत्, विभूषयन्तोऽलंकुर्वन्तस्सन्तस्तन्मध्ये भूत्वेति यावत्, क्रमेण स्वयमात्मना, अजमेरुदुर्गं लौकिकपुष्करतीर्थपार्श्वगं, समेता आजग्मुः ॥ ६१ ॥

तत्राऽथ लुम्पाकमतानुरक्ता-
लोकाः सदध्वाऽमृतरश्मिकोकाः ।

क्लिष्टाशयव्यन्तरदेवदुष्ट-
मदीदृशन् वासगृहं गुरूणाम् ॥ ६२ ॥

अथ तत्र तस्मिन् दुर्गे, लोकाः, कीदृशाः, लुंम्पाकानां जिन-प्रतिमारीणां मते लुङ्काख्यकुमते अनुरक्ता रागिणः, पुनः कीदृशाः, सन् सत्यो योऽध्वा मार्गः स एवाऽमृतरश्मिश्चन्द्रमास्तत्र कोकाश्चक्रवाकास्तत्पराङ्मुखत्वादिति । अत एव ते किं चक्रुरित्याह–क्लिष्टः क्रूर आशयोऽभिप्रायो यस्यासौ व्यन्तरजातीयो देवश्चेति कर्मधारयस्तेन क्लिष्टाशयव्यन्तरदेवेन दुष्टं दूषितं दुष्टव्यन्तराधिष्ठितमिति यावत्, वासगृहं निवासस्थानं, गुरूणां तेषामिति शेषः, अदीदृशन् दर्शयामासुः, अतिद्वेषबुद्ध्येति ध्येयम् ॥ ६२ ॥

ते ब्रह्मचारित्वपवित्रगात्राः
साक्षाद्विशाखा इव शक्तिमन्तः ।
सौधेऽथ तस्मिन् परिवारयुक्ताः
सक्ताः सुधर्माध्वनि तस्थिवांसः ॥ ६३ ॥

ते गुरवः, किं०, ब्रह्मचारित्वेन जगत्प्रतीतेन ब्रह्मचर्यगुणेन पवित्रं गात्रं येषां ते, पुनः किं०, शक्तिः सामर्थ्यमायुधविशेषो वा तद्वन्तः शक्तिमन्तः । इवोत्प्रेक्ष्यते-साक्षात् प्रत्यक्षाः, विशाखाः कार्त्तिकेया इवेति, पुनः किं०, परिवारयुक्ताः स्वपरिकरपरिवृताः, पुनः किं०, सुष्ठु शोभनो धर्मः सुधर्मस्तस्य सुधर्मस्याथवा सुधर्मणः पञ्चमगणधरस्य योऽध्वा मार्गस्तत्र सुधर्माध्वनि, सक्ता आसक्तास्तत्पट्टपरम्पराचारचारिण इति, तस्मिन् सौधे तस्थिवांसः स्थिताः ॥ ६३ ॥

काकोदरस्येव दुरादरस्य

जिह्मां गतिं व्यन्तरदैवतस्य ।
तस्याऽनिशोद्वेगकरीं निशम्य
ते चिन्तयांचक्रुरवक्रचित्ताः ॥ ६४ ॥

तस्य व्यन्तरदैवतस्य, कीदृशस्य, काकोदरस्येव पन्नगस्येव, किंविशिष्टस्य, दुरादरस्य दुष्ट आदरो यस्य तस्य, जिह्मां गतिं वक्रचेष्टां मनुष्यमारणलक्षणां, कि०, अनिशं नित्यमुद्वेगकरीमनिशोद्वेगकरीं, निशम्य श्रुत्वा, कस्यचित् साधुलोकस्य मुखादिति शेषः । ते पूज्याः किं०, अवक्रचित्ताः सरलाशयाः, चिन्तयांचक्रुरिति विमर्शं कृतवन्तः, तदेवाऽग्रेतने वृत्ते प्राह ॥६४॥

पयःप्रवाहादिव हव्यवाहः
पुण्यप्रभावाद् भवितैष शान्तः ।
मत्वेति सुप्तेषु मुनिष्वथो ते
तस्थुः शुभध्यानविधावधानाः ॥ ६५ ॥

पयसः पानीयस्य प्रवाहात्, इव यथा, हव्यवाहो वह्निः, तथा पुण्यप्रभावात् सुकृतमाहात्म्यात्, एष व्यन्तरः, शान्तो भविता भावीत्यन्वयः। इति मत्वा मुनिषु शेषान्तेवासिषु, सुप्तेषु आवश्यकपौरुषीक्रियाकरणानन्तरमिति शेषः । ते गुरवः किं चक्रिरे ?, तदाह– शुभध्यानस्य धर्मध्यानस्य विधायां विधाने शुभध्यानविधायां अवधानं समाधानं येषां ते शुभध्यानविधाऽवधानाः सन्तः, तस्थुर्निविष्टाः, सूरिमन्त्रध्यानमेवाऽकार्षुर्न तु निद्रामिति तत्त्वम् ॥ ६५ ॥

तेषां पुरस्तात् प्रसभं प्रजल्पन्
हसन् रुदन् भूमितले पतंश्च ।

क्रीडल्लुँठन् बाल इवातिमात्रं
स व्यन्तरः प्रादुरभूत् तदानीम् ॥ ६६ ॥

तदानीं तत्र रात्रौ, तेषां गुरूणां, पुरस्तादग्रतः, प्रसभं हठात्, प्रजल्पन् ब्रुवन्, पुनर्हसन् अट्टहासं मुञ्चन्, पुनः रुदन् आक्रन्दं कुर्वन्, पुनर्भूमितले पृथिव्यां, पतन्, पुनः क्रीडन् केलिं सृजन्, पुनर्लुठन् भूमिशरीरयोः सङ्घट्टादिना बालवच्चेष्टितमातन्वन्, स व्यन्तरः प्रादुरभूत् प्रकटीबभूवेति ॥ ६६ ॥

तैस्तैर्विनोदैः पवनैरिव स्वः-
शैलानकम्प्रान् सुगुरून् प्रणम्य ।
स्वप्नान्तरायात इव प्रचेता-
अन्तर्दधे व्यन्तर एष सद्यः ॥ ६७ ॥

पवनैर्वायुभिः, स्वःशैलान् मेरूनिव, तैस्तैर्देवविनिर्मितैर्विनोदैर्जल्पनहसनरोदनादिभिः, अकम्प्रान्निश्चलान्, तान् सुगुरून् प्रणम्य नत्वा, एष व्यन्तरः, कीदृशः, प्रचेता हृष्टमनाः सन्, स्वप्नान्तः सुप्तज्ञानमध्ये, आयात इव अन्तर्दधेऽदृश्योऽभूदिति ॥ ६७ ॥

अथ प्रभाते सुखिनः स्मितास्यान्
पद्मानिवैतान् श्रमणानुदीक्ष्य ।
अहो ! अमीषां महिमा महीया-
नेवं स्तुवन्ति स्म गुरूंश्च पौराः ॥ ६८ ॥

अथाधुना, प्रभाते जाते सति, एतान् श्रमणान् किं०, सुखिनः कुशलिनः, पुनः किं०, पद्मानिव कमलानिव, स्मितास्यान् स्मेराननान्, "पद्मोऽब्जसङ्ख्ययोः" इति श्रीहेमचन्द्रा-

चार्यधुर्योक्तेः पद्मशब्दस्य पुंनपुंसकलिङ्गत्वात् पद्मानित्यदुष्टम् । उद्वीक्ष्य दृष्ट्वा, अहो इत्याश्चर्ये, अमीषां महामुनीनां, महिमा महीयानतिमहान्, एवं च पुनर्गुरून् पौरा नगरनिवासिलोकाः प्रतिमारयोऽपि, स्तुवन्ति स्मेति ॥ ६८ ॥

तेषां गुरूणाममुतः प्रभूत-
प्रभावतः सर्वजनास्तदानीम् ।
जहर्षुरुत्कर्षितचित्तचेष्टाः
पानीयवाहादिव केकिनोऽमी ॥ ६९ ॥

तेषां गुरूणां अमुत इत्येतस्मात् प्रत्यक्षं वीक्षितात्, प्रभूतप्रभावतोऽतिभूरिमाहात्म्यतः, तदानीं तत्रावसरे, व्यन्तरविघ्नाभावे सति सर्वजना निखिललोकाः, जहर्षुर्हृष्टा बभूवुः । किं०, उत्कर्षिता प्रकर्षवती चित्तचेष्टा मनोवृत्तिर्येषां ते उत्कर्षितचित्तचेष्टाः, इव यथा, केकिनो मयूराः, पानीयवाहाज्जलधरात्, इति दृष्टान्तः ॥ ६९ ॥

भोगीव निर्मोकमथान्धिताक्षं
स्वं स्वं मतं क्लिष्टगति प्रहाय ।
स पौरवर्गः सविधे गुरूणां
विशुद्धमध्वानमुपाददे द्राक् ॥ ७० ॥

भोगी सर्पः, यथा निर्मोकं कञ्चुकं, तथा स्वं स्वं मतं निजं निजं कुमतं, किं०, अन्धिते मुद्रिते सन्मार्गाऽनवलोकनत्वात् अक्षिणी नयने येन तदन्धिताक्षं, पुनः किं०, क्लिष्टा क्लेशमयी गतिर्यस्मात्तत् क्लिष्टगति, प्रहाय हित्वा, स पौराणां नागराणां वर्गो व्रजः, अथेदानीं, तेषां गुरूणां, सविधे समीपे, विशुद्धमध्वानं सम्यग् मार्गं, उपाददेऽङ्गीकुरुते स्मेति ॥ ७० ॥

बहूनि बिम्बानि जिनाधिपानां
प्रतिष्ठयन्तः पुरपत्तनादौ ।
श्रीगूर्जरत्रामरुमेदपाटा-
ऽवन्त्यादिदेशेषु महामहोभिः ॥ ७१ ॥

जिनाधिपानां तीर्थकृतां, बहूनि बिम्बानि प्रतिमाः, प्रतिष्ठयन्तः स्थापनाविषयीकुर्वन्तः सन्तः । क्वेत्याह—पुरपत्तनादौ पुरं नगरं राजनगरादि, पत्तनं रत्नयोनिः, अत्रादिशब्दाद् बन्दिरद्रोणमुखसंनिवेशादिग्रहस्तेन तदादौ तत्प्रमुखे पुरपत्तनादौ, अथवा पुरं च यत् पत्तनमणहिल्लपाटकनगरं तदादौ पत्तनप्रमुखनगरादाविति । अथ केषु देशेष्वित्याह—श्रीगूर्जरत्रामरुमेदपाटावन्त्यादिदेशेषु तत्र गूर्जरत्रा गूर्जरदेशधरा सप्तदशसहस्रग्राममण्डिता, मरुर्मरुस्थली नवकोट्टमयी चेति, मेदपाटश्च दशसहस्रग्राममण्डितः, अवन्तिदेशश्च द्विनवतिलक्षग्रामाभिरामो मालवाभिधान इत्यादिदेशेषु । कैरित्याह—महामहोभिर्महोत्सवैरिति । तत्र तावद् गूर्जरत्रायां पत्तननगरगन्धारबन्दिरमहीशानकविश्वलनगरादिषु, मरुस्थल्यां च नारदपुर्य्यां शिवपुर्य्यां चेति, मेदपाटे चाघाटपुरचित्रकूटदुर्गादौ चेति, मालवदेशे च स्वानूचानपदप्राप्तिस्थाने दध्यालयपुरे चेत्यादिस्थानेषु तैः प्रतिष्ठाः कृता इति वृद्धप्रवादः । पुनः किं कुर्वन्त इत्यग्रेतने वृत्ते प्राह ॥ ७१ ॥

धामब्जिनीशा इव दीप्तिमन्तः
प्रोल्लासयन्तः पृथिवीं स्वपादैः ।
ते बोधयन्तो जनपद्मपङ्क्तिं
पूज्या विजहुश्चिरमत्र लोके ॥ ७२ ॥

श्यामाकाशं, अब्जिनीशाः सूर्या इव, किं०, दीप्तिमन्तस्तेजस्विनः, तथा पृथिवीं स्वपादैर्निजक्रमैः, सूर्यपक्षे पादैः किरणैः, प्रोल्लासयन्तः, पुनः किं कुर्वन्त इत्याह—जनपद्मपङ्क्तिं लोककमलावलीं, बोधयन्तः सन्तस्ते पूज्याश्चिरं चिरकालं, अत्र लोके जगति, विजह्रुर्विहारं चक्रुः । इति युग्मव्याख्या ॥७२॥

रथाङ्गः पूर्वाद्राविव लसति भानोर्द्युतिभरे
पतत्यम्भःपूरे भुवि जलमुचां चातक इव ।
चकोरः शीतांशोरुदय इव मार्गे मखभुजां
विहारे सत्येषामिह जगति लोकः प्रमुमुदे ॥७३ ॥

पूर्वाद्रावुदयाचले, भानोर्द्युतिभरे लसति सति, रथाङ्गः कोक इव; पुनर्भुवि भूमौ, जलमुचां मेघानां, अम्भःपूरे पतति सति, चातक इव बप्पीह इव; पुनर्मखभुजां मार्गे गगने, शीतांशोश्चन्द्रस्य, उदये सति, चकोरो यथा; तथैषां श्रीविजयदानसूरीणां, विहारे सति जगति लोकः प्रमुमुदे मुदित इति । शिखरिणीवृत्तमिदं "रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणी" इति लक्षणात् ॥ ७३ ॥

. . . . . . . . . . . . . . . . . . . . . . . . . . . . . .

इतीति स्पष्टम् ॥

इति सुविहितसभासार्वभौमसमानसकलपण्डितमण्डलीमौलिमौलीयमानपण्डितश्रीकमलविजयगणिसुशिष्यमुख्यपण्डितश्रीविद्याविजयगणिविनेयाणुवाचकश्रीगुणविजयगणिविरचितायां श्रीविजयप्रशस्तिमहाकाव्यटीकायां
तृतीयः सर्गोऽर्थतः समर्थितः ।

अर्हम्

# अथ चतुर्थः सर्गः ।

अथ श्रीविजयदानसूरिपट्टधरस्य श्रीहीरविजयसूरीश्वरस्य जन्माद्यवदातवर्णनवर्यस्तुर्यः सर्गः प्रारभ्यते, तथाहि—

अथ धात्रीलताधात्रीरुहः स्फारफलप्रदः ।
गूर्जरत्राभिधो देशः क्रीडाक्रीड इव श्रियः ॥१॥

धात्रीलताया भूमिवल्लेः धात्रीरुहो वृक्षस्तदाधारत्वात्, पुनः किं०, स्फारफलप्रदो विस्तीर्णफलदाता, गूर्जरत्राऽभिधो देशोऽस्तीति शेषः । इवोत्प्रेक्ष्यते—श्रियः कमलायाः, क्रीडाक्रीडः केलिकरणोद्यानं अस्तोकैर्लक्ष्मीवल्लोकैरुपचर्यमाणत्वात् ॥ १ ॥

पञ्चभिः श्लोकैर्देशमेव विशिनष्टि—

यं विमानगृहं कल्पद्रुमं निर्जरमानवम् ।
दृष्ट्वा त्रिविष्टपं द्रष्टुं न स्यादुत्कण्ठितं मनः ॥२॥

यं देशं, दृष्ट्वा त्रिविष्टपं स्वर्गं, द्रष्टुं वीक्षितुं, उत्कण्ठितं मनो न स्याद् नृणामिति योगः । अथोभयोः साम्यप्रतिपादकविशेषणान्याह—विमानगृहमिति "विमानं देवतायाने सप्तभूमिगृहेऽपि च" इत्यनेकार्थवचनात् देशपक्षे विमानानि सप्तभूमिकानि गृहाणि यत्र तम्, स्वर्गपक्षे विमानान्येव गृहाणि यत्र तत्; पुनर्यं किं०, कल्पद्रुमं कल्पाः कल्पद्रुमा इव द्रुमा यत्र तं, अथवा कल्पद्रुमं कल्पवृक्षतुल्यं लोकानां कल्पितफलपूरकत्वात्, स्वर्गपक्षे कल्पाद्रुमा यत्र तत्; पुनः किं०, निर्जरमानवं देशपक्षे विशिष्टरूपादिमत्त्वात् निर्जरा इव मानवा यत्र तं, स्वर्गपक्षे निर्जराणां मा लक्ष्मीस्तया नवं नव्यं प्रभूततरस्फातिमत्त्वादिति ॥ २ ॥

यत्र धर्मार्थकामानां संगमः पुंसु दृश्यते ।
श्रेयोलक्ष्मीकलाकेलियुतास्ते यदहर्निशम् ॥३॥

यस्मिन् देशे, धर्मार्थकामानां त्रयाणां पुरुषार्थानां, संगमः पुंसु लोकेषु, दृश्यत इत्यन्वयः । अथ विशेषणत्रयेण तमेव स्पष्टयति–यदिति यस्मात् कारणात्, ते लोकाः, अहर्निशं दिवानिशं नित्यमिति यावत्, श्रेयः पुण्यं मङ्गलं वा, लक्ष्मीः पद्मा शोभा वा, कलाकेलिः कन्दर्पः कलानां वा केलिर्लीला तद्युक्ताः सन्तीति ॥ ३ ॥

श्रीकण्ठश्रीपतिश्रीदान् यज्जनान् विदधे विधिः ।
यदीश्वरतमोध्वंसिधनदत्वयुता अमी ॥ ४ ॥

यद्देशीयजनान् विधिर्विधाता, श्रीकण्ठश्रीपतिश्रीदान् हरहरिधनदान्, विदधेऽकरोदित्यन्वयः । अथ विशेषणत्रयेण तानेव स्थापयति–यदीश्वरेति अत्र 'द्वन्द्वान्ते श्रूयमाणः शब्दः प्रत्येकं संबध्यते' इति न्यायात् विशेषणत्रयान्ते स्थितस्य त्वशब्दस्य प्रत्येकं संबन्धः कार्यः, तेन ईश्वरत्वतमोध्वंसित्वधन-दत्वयुता इति व्याख्येयम् । तत्रेश्वरत्वं धनित्वं हरत्वं च, तमोध्वं-सित्वं तमसः पापस्य ध्वंसित्वं तमोध्वंसित्वं पापव्यपोहकत्वं, पक्षे तमसो राहोर्ध्वंसित्वं विष्णुत्वं, धनदत्वं तु द्वयोस्तुल्यं, तैर्युता अमी जना वर्त्तन्त इति ॥ ४ ॥

द्रुमाः कल्पद्रुमा यत्र धेनवः कामधेनवः ।
मानवाश्च सुपर्वाणो देवदेशस्तदस्ति यः ॥ ५ ॥

यत्र देशे, द्रुमाः किं०, कल्पद्रुवत् मा लक्ष्मीश्छायाफल-प्राचुर्यरूपा येषां ते कल्पद्रुमाः; पुनर्यत्र धेनवः, किं०, कामं यथाभिलाषं दोह्यत्वात् कामधेनवः स्वर्गवीतुल्याः, अथवा

कामाः काम्याः कमनीया धेनवः कारिण्य इवोन्नतत्वपुष्टत्वादिना कामधेनवः; पुनर्यत्र मानवाः सुपर्वाणः शोभनोत्सवाः, पक्षे देवाः; तेन यो देशः, दिव्यवस्तुसद्भावाद्देवदेश इति प्रसिद्धिमानस्तीति शेषः ॥ ५ ॥

प्रतिद्रङ्गं प्रतिग्रामं प्रत्योकः प्रतिपाटकम् ।
आर्हत्यो मूर्त्तयो यत्र तेन पुण्यमयोऽस्ति यः ॥६॥

प्रतिद्रङ्गं नगरं प्रति, पुनर्ग्रामं प्रति, पुनरोको गृहं प्रति, पुनः पाटकं नगरावयवविशेषं प्रति, यत्र देशे, आर्हत्यो जैन्यः, प्रतिमाः सन्ति; तेन कारणेन, यो देशो गूर्जरनामा, पुण्यमयोऽस्ति, अत्र मयट्प्रत्ययः प्राचुर्यप्राधान्यख्यापकः ॥ ६ ॥

अथाऽष्टभिर्नगरं विशिनष्टि—

नित्यं जगज्जनानन्दिसुपर्वभरभासुरम् ।
प्रह्लादनपुरं तत्र पुरन्दरपुरोपमम् ॥ ७ ॥

तत्र देशे, प्रह्लादनपुरं नगरमस्तीति योगः। किं०, पुरन्दरपुरं अमरावती तदुपमम् । द्वयोर्विशेषणमाह—जगज्जनानन्दीनि यानि सुपर्वाणि शोभनोत्सवास्तेषां भरेणातिशयेन, पक्षे जगज्जनानन्दिनो ये सुपर्वाणो देवास्तेषां भरेण भासुरं रम्यम् ॥ ७ ॥

नित्यं वैश्रमणोल्लासं नित्यं पुण्यजनप्रियम् ।
सदारम्भं सदासारं यदभादलकासदृग् ॥ ८ ॥

एकत्र वै निश्चयवाचकोऽव्ययः, श्रमणानां मुनीनामुल्लासो यत्र तत्, पक्षे वैश्रमणस्य कुबेरस्योल्लासो यत्र तत्; पुनः किं०, पुण्यैर्जैनैरार्हतैः प्रियं रम्यं, पक्षे पुण्यजना यक्षास्तैः प्रियं, अथवा पुण्यजनानां यक्षाणां प्रियं वल्लभं; पुनः किं०, सन्तः श्रेष्ठा आरम्भाः सुकृतकर्मोद्यमा अर्थाल्लोकानां यत्र, पक्षे

सदा रम्भा यत्र; पुनः किं०, सदा सारं श्रेष्ठं, पक्षे सदा सारं धनं यत्र तत् अलकाया वस्वोकसारेत्यभिधानात्, यन्नगरं अलकासदृक्ष् अभाद् भाति स्मेति ॥ ८ ॥

दृष्ट्वेत्यूचुर्जनान् यत्र यथाकामं प्रयच्छतः ।
किं पञ्चत्वमिता देवद्रुमा अस्मिन्नवातरन् ? ॥९॥

यत्र पुरे, यथाकामं मनोरथानुसारेण, यच्छतो ददतः, जनान् दृष्ट्वा इत्यूचुश्चतुरा इति शेषः। तदेवाह--पञ्चत्वं निधनं, इताः प्राप्ताः, देवद्रुमाः कल्पपादपाः, अस्मिन् पुरे, अवातरन् अवतीर्णाः, अत्र देवपादपानां नित्यत्वेन पञ्चत्वप्रापणे विरोधः, स तु पञ्चत्वं पञ्चसंख्याकत्वमित्यर्थसमर्थनेनाऽपास्त-इति ॥ ९ ॥

छायाभृन्नन्दनानन्दाः सुरसार्थमनोहराः ।
यत्रोच्चैरप्सरायन्ते सत्कामाः कमलेक्षणाः ॥१०॥

यत्र कमलेक्षणाः पद्मलोचना मृगलोचना वा "कमलं पद्मे कमलो मृगे च" इत्यनेकार्थत्वात्, स्त्रियः, अप्सरायन्ते स्वर्ग-स्त्रिय इवाचरन्ति। कथमिति शङ्कां विशेषणसाधर्म्येण व्यपोहति-छायेति एकत्र छायाऽनातपस्तद्भृत् यत् नन्दनं इन्द्रोद्यानं तत्र आनन्दो यासां ताः, अन्यत्र छायाभृत्सु शोभावत्सु नन्दनेषु पुत्रेषु आनन्द इतिः पुनः किं०, सुराणां देवानां सार्थैर्गणैः, सार्थानां वा मनोहराः, पक्षे सुरसः शोभनो रसो यः श्रृङ्गार-स्तस्य सर्वलोकप्रियत्वात् सर्वरसेषु मुख्यतया भणनाच्च ये अर्थाः प्रकाराः कामोद्दीपकहावभावविभ्रमादयस्तैर्मनोहराः; पुनः किं०, सन् विद्यमानः कामः कन्दर्पो यत्र, तस्य हि तत्र वसतिसद्भावात्, पक्षे सन्तः श्रेष्ठाः कामा अभिलाषा यासां ताः ॥ १० ॥

मत्तमातङ्गगामिन्यः सुरार्थाश्चलदर्शनाः ।
निन्द्या अपि मुदे सन्ति यत्र त्रस्तमृगीदृशः॥११॥

मत्तो मातङ्गश्चाण्डालस्तद्वदिति निन्दा,स्तुतिपक्षे मातङ्गो-हस्ती तद्गामिन्यः; पुनः सुराया मदिराया अर्थो यासां ता-इति निन्दा, स्तुतिपक्षे सुराणां देवानां अर्थः प्रयोजनं तत्स्पृहालक्षणं याभ्यस्ताः; पुनः किं०, चलं चञ्चलं दर्शनं यासां ता इति निन्दा, स्तुतिपक्षे चले चपले दर्शने नेत्रे यासां ताः । इति बाह्यतो निन्द्या अपि यत्र पुरे, त्रस्तमृगीदृशः स्त्रियः, मुदे सन्ति, सर्वेषामिति शेषः ॥ ११ ॥

शस्तहस्ताः स्फुरत्पद्मा दानिनः शोभनासनाः ।
इभ्या इभा इवाऽऽभान्ति यत्राऽवग्रहशालिनः ॥१२॥

यत्र पुरे, इभ्या व्यवहारिणः, इभा इव गजा इव, आभान्ति । किं०, एकत्र शस्ताः प्रशस्या हस्ताः पाणयः, अन्यत्र हस्ताः शुण्डा येषां ते; पुनः स्फुरन्ती पद्मा रमा, अन्यत्र स्फुरन्ति प्रकटानि पद्मानि इभबिन्दवो येषां ते "पद्ममिभबिन्दौ" इत्यनेकार्थत्वात्; पुनर्दानिनः दातारः, पक्षे दानिनः समदाः; पुनः शोभनं आसनं विष्टरं येषां ते, पक्षे आसनं हस्तिस्कन्धो येषां ते यदनेकार्थः- "आसनं हस्तिस्कन्धे" इति; पुनः अवग्रहो ज्ञानं तेन, पक्षेऽवग्रहो-गजललाटं तेन शालिनः "अवग्रहो गजललाटे च" इत्यनेकार्थ-त्वादिति ॥ १२ ॥

यत्र प्रदत्तदृक्शैत्येऽर्हच्चैत्ये मुरजध्वनिः ।
धरत्यम्भोधरध्वानकलां वनकलापिनाम् ॥१३॥

यत्र अर्हच्चैत्ये, किं०, प्रदत्तं दृशोः शैत्यं येन तत्र, मुरज-ध्वनिर्मृदङ्गनादः, वनकलापिनां काननमयूराणां गृहमयूराणां

च "वनं कानने गृहेऽपि" इत्यनेकार्थत्वात्; अम्भोधरध्वानकलां घनगर्जिततुलां, धरति ॥ १३ ॥

यत्र चैत्योदरे दग्धधूपधूमो विजृम्भितः ।
अभूदभ्युन्नताम्भोदविभ्रमाद् बर्हिणां मुदे ॥१४॥

यत्र चैत्योदरे दग्धस्य धूपस्य धूमो विजृम्भितो व्याप्तः सन्, अभ्युन्नताम्भोदविभ्रमात् उन्नतजीमूतभ्रमात्, बर्हिणां केकिनां, मुदेऽभूदिति ॥ १४ ॥

अथ नगरस्यैव विशेषवर्णनमाचष्टे—

इति यत्राभवद्वार्त्ता महाकौतुककारिणी ।
व्यानशे सा जगत्तैलबिन्दुरम्भ इवाभितः ॥१५॥

यत्र पुरे, इति वक्ष्यमाणलक्षणा, वार्त्ता कथा, महाकौतुककारिणी, अभूज्जाता । सा तैलस्य बिन्दुः अम्भः पानीयमिव, जगद् व्यानशे व्याप्नोति स्मेति ॥ १५ ॥

तथाहि समभूत् पूर्वं प्रह्लादनमहीपतिः ।
नेताऽर्बुदगिरीन्द्रस्य स्वर्गस्येवाऽच्युताग्रजः ॥१६॥

तथाहीति तां वार्त्तां सूत्रकृदेवाह—पूर्वं प्रह्लादनो नाम्ना महीपतिरभूत् । किं०, अर्बुदगिरीन्द्रस्य नेता नायकः, इव यथा, अच्युताग्रज इन्द्रः, स्वर्गस्येति दृष्टान्तः ॥ १६ ॥

तेन श्रीशान्तिनाथस्य प्रतिमा गालिता पुरा ।
तत्पातकादभूद् दुष्टं कुष्ठं तस्याऽवनीपतेः ॥ १७ ॥

तेन राज्ञा, श्रीशान्तिनाथस्य कुमरविहारमूलनायकस्य, प्रतिमा स्वर्णमयी श्रीकुमारपालभूपालकारिता, गालिताऽग्निना ज्वालिता, वृषभीकृत्याऽचलेश्वरस्य पुरतः स्थापितेति शेषः ।

अथ तस्मात् पातकात्तस्याऽवनीपतेः प्रह्लादनस्य, दुष्टं कुष्ठं रोगः, अभवत् ॥ १७ ॥

तया तस्याथ लावण्यरूपादि प्राणशद् रुजा ।
महसां महिमा सर्पद्दशेवौकोमणेः क्षणात् ॥१८॥

तया रुजा कुष्ठाख्यरोगेण, तस्य नृपस्य, लावण्यरूपादि लवणिमसौन्दर्यादिकं, प्राणशत् नश्यति स्म । यथा सर्पद्दशा ओकोमणेः प्रदीपस्य, महसां तेजसां, महिमेति दृष्टान्तः ॥१८॥

स्वनाम्नाऽथाऽमुना राज्ञा प्रह्लादनपुरं पुरम् ।
वासितं पृथुलं पृथ्वीपुरन्ध्रीपुण्ड्रसन्निभम् ॥१९॥

अथाऽमुना राज्ञा स्वनाम्ना प्रह्लादनपुरं नाम, पुरं वासितम् । किं०, पृथुलं विस्तीर्णं, पुनः किं०, पृथ्वीपुरन्ध्या महीमहिलायाः पुण्ड्रसंनिभं तिलकतुल्यम् ॥ १९ ॥

तदेनःशान्तये तेन चैत्यं पार्श्वप्रभोः पृथु ।
कारितं षोडशस्वर्णकपिशीर्षकशीर्षभृत् ॥ २० ॥

तत् श्रीशान्तिनाथमूर्त्तिभञ्जनलक्षणं यत् एनः पापं तस्य शान्तये शमनाय, तेन राज्ञा, श्रीपार्श्वप्रभोः प्रह्लादनविहार-इतिनामकं चैत्यं कारितम् । किं०, पृथु विशालं, पुनः किं०, षोडशस्वर्णकपिशीर्षकाण्येव शीर्षाणि शिरांसि बिभर्तीति तत् ॥ २० ॥

तत्पुण्यतः प्रनष्टेऽस्मिन् दुष्टे कुष्ठे क्षणाद् नृपः ।
लब्धलावण्यलीलादिः पुनर्जात इवाऽभवत् ॥२१॥

तत्पुण्यतः श्रीपार्श्वनाथप्रासादप्रतिमानिर्मापणप्रभवात्, अस्मिन् दुष्टे कुष्ठे प्रनष्टे सति, लब्धं लावण्यलीलादि येन सः, पुनर्जातो नवाऽवतारेणाऽवतीर्ण इवाऽभवदिति ॥ २१ ॥

प्रत्यहं मौक्तिकानीव ढौक्यन्ते चाऽक्षताक्षताः ।
प्रह्लादनविहारेऽस्मिन् मूढकप्रमिता जनैः ॥ २२ ॥

प्रतिदिनं मुक्ताफलानीवाऽक्षताक्षता अखण्डलाजाः, अत्र प्रह्लादनविहारे मूढकः शतमणप्रमाणस्तन्मिता ढौक्यन्ते, एकदिने तत्रत्यैर्जैनैर्नैत्यर्थमागतैरिति ॥ २२ ॥

जनानां मुञ्चतां पूगीफलान्यस्मिन् जिनौकसि ।
बीजानीव स्वभावद्रोर्मणान्यासंश्च षोडश ॥२३॥

अत्र जिनौकसि पार्श्वप्रासादे, जनानां, किं कुर्वतां, मुञ्चतां, कानि, पूगीफलानि षोडश मणानि एकस्मिन्नहनि आसन् जातानि, स्वभावद्रोर्निजभक्तिरागतरोः, बीजानीवेत्युत्प्रेक्षा ॥२३॥

यत्रेति वचनैरभ्यागतं प्रणयिनं प्रजाः ।
सुखयामासुरानन्दकन्दकन्दलनाम्बुदैः ॥ २४ ॥

यस्मिन् पुरे, इति वचनैः किं०, आनन्दकन्दस्य कन्दलने पल्लवने अम्बुदैः, अभ्यागतं प्रणयिनं मित्रबान्धवादिकं, प्रजालोकाः, सुखयामासुः ॥ २४ ॥

अथ षड्भिः श्लोकैर्गुरुपितरं विशिनष्टि—

तत्र कुंराभिधः श्रेष्ठी श्रेष्ठधीः शिष्टशेखरः ।
महेश इव संजातः सर्वदासर्वमङ्गलः ॥ २५ ॥

तस्मिन् प्रह्लादनपुरे, कुंराभिधः श्रेष्ठी, किं०, श्रेष्ठा धीर्यस्य, पुनः किं०, शिष्टेषु शेखरोऽवतंसः, महेश इव संजातः, किं०, एकत्र सर्वदा सर्वाणि मङ्गलानि यस्य सः, अन्यत्र सर्वमङ्गला पार्वती यस्य सः ॥ २५ ॥

निष्कलङ्कं समालोक्य साक्षाद् यं यस्य वेश्मनि ।
श्रीश्चलत्वकलङ्कं स्वं मार्ष्टुकामेव तस्थुषी ॥ २६ ॥

यं कुंराख्यं श्रेष्ठिनं, निष्कलङ्कं कलङ्कवर्जितं, समालोक्य श्रीश्चलत्वलक्षणं स्वं कलङ्कं मार्ष्टुकामेव त्यक्तुकामेव, यस्य श्रेष्ठिनः, वेश्मनि तस्थुषी स्थिता ॥ २६ ॥

पुमर्थत्वेन धर्मार्थकामेषु सदृशेष्वपि ।
संजघ्नतुः सङ्गतौ द्वौ यद्धर्मं नार्थमन्मथौ ॥ २७ ॥

पुमर्थत्वेन पुरुषार्थतया, धर्मार्थकामेषु सदृशेषु तुल्येष्वपि सत्सु, यस्य श्रेष्ठिनो धर्मं, अर्थमन्मथौ धनकामौ, किं०, सङ्गतौ मिलितावपि, न संजघ्नतुर्न हतवन्तौ, अनेन धर्मदार्ढ्यमसूचीति ॥२७॥

धर्मो धत्ते ध्रुवं पुंसामर्थकामौ निषेवितः ।
ध्यात्वेति धीमता येन धर्म एवाऽऽदृतः सदा ॥ २८ ॥

ध्रुवं निश्चितं, धर्मो निषेवितः सन्, अर्थकामौ धत्ते पुष्णाति, इति ध्यात्वा येन धीमता बुद्धिशालिना, श्रेष्ठिना धर्म एवादृतः ॥ २८ ॥

दानं दीनार्थिपात्रेषु नित्यं येनाऽपि यच्छता ।
बहुमन्यन्त पात्राणि पयोदेनेव बर्हिणः ॥ २९ ॥

दीना दुःस्थिताः, अर्थिनो याचकाः, पात्राणि च श्रमणश्रमणीश्राद्धश्राद्धीरूपाणि, तेषु येन दानं यच्छताऽपि पात्राणि बहु अमन्यन्त भूरि मेनिरे, यथा पयोदेन मेघेन, बर्हिणः केकिन इति ॥ २९ ॥

ब्रह्मवत्सु गृहस्थेषु यस्य श्रेष्ठिशिरोमणेः ।

रेखा सुदर्शनस्येव प्रथमा प्रथमाकृतेः ॥ ३० ॥

ब्रह्मवन्तः शीलधारिणो ये गृहस्थास्तेषु, यस्य श्रेष्ठिशिरोमणेः, पुनः किं०, प्रथमा प्रधाना आकृतिर्यस्य तस्य, सुदर्शनश्रेष्ठिन इव प्रथमा रेखा, जातेति शेषः ॥ ३० ॥

अथ सप्तभिर्गुरुमातरं वर्णयति—

उल्लसद्भाग्यसौभाग्या लावण्यजलदीर्घिका ।
नाथी तस्याऽभवद् भार्या लक्ष्मीर्लक्ष्मीपतेरिव ॥ ३१ ॥

उल्लसन्ती दीप्यमाने भाग्यसौभाग्ये यस्याः सा, पुनर्लावण्यं सद्गमनसन्निरीक्षणसज्जल्पनरूपं तदेव जलं तस्य दीर्घिका वापिका, नाथीनाम्नी तस्य भार्याऽभवत्, यथा लक्ष्मीपतेर्नारायणस्य, लक्ष्मीरिति ॥ ३१ ॥

सदोदाराऽब्धिपुत्रीव रम्भेव च वृषादरा ।
पद्मिनीव सदामोदा हरीणामपि या मुदे ॥ ३२ ॥

अब्धिपुत्रीव लक्ष्मीरिव, सदा उदारा लक्ष्मीपक्षे उदारा महती, देवतासु हरिप्रियेत्युक्तेः, नाथीपक्षे उदारा महेच्छा सरला वा; पुनः रम्भेव वृषादरा एकत्र वृषा इन्द्रस्तत्रादरो यस्याः सा, अन्यत्र वृषे धर्मे आदरो यस्याः सा; पुनः पद्मिनीव सदामोदा एकत्र आमोदो गन्धः, अन्यत्र आमोदो हर्षो यस्याः सा, अत्र लक्ष्मीपक्षे हरीणां नारायणानां बहुत्वं पूज्यत्वात्, दशावतारत्वेन बहुत्वाद् वा, रम्भापक्षे हरीणां इन्द्राणां, पद्मिनीपक्षे हरीणां सूर्याणां, तथा या नाथी हरीणां विष्णुशक्रसूर्याणां त्रयाणामपि, सकलदेवार्चनीयश्रीगुरुरूपपुत्रप्रसवहेतुत्वेन मुदे, अस्तीति शेषः ॥ ३२ ॥

पङ्केरुहं जडोल्लासि दोषोल्लासी सुधाकरः ।

यन्मुखेन समे नेमे मतिमद्गुणपोषिणा ॥ ३३ ॥

पङ्केरुहं कमलं, किं०, जडोल्लासि डलयोरैक्यात् जले उल्लासि, पक्षे जडेन मूर्खेणेति शेषः; पुनः सुधाकरश्चन्द्रः, किं०, दोषोल्लासी दोषैरादीनवैः, पक्षे दोषायां निशायां उल्लासी इति दोषः; यन्मुखेन इमे द्वे, न समे, मुखेन किं०, मतिमतां गुणान् पोषयतीति तेन। अत्र मतिमत्पदेन जडोल्लासित्वं, गुणपदेन दोषोल्लासित्वं चाऽपास्तम् ॥ ३३ ॥

मौक्तिकस्वर्णरत्नानां नूत्नालङ्कृतयोऽपि हि ।
प्रत्युतालङ्क्रियन्ते स्म यच्छरीररुचां भरैः ॥ ३४ ॥

मौक्तिकस्वर्णरत्नानां नूत्ना नव्या अलङ्कृतयोऽलङ्काराः, प्रत्युत यच्छरीररुचां भरैर्यस्या नाथीनाम्न्याः शरीररुचां वपुस्तेजसां भरैः, अलङ्क्रियन्ते स्म । यतस्तत्संयोगेन तेषां तेजःसद्भावात्, एतेन तस्याः शरीरद्युतेरतिशायित्वं दर्शितमिति ॥ ३४ ॥

सीता कुशीलतासारा शश्वज्जडा सुरापगा ।
यस्या नेत्यनयोः साम्यं शीलकौशलसम्पदः ॥३५॥

सीता जानकी, किं०, कुशीलतासारा कुशीलस्य भावः कुशीलता तया सारा, नन्वत्र सीता तु सुशीलत्वेन प्रतीता, सा कुशीलतासारा कथं स्यात्? इति प्रकटो विरोधः; अथ विरोधपरिहारस्तु सीता हलपद्धतिः सा तु कुशीलतासारा, तत्र कुशी लोहविकारः सैव लता कुशीलता तया सारा कुशीलतासारा इत्यर्थेन कृत इति दिक् । पुनः सुरापगा गङ्गा, किं०, शश्वज्जडा नित्यजडा डलयोरैक्याद् नित्यजला नित्यमूर्खा च, इति हेतोः, अनयोः सीतागङ्गयोः, यस्याः साम्यं न, अस्तीति शेषः । यस्याः

किं०, शीलकौशलयोः संपद् यस्याः सा, अत्र शीलपदेन कुशीलत्वं, कौशलपदेन नित्यजडत्वं चाऽपास्तमिति तत्त्वम् ॥३५॥

कुरङ्गत्वरजोयुक्त्वप्रोन्मादित्वकलङ्किषु ।
न यल्लोचनतुल्यत्वं सारङ्गाम्भोजसीधुषु ॥ ३६ ॥

यल्लोचनयोस्तुल्यत्वं सारङ्गाम्भोजसीधुषु मृगपङ्कजमद्येषु, न, भवतीति योगः । अथ विशेषणद्वारेण तद्धेतुमाह—कुरङ्गत्वरजोयुक्त्वप्रोन्मादित्वलक्षणः कलङ्को येषु ते कुरङ्गत्वरजोयुक्त्वप्रोन्मादित्वकलङ्किनस्तेषु, यतो मृगस्य कुरङ्गत्वात्, पद्मस्य सरजस्त्वात्, मद्यस्य चोन्मादित्वात् दोषदुष्टतेति निगर्वः ॥३६॥

सिंहः कटिर्गतिर्हस्ती मुखं चन्द्रो दृगम्बुजम् ।
नामूनि कलहायन्ते मिथो वैरेऽपि यत्तनौ ॥ ३७ ॥

कटिरूपः सिंहः, गतिरूपो हस्ती, मुखरूपश्चन्द्रः, दृग्रूपं अम्बुजं, अमूनि एतानि, मिथः परस्परं, वैरे सत्यपि, यत्तनौ यस्याः शरीरे, न कलहायन्ते कलिं न कुर्वन्तीति अद्भुतालङ्कृतिः ॥ ३७ ॥

सा भुङ्क्ते स्म भवानीव कौमुदीकान्तशालिना ।
सार्द्धं स्वप्राणनाथेन नाथी सांसारिकं सुखम् ॥३८॥

कौमुदीकान्तशालिना महादेवेन, भवानीव पार्वतीव, सा नाथी, स्वप्राणनाथेन कुंराख्यश्रेष्ठिना, सार्द्धं सांसारिकं सुखं भुङ्क्ते स्माऽभुङ्क्तेति ॥ ३८ ॥

कुंराख्यश्रेष्ठिनः पत्नी सुखसुप्ताऽथ साऽन्यदा ।
बिभर्त्ति स्मोत्तमं गर्भमभ्रमालेव वारिदम् ॥ ३९ ॥

सा कुंराख्यव्यवहारिभार्या सुखसुप्ता सती, अन्यदा उत्त-

मं गर्भं बिभर्त्ति स्म, अभ्राणां माला श्रेणिः, इव वारिदं मेघ-मिति ॥ ३९ ॥

सुरशैलमिवोत्तुङ्गं भास्वन्तमिव भासुरम् ।
हीरराशिं तदैवाशु सा स्वप्नान्तरुदैक्षत ॥ ४० ॥

सुरशैलमिव मेरुमिव, उत्तुङ्गं प्रांशुं, पुनर्भास्वन्तं सूर्यमिव, भासुरं दीप्यमानं, हीरराशिं वज्रपुञ्जं, तदैव क्षणे, सा स्वप्नान्तः स्वापमध्ये, उदैक्षताऽद्राक्षीत् ॥ ४० ॥

पद्मिनीव प्रबुद्धा सा प्रातः प्रोत्फुल्ललोचना ।
तं स्वप्नं पुरतः पत्युः प्रोवाचाऽऽमोदमेदुरा ॥ ४१ ॥

सा नाथी, प्रातः पद्मिनीव प्रबुद्धा सती, किं०, प्रोत्फुल्ललोचना विस्मेरनयना, पुनः किं०, आमोदेन हर्षेण, अन्यत्र गन्धेन, मेदुरा पुष्टा, पत्युः स्वामिनः श्रेष्ठिनः, पुरतस्तं स्वप्नं प्रोवाचाऽब्रवीत् ॥ ४१ ॥

मुक्तेव शुक्तौ तत्कुक्षौ गरभो ववृधेऽथ सः ।
बिभ्रती साऽशुभद् गर्भं तं निधानमिवाऽवनिः ॥४२॥

यथा मुक्ता मुक्ताफलं, शुक्तौ तथा तत्कुक्षौ गरभो गर्भः, स ववृधे अवर्द्धत, तं गर्भं बिभ्रती सा नाथी, अशुभत् शुशुभे, निधानं अवनिर्भूमिः, इवेति दृष्टान्तः ॥ ४२ ॥

प्रभावात्तस्य गर्भस्य सोच्चैर्वाल्लभ्यभूरभूत् ।
शाखेव सहकारस्य फलानां परिपाकतः ॥ ४३ ॥

तस्य गर्भस्य प्रभावात् सा उच्चैरतिशयेन, वाल्लभ्यभूः सौभाग्यस्थानम्, अभूत्, द्रष्टृलोकानामिति गम्यम् । यथा फलानां परिपाकतः परिणतेः, सहकारस्य शाखेति ॥ ४३ ॥

श्रीसंदर्भस्य गर्भस्याऽनुभावात्तस्य दोहदाः ।
बभूवुः सुभगास्तस्याः शस्याभ्युदयहेतवः ॥ ४४ ॥

श्रियो लक्ष्म्याः शोभाया वा संदर्भस्य गुम्फस्य, तस्य गर्भस्य, अनुभावात् तस्याः सुभगा दोहदा बभूवुः, किं०, शस्यः श्रेयान् अभ्युदय उन्नतिस्तद्धेतवः ॥ ४४ ॥

जननी जननीतिज्ञा सद्यः सम्पूर्णदोहदा ।
प्रमोदं प्राप सा प्राप्तस्वर्णसिद्धिरिवाऽधिकम् ॥ ४५ ॥

सा जननी, किं०, जननीतिं जानातीति सा, पुनः किं०, सम्पूर्णानि दोहदानि यस्याः सा, प्रमोदं प्राप्ता, प्राप्तस्वर्णसिद्धिर्यथेति दृष्टान्तः ॥ ४५ ॥

अथो वर्षे शक्तिसिद्धिशिलीमुखसितत्विषि ।
मासे सहसि शीतोस्राऽनवमे नवमे तिथौ ॥ ४६ ॥

अथेति नवमास्यां व्यतिक्रान्तायाम्, शक्तयः प्रभुत्वोत्साहमन्त्रजास्तिस्रः, सिद्धयोऽष्टौ, शिलीमुखा बाणाः पञ्च, सितत्विट् शशी एकः, एतेषां वामगतिगणितानां १५८३ इति संख्या यस्मिंस्तस्मिन् वर्षे, पुनर्मासे सहसि मार्गशीर्षे मासे, पुनर्नवमे तिथौ नवमीवासरे, किं०, शीतोस्रेण चन्द्रेण, अनवमे मनोज्ञे धवले इति यावत्, तिथिशब्दस्य पुंस्त्रीलिङ्गत्वान्नवमे तिथावित्यदुष्टम् ॥ ४६ ॥

पुनः केत्याह—

शुभेऽहनि कलाकेलिकुलं कुवलयप्रियम् ।
पूर्णिमेवैन्दवं बिम्बं साऽसूत सुतमुत्तमम् ॥ ४७ ॥

शुभे निर्दोषे, अहनि नवमरवियोगसद्भावात् श्लाघ्ये दिने,

पूर्णिमेव ऐन्दवं चान्द्रं, बिम्बं तथा सा सुतमसूत, कीदृशं, एकत्र कलाश्चन्द्रकलाः प्रतीतास्तेषां केलेर्लीलायाः कुलं गृहं, अन्यत्र कला लेख्यादिकास्तत्केलिकुलं; पुनरेकत्र कुवलयानां नीलोत्पलानां प्रियं वल्लभं, अन्यत्र कुवलयस्य भूवलयस्य प्रियमिति युग्मव्याख्या ॥ ४७ ॥

तदाऽभूद्दीपकोद्द्योतस्तिरस्तस्य तनुत्विषा ।
यत्तारातेजसां स्तोमः किं स्यादभ्युद्गते रवौ ? ॥४८॥

तदा तज्जन्मक्षणे, तस्य बालस्य, तनुत्विषा तच्छरीरतेजसा, दीपकोद्द्योतस्तिरोऽभूत् पलायितः, यद्धेतोः, तारातेजसां स्तोमः समूहः, अभ्युद्गते रवौ किं स्याद् ? अपि तु नेति ॥४८॥

अनुकूलं मुदां मूलं श्रुत्वा जन्माऽङ्गजन्मनः ।
श्रेष्ठ्यमोदिष्ट सः स्पष्टविष्टपैश्वर्यभागिव ॥ ४९ ॥

अङ्गजन्मनः पुत्रस्य, जन्म, किं०, मुदां प्रमोदानां, अनुकूलं मूलं श्रुत्वा सः श्रेष्ठी अमोदिष्ट मुमुदे, स्पष्टविष्टपैश्वर्यभाक् स्फुटं जगदाधिपत्यभृत् पुमान्, इवेति उत्प्रेक्षार्थे दृष्टान्तार्थे वा ॥ ४९ ॥

अमन्दानन्दकन्दस्य स्थानस्योल्लासवीरुधः ।
अत्यर्थसुभगस्याङ्गजन्मनो जन्मशंसिनाम् ॥ ५० ॥

अमन्दः अनल्पो यः आनन्दस्तस्य कन्द इव कन्दस्तद्धेतोः परमानन्दहेतोरिति यावत्, पुनः किं०, उल्लासवीरुधः हृल्लेखवल्लेः, स्थानस्य, पुनः किं०, अत्यर्थं गाढं सुभगस्य सर्वजनेष्टस्येति यावत्, अङ्गजन्मनः जन्मशंसिनां पुत्रोत्पत्तेर्निवेदकानाम् ॥ ५० ॥

यच्छन् सोऽतुच्छधीर्वर्द्धापनिका नान्तरं व्यधात् ।

वर्षंस्तोयधरस्तोयं किं भवेद्भेदभाग् भुवाम् ?॥५१॥

सोऽतुच्छधीर्महामतिः, वर्द्धापनिका यच्छन् अन्तरं अल्पाऽनल्पप्रदानादिविशेषं, न व्यधात् । एनमेवार्थं दृष्टान्तद्वारेण स्पष्टयति—तोयधरो मेघः, तोयं पानीयं, वर्षन् निम्नानिम्नादिप्रदेशेषु, वर्षणाऽवर्षणादिना भुवां महीनां, भेदभाक् किं भवेत् ? अपि तु नेति युग्मव्याख्येयम् ॥ ५१ ॥

महान् महो महेभ्येन तेनाऽऽरब्धो मुदब्धिना ।
यज्जनौ तादृशां पुंसामुत्सवानामतुच्छता ॥ ५२ ॥

मुदब्धिना हर्षसमुद्रेण, तेन महेभ्येन महान् मह उत्सवः, आरब्ध आरेभे । यतः कारणात्, तादृशां पुंसां पुण्यवतां जनानां, जनौ जन्मनि, उत्सवानामतुच्छता स्यादेवेति ॥ ५२ ॥

मञ्जु मङ्गलगीतानि गीयन्ते स्म तदोकसि ।
न वसन्तोत्सवे किं स्युः कोकिलानां कलोक्तयः ?॥५३॥

तदोकसि तद्गेहे, मञ्जु मनोज्ञं, मङ्गलगीतानि गीयन्ते स्म, नगरलोकैरिति गम्यम् । वसन्तोत्सवे कोकिलानां कला मनोज्ञा-उक्तयः पञ्चमकाकलीलक्षणाः, किं न स्युः अपि तु भवन्त्येवेति ॥ ५३ ॥

तेन दानान्यदीयन्ताऽर्थिनां सार्थे यथार्थनम् ।
प्राज्याः पाथोमुचेवोच्चैरापश्चातकपोतके ॥ ५४ ॥

तेन श्रेष्ठिना, अर्थिनां सार्थे मार्गणानां गणे, यथार्थनं यथायाचितं, दानानि अदीयन्त दत्तानि । दृष्टान्तोऽत्र—यथा पाथोमुचा मेघेन, चातकानां पोतके बालके बप्पीह इति यावत्, आपः पाथांसीति ॥ ५४ ॥

सकर्णा अभणन् कर्णानन्दिनो बन्दिनस्तदा ।
किं क्रीडाक्रीडकाश्यप्यां मञ्जु गुञ्जन्ति नालयः? ॥५५॥

तदा सकर्णाः कोविदाः, पुनः किं०, कर्णानन्दिनः श्रोत्रानन्दकारिणः, बन्दिनः मागधाः, अभणन् भणन्ति स्म, मङ्गलाशीर्वादादिच्छन्दांसि भट्टयोग्यानीति शेषः। क्रीडाक्रीडकाश्यप्यां केलिवनावन्यां, अलयो भ्रमराः, किं न गुञ्जन्ति? अपि तु गुञ्जन्त्येव, मञ्जु इति क्रियाविशेषणम् ॥ ५५ ॥

तदाऽभुर्घुसृणैर्न्यस्ता हस्तकाः शस्तकारिणः ।
बालार्का उत्सवं द्रष्टुं बहुरूपैरिवागताः ॥ ५६ ॥

तदा तज्जन्मनि, घुसृणैः कुङ्कुमैः, न्यस्ताः, पुनः, शस्तकारिणः मङ्गलकारकाः, हस्तकाः स्थासकाः, अभुर्भान्ति स्म, उत्सवं तदुत्पत्तिलक्षणं, बहुरूपैर्द्रष्टुं बालार्कास्तरुणतरणयः, इवोत्प्रेक्ष्यते—आगता इति ॥ ५६ ॥

रेजेऽजिरे तदा न्यस्तो मौक्तिकस्वस्तिकोत्करः ।
गाम्भीर्याद् मामयं बालो जेतेत्यब्धेरिवोपदा ॥५७॥

तदा मौक्तिकस्वस्तिकानां उत्करः समूहः, अजिरे अङ्गणे, गृहस्येति शेषः; न्यस्तो रेजे राजति स्म । अयं बालो गाम्भीर्यात् गम्भीरत्वात्, मां जेता जेष्यति, इति हेतोः, अब्धेः समुद्रस्येव, उपदा प्राभृतम् ॥ ५७ ॥

ढौकितानि पुरीलोकैः प्राविशंस्तद्गृहे तदा ।
प्रोच्चैः पूर्णानि पात्राणि मुदां बीजैरिवाऽक्षतैः ॥५८॥

पुरीलोकैर्नागरजनैः, ढौकितानि, पुनर्मुदां बीजैर्हेतुभिरिव, अक्षतैर्लाजैः, पूर्णानि पात्राणि तद्गृहे तदा प्राविशन् ॥ ५८ ॥

कम्राम्रपत्रैः क्लृप्ताऽभात् तत्रोच्चैस्तौरणी ततिः ।
सौरभ्याद् मामयं जेता सूनुरिष्योपदेति किम् ?॥५९॥

कम्राणि रम्याणि यानि आम्रपत्राणि तैः, क्लृप्ता कृता, तौरणी ततिस्तोरणसंबन्धिनी श्रेणिः, अभाद् भाति स्म। सौरभ्याद् वपुःसुरभित्वात्, अयं सूनुर्मा जेता इति कारणात्, किं इष्योपदा वसन्तस्य प्राभृतमिति ? ॥ ५९ ॥

इत्युत्सवैर्मुदां मूलैर्भूरि भाति स्म तत्पुरम् ।
राजधानी सुखोत्कर्षहर्षक्षोणिपतेरिव ॥ ६० ॥

इत्युक्तरूपैः, पुनर्मुदां मूलैः उत्सवैः तत् प्रह्लादनपुरं, पुरं भूरि भाति स्म। सुखस्योत्कर्षो यत्र स हर्षक्षोणिपतिः प्रमोदराद् तस्य, राजधानी स्कन्धावार इवेति उत्प्रेक्षा ॥ ६० ॥

हीरराशिर्यदुत्तुङ्गः स्वप्नान्तर्ददृशेऽम्बया ।
हीरस्तद् भाविताऽर्भोऽयं विश्वमानवमौलिषु ॥ ६१ ॥

यदिति यतः कारणात्, अस्याऽम्बया मात्रा, स्वप्नान्तः हीरराशिः, किं०, उत्तुङ्गः, ददृशे दृष्टः, तत् कारणात्, अयं अर्भो बालः, विश्वमानवा एव मौलयः, अथवा विश्वमानवानां मौलयः शिरांसि तेषु विश्वमानवमौलिषु; हीरो भविता रत्नं भावीति ॥ ६१ ॥

इति मत्वा पिताऽतुच्छमहोत्सवपुरस्सरम् ।
हीरजीति व्यधात् सूनोर्नाम धाम गुणश्रियाम् ॥६२॥

इति मत्वा ज्ञात्वा, पिता कुंराख्यः श्रेष्ठी, अतुच्छमहोत्सवपूर्वकं सूनोः पुत्रस्य, हीरजीति नाम, किं०, गुणश्रियां धाम गृहं, व्यधात् कृतवान् । अर्थतो युग्ममिदम् ॥ ६२ ॥

कल्पद्रुरिव रम्भाभिर्लाल्यमानः पुरन्ध्रिभिः ।
कुमारः कलयामास कलाभिर्वृद्धिमिन्दुवत् ॥६३॥

रम्भाभिः कल्पद्रुम इव, पुरन्ध्रिभिः कुटुम्बिनीभिः, लाल्यमानः स हीरकुमारः कलाभिः सह, इन्दुवत् चन्द्र इव, वृद्धिं कलयामास आससाद ॥ ६३ ॥

स जहौ क्रमतः क्षीरकण्ठतां शठतामिव ।
ललौ च गुरुतो विद्या वार्द्धेरप इवाम्बुदः ॥ ६४ ॥

स कुमारः, शठतां शाठ्यमिव, क्षीरकण्ठतां बाल्यं, जहौ तत्याज । पुनर्वार्धेः समुद्रात्, अपः पानीयानि, अम्बुद इव गुरुतोऽध्यापकात्, विद्या मातृप्रमुखाः, ललौ जग्राह ॥६४॥

प्राप्ताऽनवद्यविद्यः स दत्ते स्म जगतां मुदम् ।
पीयूषपादः संपूर्णकलोऽब्धेरम्भसामिव ॥ ६५ ॥

प्राप्ताऽनवद्या निर्दोषा विद्या येन सः, स कुमारः, जगतां मुदं दत्ते स्म सम्पूर्णकलः पीयूषपादश्चन्द्रमा, अब्धेः समुद्रस्य, अम्भसां पाथसां, यथेति दृष्टान्तः ॥ ६५ ॥

अथ सच्छाययोः पुष्पदन्तयोरिव सर्वदा ।
क्लेशामयभरध्वंसे दक्षयोर्दस्रयोरिव ॥ ६६ ॥
पुनर्वस्वोरिवाऽजस्रं जगदुल्लासितारयोः ।
सम्यगाराधनापूर्वं पित्रोर्दिवमुपेतयोः ॥ ६७ ॥
कुमारः सोऽन्यदा स्वस्याः स्वसुर्मिलनहेतवे ।
श्रीपत्तनमलञ्चक्रे मनोभूरिव मूर्त्तिमान् ॥ ६८ ॥

अथ श्लोकत्रिकव्याख्या—अथाऽस्मिन्नवसरे, पित्रोर्नाथी-

कुंराख्ययोः, कीदृशयोः, पुष्पदन्तयोः सूर्याचन्द्रमसोरिव, सच्छाययोः सती विद्यमाना प्रशस्ता वा छाया शोभा ययोस्तयोः, पुष्पदन्तपक्षे छायाऽर्कयोषित्, कान्तिश्चेतिः पुनः दस्रयोः स्वर्वैद्ययोरिव, किं०, क्लेश एवाऽऽमयभरो रोगगणस्तस्य ध्वंसे, दक्षयोर्निपुणयोः, अन्यत्र क्लेशहेतुर्य आमयभरस्तस्येति ॥६६॥ पुनः किं०, 'पुनर्वसू तु यामकौ' इति वचनात् पुनर्वस्वोरिव, जगदुल्लासिनी तारे कनीनिके ययोस्तयोः, पक्षे जगदुल्लासिन्यस्तारास्तारकाणि ययोस्तयोः, यतः पुनर्वसुनक्षत्रभुक्तौ मेघवृष्टौ सत्यां जगतां सर्वशस्यसंपत्तेरुल्लासः स्यादिति रत्नमालावृत्तिवचनात् सार्थकं विशेषणम्; पुनः किं०, सम्यगाराधनापूर्वं दिवं स्वर्गम्, उपेतयोर्गतयोः सतोः, ॥६७॥ स किं कृतवानित्याह—स कुमारो हीरजीनामा, अन्यदा मातापित्रोः शोकं मुक्त्वा, स्वस्याः स्वसुर्निजभगिन्याः, मिलनहेतवे मूर्त्तिमान् मनोभूरिव कन्दर्प इव, रूपश्रियेति गम्यम्, श्रीपत्तनं अणहिल्लपाटकनगरं, अलङ्कृत्के व्यभूषयत् । त्रयाणां व्याख्येयम् ॥ ६८ ॥

भगिनी सुभगाकारं वीक्ष्य सोदरमात्मनः ।
चक्रपाणिमिवाऽपर्णा प्रमोदं प्राप पुष्कलम् ॥६९॥

चक्रपाणिं नारायणमिव अपर्णा पार्वती, तज्जामित्वात्, 'भवानी कृष्णमेनाकस्वसा' इति श्रीहेमाचार्यवचनात्; आत्मनः सोदरं, किं०, सुभगाकारं मनोहराकृतिं, वीक्ष्य पुष्कलं प्रचुरं, प्रमोदं प्राप ॥ ६९ ॥

अथ श्रीविजयदानाभिधानान् सूरिसिन्धुरान् ।
नमति स्म कुमारः स पत्तने तत्र तस्थुषः ॥ ७० ॥

अथाऽत्रावसरे, पूर्वं तृतीयसर्गव्यावर्णितगुणावदातान् श्रीविजयदानाभिधानान् सूरिसिन्धुरान्, किं०, तत्र पत्तने नगरे,

तस्थुषस्तदानीं चतुर्मासीं स्थितान्, स कुमारो हीरजीनामा, नमति स्म प्राणमत् ॥ ७० ॥

तत्राऽमीषां मुनीन्द्राणामुपदेशेन शालिना ।
नादेनाऽम्भोमुचां भेजे मुदं बर्हीव हीरजीः ॥ ७१ ॥

तत्र पत्तने, अमीषां मुनीन्द्राणां श्रीविजयदानसूरिगुरूणां, शालिना रम्येण, उपदेशेन अम्भोमुचां मेघानां, नादेन बर्हीव मयूर इव, हीरकुमारो मुदं भेजे हर्षं प्राप्तवानिति ॥ ७१ ॥

वैराग्यवासितो दीक्षां जिघृक्षुः स कुमारराट् ।
समेत्य सदनं सद्यः स्वां स्वसारमदोऽवदत् ॥ ७२ ॥

स कुमारराट्, किं०, वैराग्यवासितोऽत एव दीक्षां जिघृक्षुर्दीक्षां ग्रहीतुकामः सन्, सदनं समेत्य आगत्य, स्वां स्वसारं निजां भगिनीं, अदो वक्ष्यमाणं, अवदत् ॥ ७२ ॥

मया सोदरि ! संसारकमलाकरचन्द्रिका ।
देशना पूज्यपादानां शुश्रुवे श्रुतिशर्मकृत् ॥ ७३ ॥

हे सोदरि भगिनि!, संसार एव कमलानां आकरः समूहः 'आकरो निकरे खनौ' इत्यनेकार्थत्वात्, संसारकमलाकरे भवाम्भोजपुञ्जे चन्द्रिका ज्योत्स्ना, तन्म्लानिहेतुत्वात्; पुनः श्रुत्योः कर्णयोः शर्मकृत् सुखकारिणी, पूज्यपादानां श्रीविजयदानसूरीणां, देशना धर्मोपदेशरूपा, शुश्रुवे श्रुता ॥७३॥

अवश्यमहमादास्ये तपस्यां गुरुसंनिधौ ।
तन्ममानुमतिं देहि हे सहोदरि ! सुन्दरि ! ॥७४॥

गुरोः संनिधौ पार्श्वे, अवश्यं निश्चयेन, तपस्यां दीक्षां, अहं आदास्ये ग्रहीष्यामि, तद्धेतोः, ममानुमतिमनुज्ञां, हे सुन्दरि

भद्रे ! सहोदरि ! देहि दिशेति ॥ ७४ ॥

भ्रात्रेत्यभिहिता साऽश्रुमुखी सा सुमुखी जगौ ।
तर्णकस्येव धूर्वत्स ! तपस्या तव दुर्वहा ॥ ७५ ॥

इति भ्रात्राऽभिहिता प्रोक्ता, सा सुमुखी सुवदना, कीदृशी, अश्रुमुखी सती, जगौ बभाषे। तदेवाह—'वत्सोऽपत्ये, उपलक्षणात् लघुभ्रात्रादावपि' इत्यनेकार्थटीकाकारकवाक्यात्, हे वत्स लघुभ्रातः ! तर्णकस्य वत्सस्येव, धूर्धुरा, तव तपस्या दुर्वहा दुःखेन धार्येत्यर्थः ॥ ७५ ॥

पुनर्यद् बभाषे तदेवाह—

परिणीयाऽधुना तेन वधूं देववधूपमाम् ।
भुङ्क्ष्व भोगांस्तया सौम्य ! समं रत्येव मन्मथः ॥७६॥

तेन हेतुना पूर्वप्रतिपादितेनेति, अधुना सांप्रतं, देववधूपमां सुरस्त्रीतुल्यां, वधूं पत्नीं, परिणीय रत्येव मन्मथः कामः, तया समं, हे सौम्य मनोहर ! भोगान् भुङ्क्ष्वेति ॥ ७६ ॥

ममाधारोऽसि वत्स ! त्वं लताया इव भूरुहः ।
भ्राता हि सुखकृत् स्त्रीणां कृषीणामिव वारिमुक् ॥७७॥

हे वत्स ! लताया भूरुह इव वृक्ष इव, ममाधारस्त्वमेवासीति योगः । हीति यतः, भ्राता स्त्रीणां सुखकृदस्ति, दृष्टान्तमत्राह—कृषीणां इव यथा, वारिमुक् मेघ इति ॥ ७७ ॥

इत्याग्रहरुजं तस्या वैराग्यवचनौषधैः ।
स कुमारोऽगदङ्कार इव सद्यो निराकरोत् ॥ ७८ ॥

स कुमारो हीरनामा, अगदङ्कार इव वैद्य इव, वैराग्यवचनौषधैः संसाराऽसारतादिवाग्भेषजैः, तस्या भगिन्याः, इत्याग्रहरुजं हठरोगं, निराकरोत् न्यक्कुरुते स्मेति ॥ ७८ ॥

अथोपाश्रयमागत्य नत्वा च मुनिसत्तमान् ।
हीरजीर्व्याजहारैवं हारिणं विनयं वहन् ॥ ७९ ॥

उपाश्रयमागत्य मुनिसत्तमान् गुरून्, नत्वा प्रणम्य, च पुनः, हारिणं मनोज्ञं, विनयं वहन् हीरजीकुमार एवं वक्ष्यमाणं, व्याजहारेति जगौ ॥ ७९ ॥

तपस्यामहमादित्सुरस्मि क्लेशविनाशिनीम् ।
भगवन्! भवदभ्यर्णे कूपे पाथ इवाऽध्वगः ॥ ८० ॥

हे भगवन् ! भवदभ्यर्णे युष्मत्समीपे, कूपेऽध्वगः पथिकः, पाथ इव पानीयमिव, क्लेशविनाशिनीं तपस्यामहमादित्सुर्ग्रहीतुमिच्छुः, अस्मीति ॥ ८० ॥

तस्येति वचसाऽऽचार्यवर्या मुमुदिरेतराम् ।
शिष्यरत्नस्य लब्धौ हि हर्ष उत्कर्षभाग् भवेत् ॥८१॥

आचार्यवर्यास्ते पूज्याः, इति तस्य वचसा मुमुदिरेतरां अतिमुदं दधुः, हीति यतो हेतोः, शिष्यरत्नस्य लब्धौ प्राप्तौ सत्यां, हर्ष उत्कर्षभाग् भवेत् महतामप्यतिशायी प्रमोदः स्यादिति ॥८१॥

निरीक्ष्य शस्तैः सामुद्रैर्लक्षितं लक्षणैरिमम् ।
गणेन्द्रैर्निरणायीति भाव्ययं गच्छधूर्वहः ॥ ८२ ॥

शस्तैः प्रशस्तैः, सामुद्रैः सामुद्रिकशास्त्रोक्तैर्लक्षणैः, लक्षितमलंकृतम्, इमं कुमारं, निरीक्ष्य गणेन्द्रैस्तपगच्छपैः, इति निरणायि निर्णयश्चक्रे । इतीति किमित्याह—यदयं शिष्यो गच्छधूर्वहो भावीति ॥ ८२ ॥

अथ दशभिर्दीक्षामहोत्सवं वर्णयति—

सज्जितस्फारशृङ्गारैरस्वप्नैरिव नागरैः ।

गीतैश्च मङ्गलोल्लासैः स्त्रीणामप्सरसामिव ॥८३॥

सज्जिताः संभृताः स्फारा उदाराः शृङ्गारा यैस्तैः, नागरैः पौरैः, अस्वप्नैरिव देवैरिव; पुनः सौभाग्यादिनाऽप्सरसामिव स्त्रीणां मङ्गलोल्लासैर्गीतैर्धवलमङ्गलध्वनिभिः ॥ ८३ ॥

विमानैरिव सदनैः सूत्रितोत्तुङ्गतोरणैः ।
वर्त्मना नन्दनेनेवाऽऽनन्दिना पुष्पपङ्क्तिभिः ॥८४॥

पुनः कैः कीदृशैरित्याह—सूत्रितानि कृतानि उत्तुङ्गानि तोरणानि येषु तैः, सदनैर्मन्दिरैर्विमानैरिव, पुनः पुष्पपङ्क्तिभिः कुसुमश्रेणिभिः, आनन्दिना वर्त्मना मार्गेण, नन्दनेनेव इन्द्रोद्यानेनेवेति ॥ ८४ ॥

देवद्रुमैरिवात्यन्तोदारैर्दत्तधनैर्जनैः ।
गायद्भिर्मधुरं देवगायनैरिव गायनैः ॥ ८५ ॥

पुनः देवद्रुमैः कल्पवृक्षैरिव, अत्यन्तोदारैः दत्तधनैर्जनैः सद्भिरिति, पुनर्मधुरं गायद्भिर्देवगायनैर्हाहाहूहूप्रमुखैरिव, गायनैरिति ॥ ८५ ॥

पौरैश्च पोषितैर्नानाभोजनैरमृतैरिव ।
वर्यतूर्यस्वरैर्दैवदुन्दुभिस्तनितैरिव ॥ ८६ ॥

पुनः पौरैर्नगरीलोकैः, नानाभोजनैर्माधुर्येणाऽमृतैरिव, भोजितैः; पुनः देवदुन्दुभिस्तनितैः सुरवाद्यगर्जितैरिव, वर्यतूर्यस्वरैर्जायमानैरिति ॥ ८६ ॥

भूषितैर्दन्तिभिर्देवदन्ताबलैरिवोद्धुरैः ।
सोत्साहैरुत्सवैरेवं पुरन्दरपुरायितम् ॥ ८७ ॥

पुनर्देवदन्ताबलैः सुरगजैरिव, भूषितैः शृङ्गारितैः, पुनः

उद्धुरैरुत्कटैः, दन्तिभिर्हस्तिभिरिति; एवमितिव्यावर्णितरूपैः, सोत्साहैश्चित्तोत्साहसहितैः, उत्सवैः पुरन्दरपुरायितं सुरेन्द्रनगरमिवाचरितम् ॥ ८७ ॥

पत्तनं पावयन् प्रोच्चैः पीयूषसदृशा दृशा ।
सविस्मयं स्मिताक्षीभिर्गवाक्षस्थाभिरीक्षितः ॥ ८८ ॥

अथ कुमारः, किं०, पत्तनं अणहिल्लपाटकपुरं, पीयूषसदृशा सुधातुल्यया, दृशा दृष्ट्या, पावयन् पवित्रयन्, पुनः सविस्मयं साश्चर्यं, गवाक्षस्थाभिः स्मिताक्षीभिः स्त्रीभिः, ईक्षितो विलोकितः ॥ ८८ ॥

सामोदकुसुमस्तोमचामरच्छत्रराजितः ।
मौक्तिकैः काञ्चनै रात्नैरलङ्कारैरलङ्कृतः ॥ ८९ ॥

पुनः सामोदैः सगन्धैः कुसुमस्तोमैः पुष्पपुञ्जैः कण्ठन्यस्तैर्माल्यादिग्रथितैः, चामरैर्वालव्यजनैरुभयतो वीज्यमानैः, छत्रैरातपत्रैश्च शिरसि ध्रियमाणैः, राजितः शोभितः; पुनः मौक्तिकैर्मुक्तासम्बन्धिभिः, काञ्चनैः स्वर्णसंबन्धिभिः रात्नैर्मणिसंबन्धिभिः, अलङ्कारैर्भूषणैः, अलंकृतो भूषित इति ॥ ८९ ॥

सारसिन्दूरपूरेण बन्धुरे सिन्धुरे स्थितः ।
कुङ्कुमैश्चन्दनैश्चोक्षैश्चर्चितश्चारुचीरभृत् ॥ ९० ॥

सारेण सिन्दूरपूरेण बन्धुरे मनोहरे, सिन्धुरे गजे, स्थितश्चटितः; पुनश्चोक्षैरनवस्करैः कुङ्कुमैर्घुसृणैः, चन्दनैर्हरिचन्दनैः, चर्चितोऽर्चितः; पुनश्चारुचीरभृत् दिव्याम्बरपरिधानः ॥ ९० ॥

स्फारशृङ्गारया सारं रथमास्थितया पथि ।
अनुगम्यमानः स्वस्रा विमलाईतिसंज्ञया ॥ ९१ ॥

पुनः स्फारा उदाराः शृङ्गारा मज्जनादयो निर्मिता यया तया, पुनः सारं रथं आस्थितया आरूढया, पथि मार्गे, विमलाई इति संज्ञा यस्यास्तया विमलाईनाम्न्या भगिन्या, अनुगम्यमानः ॥ ९१ ॥

शोभितः सुमनोवृन्दैः सुरेन्द्र इव मूर्त्तिमान् ।
सोऽन्तर्नगरमुल्लासी निर्जगाम शनैः शनैः ॥९२॥

पुनर्मूर्त्तिमान् सुरेन्द्र इव, कीदृशः, सुमनोवृन्दैः शोभितः कुमारपक्षे सुमनसां सज्जनानां पुष्पाणां वा, अन्यत्र सुमनसां देवानां, वृन्दैर्भ्राजितः स कुमारः, अन्तर्नगरं शनैः शनैर्निर्जगाम, वनं प्रति जगाम चेति शेषः । दशभिः श्लोकैरन्त्यक्रियं कुलकं व्याख्यातम् ॥ ९२ ॥

विक्रमाद् रसनन्देषुद्विजेशे परिवत्सरे ।
बाहुलस्य बहुलायां द्वितीयायां शुभेऽहनि ॥ ९३ ॥

विक्रमात् श्रीविक्रमादित्यभूपतेः, रसाः षट्, नन्दा नव, इषवः पञ्च, द्विजेशश्चन्द्र एकः; एते वामगतिगणिताः १५९६ इतिसंख्याका यत्र तत्र, परिवत्सरे संवत्सरे, पुनर्बाहुलस्य कार्त्तिकस्य, बहुलायां कृष्णायां, द्वितीयायां तिथौ, शुभेऽहनि वासरे ॥ ९३ ॥

असौ श्रीविजयदानसूरिसिन्धुरसांनिधौ ।
पर्यणैषीत् परिव्रज्यापत्नीं पद्मामिवाच्युतः ॥ ९४ ॥

असौ हीरकुमारः, श्रीविजयदानसूरिसिन्धुराणां संनिधौ समीपे, परिव्रज्यापत्नीं दीक्षादयितां, पर्यणैषीत् परिणीतवान् । कः कामिवेत्याह—अच्युतो विष्णुः, पद्मां लक्ष्मीमिव, इति दृष्टान्तः । युग्मव्याख्या ॥ ९४ ॥

सहर्षं हीररहर्षाह्वो मुनिर्गुणमहोदधिः ।
कलभः कुञ्जरेणेव व्यहार्षीद् गुरुणा समम् ॥९५॥

हीरहर्ष इति आह्वा संज्ञा यस्य सः, पुनर्गुणानां ज्ञानदर्शनचारित्रादीनां महोदधिर्महार्णवः, स मुनिः कुञ्जरेण यूथनाथेन, कलभः कुञ्जरबाल इव, गुरुणा समं सहर्षं व्यहार्षीद् विजहार ॥ ९५ ॥

महाव्रतानि पञ्चापि पञ्चापि समितीः पुनः ।
गुप्तीस्तिस्रश्च स मुनिः पालयामास यत्नतः ॥९६॥

पञ्च महाव्रतानि सर्वतः प्राणातिपातमृषावादाऽदत्ताऽऽदानाऽब्रह्मपरिग्रहविरमणरूपाणि, पुनः पञ्च समितीः ईर्याभाषैषणाऽऽदाननिक्षेपोत्सर्गलक्षणाः, पुनर्गुप्तीस्तिस्रोऽशुभमनोवचनकाययोगनिग्रहरूपाः, स मुनिर्हीरहर्षः, पालयामास ॥ ९६ ॥

सेवमानो गुरुं देवोद्यानं विबुधसेवितम् ।
विनयामरसालस्य फलं विद्यां स लेभिवान् ॥९७॥

एकत्र विबुधैर्देवैः, अन्यत्र पण्डितैः सेवितं गुरुं देवोद्यानं नन्दनवनं, सेवमानो भजमानः, स शिष्यः, विनय एवाऽमरसालः कल्पवृक्षस्तस्य, फलं विद्यां सकलशास्त्रपाठरूपां, लेभिवान् प्राप्तवानिति ॥ ९७ ॥

सोऽप्रमत्तः पपौ सर्वं शास्त्रं स्वं स्वगुरोः सुधीः ।
ग्रीष्मतप्तो भुवां भाग इवाऽब्दान्निपतत् पयः ॥९८॥

स हीरहर्षः शिष्यः, किं०, अप्रमत्तः सन् प्रमादरहितो भूत्वा, सर्वं शास्त्रं, किं०, स्वं निजदर्शनसंबन्धि, स्वगुरोः श्रीविजयदानसूरेः, पपौ अत्यादरेणाऽऽकर्ण्य हृदयेऽस्थापयत्, भवति

हि आदरेणाकर्णने पानमिति प्रयोगः, यथा नैषधाख्यमहा-काव्याऽऽदिमकाव्ये–'निपीय यस्य क्षितिरक्षिणः कथाः' इत्यत्र कथा निपीयेति कथा निपीयाऽत्यादरेण आकर्ण्येति व्याख्याने, तथा पपावत्रापि अत्यादरेण भणति स्मेति भावार्थः । दृष्टान्तो यथा–ग्रीष्मेण निदाघेन, तप्तो भुवां भागो महीप्रदेशः, अब्दाद् मेघात्, निपतत् पयः पानीयं, पिबतीति ॥ ९८ ॥

हीरहर्षमसंहर्षमात्तात्मसमवाङ्मयम् ।
गुरुर्गुरुमिवाऽऽलोक्य दध्यावित्यन्यदा हृदि ॥९९॥

असंहर्षं अमत्सरं, हीरहर्षं मुनिं, पुनः किं०, आत्तानि गृहीतानि आत्मनः समानि तुल्यानि समानि समस्तानि वा वाङ्मयानि येन तं, पुनः किं०, गुरुं बृहस्पतिमिव, बुद्ध्वेत्य-ध्याह्रियते, आलोक्य गुरुरिति वक्ष्यमाणं, हृदि दध्यौ ध्यात-वान् ॥ ९९ ॥

तदेवाह—

स्वकीयं परकीयं च योऽधीते वाङ्मयं सुधीः ।
आविष्कर्त्तांशुमालीव स स्यात् सदसतोः पथोः ॥१००॥

स्वकीयं परकीयं च वाङ्मयं यः सुधीरधीते पठति, स अंशुमाली सूर्य इव, सदसतोः प्रशस्ताऽप्रशस्तयोः, पथोर्मार्गयोः, आविष्कर्त्ता प्रादुर्भावकः स्यादिति ॥ १०० ॥

पुनर्गुरुचिन्तितमेवाह—

हीरहर्षगणिर्नूनं शैवदर्शनशास्त्रवित् ।
यदि जायेत तत् साधु यदसौ बहुबुद्धिभृत् ॥१०१॥

यदि हीरहर्षगणिर्नूनं निश्चितं, शैवदर्शनशास्त्राणि नैया-यिकप्रमाणप्रकरणानि वेत्तीति स शैवदर्शनशास्त्रवित्, जायेत

भवेत्, तत् साधु भव्यं भवति, यतः कारणात्, असौ बहुबुद्धिभृद् वर्त्तत इति ॥ १०१ ॥

ध्यात्वेति प्रेरितः सम्यक् शिष्योऽसौ सूरिपुङ्गवैः ।
अगस्त्याध्यासितदिशो देशे गन्तुमना अभूत् ॥१०२॥

इति ध्यात्वा सूरिपुङ्गवैः प्रेरितः सन्नसौ शिष्यः अगस्त्याध्यासिता दिग् दक्षिणा तस्याः, देशे दक्षिणदेशे, गन्तुमना-अभूत् ॥ १०२ ॥

श्रीधर्मसागरगणिप्रमुखैश्च महर्षिभिः ।
युतश्चतुर्भिर्दानाद्यैर्भेदैर्धर्म इवाऽङ्गवान् ॥ १०३ ॥

चतुर्भिर्महर्षिभिः, किं०, श्रीधर्मसागरगणिप्रमुखैः, युतः सहितः, इवोत्प्रेक्ष्यते--दानाद्यैर्दानशीलतपोभावैः, चतुर्भिर्भेदैः धर्म इव अङ्गवान् मूर्त्तिमानिति ॥ १०३ ॥

ईदृग्विधः स कृतवान् किमित्याह—

विजहार हीरहर्षः सहर्षस्तत्र नीवृति ।
नभःकूलङ्कषाकूले कलहंस इवाऽमलः ॥ १०४ ॥

सहर्षो हीरहर्षगणिस्तत्र तस्मिन्, नीवृति देशे, विजहार विहृतवान् । दृष्टान्तमाह--नभःकूलङ्कषाकूले गङ्गातटे, कलहंस-इवेति युग्मव्याख्या ॥ १०४ ॥

तत्र देवगिरौ देवगिराविव महोन्नते ।
पञ्चर्षयस्तेऽस्थुर्ज्येष्ठस्थिति देवद्रुमा इव ॥ १०५ ॥

देवगिरौ मेराविव, महोन्नते तत्र तस्मिन्, देवगिरौ दुर्गे, ते पञ्चर्षयो ज्येष्ठस्थिति अस्थुः स्थिताः, देवद्रुमाः पञ्चापि, इवोत्प्रेक्ष्यते, युज्यते हि देवगिरौ पञ्चदेवद्रुमाणां स्थितिरिति ॥

प्रतिबिम्बमिवादर्शे चिन्तामण्यादि वाङ्मयम् ।
सर्वं तद्धृदि संक्रान्तं जाह्नवीजलनिर्मले ॥१०६॥

आदर्शे दर्पणे, प्रतिबिम्बमिव सर्वं चिन्तामण्यादि वाङ्मयं शैवप्रमाणशास्त्रं, जाह्नवीजलनिर्मले गङ्गासलिलविमले, तद्धृदि तस्य हृदये, संक्रान्तम् ॥ १०६ ॥

अधीत्य शैवशास्त्रं तत् तत्राऽयं निखिलं खलु ।
गूर्जरत्रामगाद् वार्धौ लात्वा नीरमिवाऽम्बुदः ॥१०७॥

तत्र देवगिरौ, तन्निखिलं समस्तमपि, शैवशास्त्रं अधीत्य भणित्वा, वार्धौ समुद्रे, नीरं लात्वा अम्बुद इव गूर्जरत्रामगात् ॥ १०७ ॥

स्वकीयपरकीयाभ्यां शास्त्राभ्यां शास्त्रवित्तमः ।
अधीताभ्यामभाद् द्वाभ्यां स दोर्भ्यामिव शूरराट् ॥१०८॥

स शास्त्रवित्तमः अतिविद्वान्, स्वकीयपरकीयाभ्यां निजाऽनिजाभ्यां, शास्त्राभ्यामधीताभ्यां अभात् शुशुभे, यतः पण्डितानां स्वसमयपरसमयाभ्यां शोभा भूयसी भवेत् । अत्र दृष्टान्तमाह--इव यथा, शूरराट् महाशूरः पुमान्, दोर्भ्यां बाहुभ्यां शोभते, प्रकृष्टशूराणां हि भुजबलेनैव सुतरां शोभा; यतः शौर्यश्रीः शूराणां भुजदण्ड एव वर्ण्यते 'शौर्यश्रीर्भुजदण्डमण्डपतले सिंहीव विश्राम्यति' इत्यादाविवेति ॥ १०८ ॥

गुरूनथ मरौ मत्वा हीरहर्षगणिर्गुणी ।
जगाम तत्र स्वर्वापीप्रवाह इव पावनः ॥ १०९ ॥

अथ गुरून् मरौ मरुस्थलीनाम्नि देशे, मत्वा हीरहर्षगणिस्तत्र जगाम, स्वर्वापीप्रवाह इव गाङ्गौघ इव, पावनः पवित्र इति ॥ १०९ ॥

तत्र त्रिजगतां पूज्यैः पूज्यपादैरलंकृताम् ।
श्रीनारदपुरीं प्रौढप्रासादां प्राप स प्रभुः ॥ ११० ॥

तत्र देशे, त्रिजगतां त्रिभुवनानां, पूजनीयैः पूज्यपादैः श्रीविजयदानसूरिभिः, अलङ्कृतां भूषितां, पुनः किं०, प्रौढप्रासादां तुङ्गविहारां, श्रीनारदपुरीं नगरीं, स प्राप ॥ ११० ॥

भणित्वाऽष्टोत्तरं नव्यकाव्यानां शतमग्रतः ।
ललाटपट्टसङ्घट्टिकोटीरायितपाणिना ॥ १११ ॥

नव्यानां तात्कालिकानां, काव्यानां अष्टोत्तरं शतं भणित्वा कथयित्वा, कथम्, अग्रतः पुरः, ललाटपट्टे सङ्घट्टिनौ कोटीरायितौ किरीटीभूतौ पाणी हस्तौ यस्य तेन ॥ १११ ॥

साक्षात् पुंरूपया वाचामधिदेवतयेव ते ।
हीरहर्षेण हर्षेण गुरवोऽथ ववन्दिरे ॥ ११२ ॥

पुनः साक्षात् प्रत्यक्षया, पुंरूपया पुरुषमूर्त्या, वाचामधिदेवतयेव भारत्येव, हीरहर्षेण हर्षेण प्रमोदेन, ते गुरवो ववन्दिरे वन्दिताः । युग्मव्याख्या ॥ ११२ ॥

परिपूर्णकलं पुत्रं प्रेक्ष्याऽमी सूरिशेखराः ।
उल्लसन्ति स्म शीतांशुमिव वारिधिवीचयः ॥११३॥

अपत्यशिष्ययोः समानधर्मत्वात् पुत्रं शिष्यं, किं०, परिपूर्णकलं विद्वत्कलासम्पन्नं, प्रेक्ष्य अमी सूरिशेखरा गुरवः, उल्लसन्ति स्म । शीतांशुं चन्द्रं, प्रेक्ष्य वारिधिवीचयः समुद्रोर्मय इवेति दृष्टान्तः ॥ ११३ ॥

तत्रैव नगरे वर्षे सप्तव्योमर्तुभूमिते ।
शुभेऽह्नि ललिते लग्ने प्रासादे वृषभप्रभोः ॥११४॥

तत्रैव नगरे नारदपुरीनामके, पुनर्वर्षे, किं०, सप्तव्योमर्तु-भूवाचकैः अङ्कैर्वामगतया विन्यस्तैः १६०७ इतिसंख्यया मिते, पुनः शुभे श्लाघ्ये, अहनि दिने, पुनर्ललिते लग्ने वहमाने सति, पुनर्वृषभप्रभोः प्रासादे ॥ ११४ ॥

किं कृतमित्याह—

सत्यङ्कारमिवाचार्यपदप्रकटसंपदाम् ।
विद्वत्पदं पदं कीर्त्तेर्गुरवो ददिरेऽस्य ते ॥ ११५ ॥

आचार्यपदप्रकटसम्पदां सूरिपदश्रीणां, सत्यङ्कारमिव कीर्त्तेः पदं स्थानं, विद्वत्पदं पण्डितपदं, गुरवः अस्य शिष्यस्य, ददिरे दत्तवन्तः । इति युग्मव्याख्या ॥ ११५ ॥

तत् पण्डितपदं हीरहर्षे विदुषि धीजुषि ।
सुवर्णे हीरवद् रेजे सार्द्धषोडशवर्णिके ॥ ११६ ॥

हीरहर्षे विदुषि पण्डिते, किं०, धीजुषि मतिमति, तत् पण्डितपदं सार्द्धषोडशवर्णिके सुवर्णे हीरवद् रेजे राजति स्मेति ॥११६॥

अथानघेन संघेन श्रीनारदपुरीपुरः ।
पुनर्विज्ञपयांचक्रे तपागच्छाधिभूर्विभुः ॥ ११७ ॥

अथेत्येकवर्षानन्तरं, पुनः श्रीनारदपुरीति पुरः पुर्याः, अनघेन सङ्घेन तपागच्छाधिभूर्विभुः श्रीविजयदानसूरिः, विज्ञपयांचक्रे विज्ञप्त इति ॥ ११७ ॥

विदुषां हीरहर्षाणामुपाध्यायपदं प्रभो ! ।
संघाशावल्लिविस्तारवारिदानां प्रदीयताम् ॥ ११८ ॥

हे प्रभो ! हीरहर्षाणां विदुषां पण्डितानां, किं०, सङ्घस्य

आशा वाञ्छा सैव वल्लिस्तस्या विस्तारे वारिदानां उपाध्याय-पदं प्रदीयतां, भवद्भिरिति शेषः ॥ ११८ ॥

पुण्याहूतनिजाकूताऽव्यभिचारिणि चारुणि ।
सङ्घस्य वचनेऽमुष्मिन् सूरेश्चित्तममोदत ॥ ११९ ॥

पुण्येन आहूतं आकारितं पुण्याहूतं भाग्यलभ्यं यन्निजं आकूतं अभिप्रायस्तस्याऽव्यभिचारिणि अविसंवादिनि स्वाभिप्रायानुसारिणीति यावत्, पुनश्चारुणि रम्ये, अमुष्मिन् सङ्घस्य वचने सति, सूरेश्चित्तममोदत मुमुदे ॥ ११९ ॥

अथ चतुर्णा व्याख्या—

संवत्सरेऽथ पृथ्वीध्रसुराध्वरसशीतगौ ।
माघे मास्यमृतज्योतिःपञ्चमे पञ्चमे तिथौ ॥१२०॥

अथाऽन्यदाऽप्येकवर्षानन्तरं, संवत्सरे, किं०, कुलाचलानामष्टसंख्यत्वात् पृथ्वीध्राः पर्वता अष्टौ, सुराध्वा गगनं बिन्दुः, रसाः षट्, शीतगुश्चन्द्रमा एकः; एतेऽङ्का वामतो मीलिताः १६०८ इति संख्याका यत्र तत्र वर्षे, पुनर्माघे मासि, पुनः अमृतज्योतिषा चन्द्रेण पञ्चमे रम्ये शुभ्र इति यावत्, पञ्चमे तिथौ ॥ १२० ॥

श्रीनारदपुरीनाम्नि पुरेऽत्युत्सवसुन्दरे ।
वरकाणाभिधानश्रीपार्श्वतीर्थेशसाक्षिकम् ॥ १२१ ॥

पुनः अत्युत्सवैः सुन्दरे नारदपुरीनाम्नि पुरे नगरे, पुनर्वरकाणाभिधानश्रीपार्श्वतीर्थेशस्य तदानीं तत्र स्थितस्य साक्षिकम् ॥ १२१ ॥

चैत्ये श्रीनेमिनाथस्य सनाथस्याऽद्भुतश्रिया ।
सम्यक् संमतिमादाय साधूनां गच्छवासिनाम्॥१२२॥

पुनरद्भुतश्रिया सनाथस्य श्रीनेमिनाथस्य चैत्ये प्रासादे, नगरमध्यवासस्थ इति शेषः, पुनर्गच्छवासिनां साधूनां संमतिमनुज्ञां, आदाय लात्वा, यतस्तदानीं तथाविधमध्यस्थगीतार्थानुज्ञापूर्वकमेव वाचकादिपदप्रदानमासीदिति प्रवृत्तेः, तेन साधूनां संमतिमादायेत्युक्तमिति तात्पर्यम् ॥ १२२ ॥

उपाध्यायपदेऽस्थापि हीरहर्षः स सूरिभिः ।
स्थानेऽङ्कूर इवाचार्यपदर्द्धिवरवीरुधः ॥ १२३ ॥

स हीरहर्षपण्डितः सूरिभिरुपाध्यायपदेऽस्थापि स्थापितः, आचार्यपदर्द्धिरेव वरा वीरुद् वल्लिस्तस्याः, स्थाने आलवाले, अङ्कूर इवेत्युत्प्रेक्षा। चतुर्भिरन्त्यक्रियं कलापकं व्याख्यातम् ॥ १२३ ॥

शुशुभे श्रीतपागच्छस्तेन वाचकचक्रिणा ।
काननं कुञ्जरेणेव दानवारिविराजिना ॥ १२४ ॥

तेन वाचकेषु चक्रिणा चक्रवर्तिना, श्रीतपागच्छः शुशुभेऽशोभिष्ट । दृष्टान्तोऽत्र—यथा दानवारिविराजिना वाचकपक्षे दानवारिर्नारायणस्तद्वद्विराजिना, सौभाग्येनेति शेषः, कुञ्जरपक्षे दानवारिणा मदजलेन विराजिना मनोज्ञेन कुञ्जरेण, काननं वनमिति ॥ १२४ ॥

आधिपत्यं गणस्याऽस्य भविता दीप्तिमत्तमम् ।
श्रीहीरहर्षोपाध्याये वज्रिणीव दिवः सदा ॥ १२५ ॥

अस्य गणस्य तपागच्छस्य, आधिपत्यं साम्राज्यं, श्रीहीरहर्षोपाध्याये वज्रिणि शक्रे, दिवः स्वर्गस्येव, दीप्तिमत्तमं देदीप्यमानं, भविता भावि ॥ १२५ ॥

ध्यात्वेति सूरयः सूरिमन्त्राराधनमुत्तमम् ।

विधिना साधु सीरोहीनगरे चक्रिरेऽन्यदा ॥ १२६ ॥

इति ध्यात्वा सूरयः सीरोहीनगरे सूरिमन्त्राराधनं साध्विति क्रियाविशेषणं, चक्रिरे चक्रुः । अर्थतो युगलम् ॥१२६॥

अथाऽऽसीत् सूरिमन्त्रस्याधिष्ठायकसुरः पुरः ।

प्रत्यक्षः प्रेष्यवत् प्रोच्चैः प्रमनाः सूरिहस्तिनाम् ॥१२७॥

अथ मासत्रयान्ते सूरिमन्त्रस्याऽधिष्ठायकसुरः, किं०, प्रमना-हृष्टमनाः सन्, सूरिहस्तिनां तेषां, पुरः प्रेष्यवत् प्रत्यक्षः प्रकटः, आसीत् ॥ १२७ ॥

वाचको हीरहर्षाख्य आख्यातः शमिनां गुणैः ।

स्वस्मिन् पट्टे प्रभो! स्थाप्यः प्रतिबिम्ब इवात्मनः ॥१२८॥

शमिनां साधूनां, गुणैराख्यातः प्रकामं प्रसिद्धिमान्, हीरहर्षाख्यो वाचकः स्वस्मिन् पट्टे हे प्रभो! स्थाप्यः, अयं कीदृग् इत्याह—आत्मनः प्रतिबिम्ब इवेति, अनेन गुरुशिष्ययोर्नान्तरमिति सूचितम् । प्रतिबिम्ब इत्यत्र बिम्बशब्दस्य पुंनपुंसकत्वाद् बिम्ब-इत्यदुष्टम् ॥ १२८ ॥

इत्युक्त्वा पूजयित्वा च मौक्तिकैरक्षतैरिव ।

यथागतं सुपर्वाऽयमभ्यागत इवागमत् ॥ १२९ ॥

इत्युक्त्वा कथयित्वा, पुनः अक्षतैरिव मौक्तिकैः पूजयित्वा, अभ्यागतः अभिमुखं आगतोऽभ्यागतो मिलनायाऽऽगतेष्ट इव, अयं सुपर्वा देवः, यथागतं तथाऽगमद् गतवानिति ॥ १२९ ॥

वचनेनाऽमुना धैर्यवर्या आचार्यपुङ्गवाः ।

कृषीबला इवाऽम्भोदगर्जितेन मुदं दधुः ॥ १३० ॥

धैर्येण वर्या आचार्यपुङ्गवास्ते, अम्भोदनादेन जलदगर्जि-

तेन, कृषीबला इव कर्षका इव, अमुना वचनेन देवोक्तेन, मुदं दधुर्मुमुदिरे ॥ १३० ॥

अहो ! वचनमेतस्य दैवतस्य महात्मनः ।
अर्थ उक्तेरिव मदाशयस्याऽव्यभिचार्यभूत् ॥ १३१ ॥

अहो इत्याश्चर्यवाचकोऽव्ययः, एतस्य दैवतस्याऽस्य देवस्य, वचनं महात्मन उक्तेरिव आप्तपुरुषवाक्यस्येव, अर्थोऽभिधेयो यथा अव्यभिचारी भवति तथा, मदाशयस्य मच्चित्तस्य, अव्यभिचारि अभूत् ॥ १३१ ॥

चिन्तयित्वेति चित्तान्तश्चिरं सूरिपुरन्दरैः ।
पृष्टाः प्रोचुर्यथाकाममिति सर्वेऽपि साधवः ॥१३२॥

इति सूरिपुरन्दरैश्चित्तान्तश्चिन्तयित्वा सर्वेऽपि साधवः पृष्टाः सन्तः, यथाकाममिति प्रोचुर्यथा रुचिर्भवतां तथाऽस्त्विति कथयामासुः । अर्थतो युग्ममिदम् ॥ १३२ ॥

अब्देऽथ शुद्धे धिष्ण्याध्वधिष्ण्येशर्तुधरामिते ।
दशम्यां सहसो मासो विशदद्युतिसंपदि ॥ १३३ ॥

अथ अब्दे वर्षे, कीदृशे, शुद्धे गुर्वस्तशुक्रास्तादिना वर्जिते, पुनः किं०, धिष्ण्याध्वा गगनं, धिष्ण्येशश्चन्द्र एकः, ऋतवः षट्, धरा एका, तद्वाचकैरङ्कैर्वामगत्या विन्यस्तैः १६१० इति सङ्ख्यया मिते, पुनः सहसो मासो मार्गशीर्षस्य मासस्य, दशम्यां तिथौ, किं०, विशदद्युतेश्चन्द्रस्य सम्पद् यत्र तत्र विशदद्युतिसंपादि मार्गशीर्षशुक्लदशम्यामिति ॥ १३३ ॥

अथ द्वादशभवनविभागेन तल्लग्नकुण्डलिका यथा—

कर्के राहौ शनौ कुम्भे सौम्यमार्त्तण्डयोरलौ ।

गुरौ भृगौ च कन्यायां मीने कुमुदिनीपतौ ॥१३४॥

| १०के | ९ मं | बु ८ र |
| --- | --- | --- |
| ११श | | ७ |
| चं १२ | श्रीः | शु ६ बृ |
| १ | | ५ |
| २ | ३ | ४ रा |

राहौ कर्केऽष्टमे भवने सति, पुनः शनौ कुम्भे स्वक्षेत्रे तृतीयभवने सति, पुनः सौम्यमार्त्तण्डयोः अलौ वृश्चिके द्वादशे भवने स्थितयोः, पुनर्गुरौ सुराचार्ये भृगौ शुक्रे च कन्यायां दशमे भवने सति, पुनः कुमुदिनीपतौ चन्द्रे मीने चतुर्थे भवने सति; इति नवग्रहसंस्था ॥१३४॥

अंशैश्च बलिभिः सर्वैर्धनुर्लग्ने समङ्गले ।
अष्टादशभिरदुष्टे दोषैर्वेधादिभिर्दिने ॥ १३५ ॥

च पुनः, अंशैः पञ्चमांशनवांशादिभिर्लग्नांशैः, सर्वैर्बलीयोभिर्वर्त्तमानैः, पुनः धनुर्लग्ने, किं०, समङ्गले भौमसहिते वहमाने सति, पुनः अष्टादशसंख्याका ये मुहूर्तदोषास्ते यथा—

"स्युर्वेधः पातलत्ते ग्रहमलिनमुडु क्रूरवारा ग्रहाणां
जन्मर्क्षं विष्टिरर्द्धप्रहरककुलिकोपग्रहक्रान्त्यवस्थाः ।
कर्कोत्पातादिघण्टो विगतबलशशी दुष्टयोगोऽर्गलाख्यो
गण्डान्तो दग्धरिक्तप्रमुखतिथियुतो नामतोऽष्टादशैते" ॥१॥

एतैर्वेधादिभिर्दोषैरदुष्टे दिने ॥ १३५ ॥

पुरे शिवपुरीनाम्नि महोत्सवमनोहरे ।
सङ्गते सङ्घसङ्घातेऽनघे मञ्जुमनोरथे ॥ १३६ ॥

पुनर्महोत्सवैर्मनोहरे शिवपुरीनाम्नि पुरे सीरोहीनामके नगरे, पुनरनघे निष्पापे, पुनर्मञ्जुमनोरथे मनोज्ञाभिलाषे, संघस्य

चतुर्विधस्य संघाते समुदाये, संगते मिलिते सति ॥ १३६ ॥

हर्षेण हीरहर्षाणां वाचकानां गणाधिपाः ।
गच्छैश्वर्यं तरोर्बीजमिवाचार्यपदं ददुः ॥ १३७ ॥

गणाधिपाः श्रीविजयदानसूरयः परमगुरवः, हर्षेण हीर-हर्षाणां वाचकानां गच्छैश्वर्यतरोस्तपागणसाम्राज्यवृक्षस्य, बीजमिव आचार्यपदं सूरिपदवीं, ददुर्दत्तवन्तः। इति श्लोकपञ्च-कव्याख्या । अन्त्यक्रियं कुलकमिदम् ॥ १३७ ॥

वशक्रियाया जगतां मूलमन्त्रमिवानघम् ।
नामापि हीरविजय इत्येषां गुरवो व्यधुः ॥१३८॥

जगतां स्वर्गमर्त्यपातालानां, वशक्रियाया वशीकारस्य, मूलमाद्यं मन्त्रमिव, एषां वाचकानां, गुरवः पूज्याः, हीरविजय-इति नाम व्यधुश्चक्रुः, सूरिपददाने श्रीहीरविजयसूरिरिति नाम स्थापितम् ॥ १३८ ॥

इदं सूरिपदं प्राप्य तेजसामेकमास्पदम् ।
दिदीपेऽधिकमाचार्यो मध्याह्नमिव भास्करः ॥१३९॥

इदं सूरिपदं, किं०, तेजसां प्रभावानां, सूर्यपक्षे तेजसां त्विषां, आस्पदं स्थानं, प्राप्य मध्याह्नं मध्यन्दिनं, भास्कर-इव स आचार्योऽधिकं दिदीपे देदीप्यमानोऽभूदिति भावः ॥१३९॥

सूरिश्च युवराजश्च द्वावेतौ सदृशक्रमौ ।
गच्छचिन्तां वहतः स्माऽनोधुरां वृषभाविव ॥१४०॥

सूरिः श्रीविजयदानसूरिः, युवराजः श्रीहीरविजयसूरिः, एतौ द्वौ गच्छनायकौ, अनसः शकटस्य धुरां, वृषभाविव गच्छ-चिन्तां वहतः स्म दधतुः । कीदृशौ, सदृशक्रमौ वृषभपक्षे सदृशाः

क्रमाः शक्तयो ययोस्तौ, गुरुपक्षे सदृशः क्रमः कल्पः साध्वाचारो ययोस्तौ ॥ १४० ॥

अभूद् दीप्तिमतोः शश्वत् सूरीशयुवराजयोः ।
गच्छे तेजोऽद्भुतं व्योम्नि सूर्याचन्द्रमसोरिव ॥१४१॥

व्योम्नि गगने, सूर्याचन्द्रमसोः पुष्पदन्तयोरिव, किंभूतयोः, दीप्तिमतोः सूरीशयुवराजयोर्गच्छेन्द्राचार्ययोस्तयोः, तेजोऽद्भुतमाश्चर्यकारि, अभूद् गच्छे तपागच्छे ॥१४१॥

क्रमात् कुङ्कणदेशोर्वीमुखमण्डनमुत्तमम् ।
भूषयन्ति स्म ते सूरिसूराः सूरतिबन्दिरम् ॥१४२॥

अनुक्रमेण सीरोहीनगरतो विहरन्तस्ते सूरिसूरा आचार्यसूर्याः श्रीविजयदानसूरिपादाः, श्रीहीरविजयसूरिं पत्तने चतुर्मासीकरणायाऽऽदिश्य स्वयं कुङ्कणदेशस्योर्वी मही तन्मुखे मण्डनमलङ्कृतिकृत्, सूरतिबन्दिरं भूषयन्ति स्माऽलश्चक्रुः ॥१४२॥

असमकुसुमे ताम्राक्षाणामिवाम्रतरौ वने
सरसि सरसे रोलम्बानामिवाम्बुरुहे स्मिते ।
इह निवसतां पुण्याशानामशेषमहीस्पृशां
स्थितवति गुरौ तुङ्गे द्रङ्गेऽजनिष्ट सुखं महत्॥१४३॥

असमकुसुमे निरुपमपुष्पे, आम्रतरौ सहकारद्रुमे, यथा ताम्राक्षाणां कोकिलानां, वने; पुनः सरसे ससलिले, सरसि कासारे, यथा स्मिते स्मेरे, अम्बुरुहे कमले, रोलम्बानां भ्रमराणां; तथा इह तुङ्गे द्रङ्गे सूरतिनामकबन्दिरे, गुरौ विजयदानसूरौ, स्थितवति सति, पुण्ये धर्मे आशा तृष्णा येषां तेषां धर्मिणामिति, अशेषमहीस्पृशां समस्तजन्तूनां, महत् सुखमज-

निष्ट जज्ञे । इह सर्गेऽनुष्टुप्छन्दोऽन्त्यं तु हरिणीवृत्तं, तल्लक्षणं प्रतिपादितम् ॥१४३॥

इतीति सकलं भव्यम् ।

इतिसुविहितसभासार्वभौमसमानसकलपण्डितमण्डलीमौलिमौली-
यमानपण्डितश्रीकमलविजयगणिशिष्यमुख्यपण्डितपुरन्दरप्र-
ख्यपण्डितश्रीविद्याविजयगणिविनेयवाचकश्रीगुणविजय-
गणिविरचितायां विजयप्रदीपिकाऽभिधानधारिकायां
श्रीविजयप्रशस्तिमहाकाव्यटीकायां चतुर्थः
सर्गोऽर्थतः समर्थितः ।

अर्हम्

# अथ पञ्चमः सर्गः ।

अथ पञ्चमः सर्गः प्रारभ्यते तस्येदमाद्यं काव्यम्—

अथ सुखं निवसन् निजमातुलौ-
कसि रदद्युतिरम्यमुखोऽन्यदा ।
स जयसिंहकुमार उदारवाक्
स्वजननीं जननीतिविदब्रवीत् ॥ १ ॥

अथ द्वितीयसर्गव्यावर्णितकौमारः स जयसिंहकुमारः जेसिंहनामा बालकः, किं०, रदद्युतिरम्यमुखः दन्तांशुमनोहराननः, पुनर्मातुलस्य जयताभिधानस्य ओकसि गेहे, सुखमिति क्रियाविशेषणम्, निवसन् अवस्थानं कुर्वन्, अन्यदा एकस्मिन्

दिने, स्वजननीं कोडिमदेवीनाम्नीं, अब्रवीत् कथयति स्म । स किं०, जनानां नीतिं वेत्तीति सः ॥ १ ॥

अथ यदब्रवीत्तदाह—

जननि ! सांप्रतमस्मि पितेव स-
न्मतिपदं विपदम्बुधितारिणीम् ।
ननु जिघृक्षुरथो नियमस्थितिं
शमघनामघनाशकरीमहम् ॥ २ ॥

हे जननि मातः ! सांप्रतमधुना, पितेव कमार्षिवत्, नियमस्थितिं तपस्यां, जिघृक्षुर्ग्रहीतुमिच्छुः, अहमस्मीत्यन्वयः। कीदृशीं, सन्मतिपदं शोभनबुद्धिस्थानं, पुनः किं०, विपदम्बुधितारिणीं जन्मजरामरणादिव्यापत्तिसमुद्रतारिणीं, पुनः किं०, शमस्य क्षमाया घनो दार्ढ्यं यस्यां सा शमघना तां "उवसमसारं खु सामण्णं" इत्यागमाद्युक्तेः। अत एव अघनाशकरीं पापप्रध्वंसकारिणीम् ॥ २ ॥

स खलु वर्त्मनि यत्र पिता मम
व्रजति तत्र लघुश्चलिताऽस्म्यहम् ।
जगति यज्जनकाधिगता बुधै-
रभिहिताऽभि हिता महतां सृतिः ॥३॥

स कमार्षिः, मम पिता यत्र वर्त्मनि संयममार्गे, व्रजति तत्राहं लघुर्बालोऽपीत्यध्याहार्यम्, चलितास्मि चिचलिषुरस्मीत्यन्वयः। यस्माद्धेतोः, महतां पुण्यात्मनां पुत्राणां, जनकाधिगता तातनिषेविता, सृतिः पद्धतिः, अभि समन्तात्, हिता हितकारिणी, बुधैरभिहिता प्रोक्ता, आदातुमित्यर्थः ॥ ३ ॥

तदनु पुत्रमवोचदिति प्रसू-

विषमभारवती नियमस्थितिः ।
तव लघोर्घटते न हि सुन्दर-
द्विज ! तनूज ! तनूसुखनाशिनी ॥४॥

तद्वाक्यश्रवणादनन्तरं, प्रसूर्माता, पुत्रं जयसिंहकुमारं, इत्यवोचत् ब्रूते स्म—हे सुन्दरद्विज मनोज्ञदशन ! हे तनूज सुत ! लघोस्तव नियमस्थितिः, कीदृशी, विषमो लोहभारवद् दुर्वहोऽजस्रं पञ्चमहाव्रतधरणरूपो भारो यस्यां सा विषमभारवती, पुनः किं०, तनूसुखनाशिनी शरीरसौख्यध्वंसिनी, न घटते नोपपद्यते इति ॥ ४ ॥

निशितयाऽसुखभूरसिधारया
गतिरिवाऽभिमता तव जातुचित् ।
न नियमस्थितिरत्र जनैरपि
श्रितनया तनयाऽभिदधे शिशोः ॥ ५ ॥

निशितया तीक्ष्णया, असेः खड्गस्य धारया, गतिर्गमनमिव, असुखभूरसौख्यस्थानं, नियमस्थितिः, हे तनय पुत्र ! शिशोर्बालस्य तव, जनैर्लोकैरपि, श्रितनया न्याय्या, नाऽभिदधे न प्रतिपादितेति ॥ ५ ॥

सुसुकुमार ! कुमार ! गृहस्थता-
सुखमशेषमहर्निशमात्मसात् ।
कुरु कनीं परिणीय घटोद्भट-
स्तनयमां नयमांसलमानसाम् ॥ ६ ॥

सुष्ठु अतिशयेन सुकुमारः कोमलस्तदामन्त्रणं हे सुसुकुमार !, हे कुमार बालक ! घटवत् कुम्भवत् उद्भटयोर्मत्तयोः स्त-

नयोः कुचयोर्यमं युग्मं यस्यास्तां, पुनर्नयेन नीत्या मांसलं पुष्टं मानसं यस्यास्तां, कनीं कन्यां, परिणीय गृहस्थताया अगारित्वस्य, अशेषं समस्तं, सुखं आत्मसात् स्वाधीनं कुर्वित्यर्थः ॥६॥

सुर इवाऽनुभवाऽऽत्मज ! नित्यशः

सुरवधूपमचञ्चलचक्षुषाम् ।

सुखमखण्डितमत्र धुरि स्थितो

धनवतां नवताण्डवडम्बरैः ॥ ७ ॥

हे आत्मज तनय ! सुरवधूपमा देवाङ्गनातुल्याश्चञ्चलचक्षुषो लोललोचनाः स्त्रिय इति यावत् तासां, अखण्डितं संपूर्णं सुखं, सुर इवाऽनुभवेत्यन्वयः । कैः, नवताण्डवडम्बरैर्नूतननाटकाडम्बरैः, त्वं कीदृशः, धनवतां व्यवहारिणां, धुरि स्थित इति ॥७॥

नवजलानि नभोऽम्बुपबालके

सलिलवाह इवातुलकौशलः ।

वितर वत्स ! यथेच्छमतुच्छको-

ऽर्थिनि वसूनि वसूर्जितमूर्त्तिभाक् ॥ ८ ॥

हे वत्स ! त्वं, किं०, अतुलकौशलोऽनल्पप्रावीण्यः, नभोऽम्बुपबालके चातकपोते, सलिलवाहो मेघः, यथा नवजलानि वितरति तथाऽर्थिनि याचके, वसूनि धनानि, वितर देहि । कीदृशः, अतुच्छकः पूर्णः, चित्तवित्ताभ्यामिति गम्यम् ; पुनः, वसुभिस्तेजोभिरूर्जितां मूर्त्तिं भजतीति वसूर्जितमूर्त्तिभाक् ॥ ८ ॥

स्वजननीवचनैः स इतीरितः

पुनरभाषत मातरमुल्लसन् ।

नियतिमन्नियमो नियमस्थिति-

प्रियतमायतमानमनाः शिशुः ॥ ९ ॥

इति व्यावर्णितैः, स्वजनन्याः कोडिमदेवीनाम्न्या वचनैः, स शिशुर्जयसिंहः, ईरितः प्रेरितः सन् , पुनः, उल्लसन् , प्रमोदेनेति शेषः; पुनर्मातरं अभाषतोवाच, कीदृशः, नियतिमान् निश्चयवान् नियमो निजप्रतिज्ञारूपो यस्य स नियतिमन्नियमः, पुनः, नियमस्थितिरेव प्रियतमा प्रणयिनी तस्यां यतमानं यत्नवद् मनो यस्य स नियमस्थितिप्रियतमायतमानमना इति ॥ ९ ॥

अपि शिवाध्वनिबद्धधियां नृणा-

मघनिदानमभाणि जिनेन या ।

मम तदम्ब ! गृहस्थतया तया

किमधुना मधुना महतामिव ? ॥ १० ॥

शिवाध्वा मुक्तिमार्गस्तत्र निबद्धधियां बद्धबुद्धीनामपि नृणां, चरमशरीरिणामपीति शेषः, या जिनेन भगवता, आसन्नोपकारित्वेन श्रीवर्द्धमानस्वामिनेति यावत् ; अघानां पापानां दुःखानां वा, निदानं कारणम् , अभाणि भाणिता । हे अम्ब ! तया गृहस्थतयाऽगारवासेन, अधुना मम किं ?, कृतमिति यावत् । दृष्टान्तमाह— महतां सतां, मधुना मद्येनेवेति ॥ १० ॥

न विरसासु मरुष्विव हस्तिनां

भवति यासु रतिः सुखकृद् नृणाम् ।

बुधजनैः पथिकाः पथि पाप्मनः

सुनयना नयनाशकृतः स्मृताः ॥ ११ ॥

हस्तिनां मरुषु स्थलीष्विव, किंलक्षणासु, विरसासु निर्जलासु, अन्यत्र निःस्वादासु विपाकत इति, यासु रतिर्नृणां

सुखकृद् न स्यात्; अत्र पूर्वार्धे यच्छब्दोपादानात् पश्चिमार्द्धे तच्छब्दोऽध्याहार्यः, तेन ताः सुनयनाः स्त्रियः, किं०, नयनाशकृतः न्यायध्वंसिन्यः, पुनः किं०, पाप्मनः पापस्य, पथि मार्गे, पथिका अध्वन्याः, स्मृता उक्ताः, पापपद्धतिप्रवृत्तिकारिण्य इति यावत् ॥ ११ ॥

नयति तन्नटनं न सतां मनो
मुदममन्दममङ्गलनाशिनीम् ।
प्रचुररूपभृता यदनुष्ठितं
तनुमताऽनुमताऽऽदरमाभवम् ॥ १२ ॥

तन्नटनं नाटकं, सतां पण्डितानां, मनः, अमन्दमिति क्रियाविशेषणम्, अमङ्गलनाशिनीं अकल्याणवारिणीं, मुदं हर्षं, न नयति प्रापयतीत्यन्वयः। तत्किमित्याह—यत् प्रचुररूपभृता भूरिरूपधारिणा, तनुमता प्राणिना, आभवं आसंसारमधिकृत्य, अनुमतादरं कृतादरं यथा स्यात्तथा, अनुष्ठितं स्वीकृतमिति ॥१२॥

वितरणं ननु दातुमना अहं
तदभयाभिधमद्भुतमात्मसु ।
भवति यत् समतासुभगे शिवा-
ध्वनि हितं निहितं निजमानसे ॥ १३ ॥

नन्विति निश्चये, तदभयाभिधं वितरणं अभयदानं, कीदृशं, अद्भुतं चित्रकृत्, आत्मसु जन्तुषु, दातुमना अहमस्मीत्यन्वयः । यद् निजमानसे स्वस्वान्ते, निहितं अहमेतस्मै अभयं ददामीति चित्ते भावितं सत्, समतासुभगे साम्यरम्ये, शिवाध्वनि मुक्तिमार्गे, हितं पथ्यं भवतीति भावार्थः ॥ १३ ॥

व्रजितुमध्वनि यत्र महात्मना-

मभिलषामि समाहितचेतसाम् ।
त्वमपि तत्र तदम्ब ! भवाऽधुना
छविपदेऽविपदेनसि सत्वरा ॥ १४ ॥

समाहितचेतसां समाधियुक्तमनसां, महात्मनां साधूनां, यत्राऽध्वनि मार्गे, व्रजितुं गन्तुं, अभिलषामि ईहे, अहमिति योगः। हे अम्ब! ततस्तत्राऽध्वनि, कीदृशे, छविपदे शोभाऽऽस्पदे, पुनर्न विद्यते विपत् संसारसंबन्धिनी दुष्कर्मव्यापारप्रयासादि-रूपा व्यापत्तिः, एनः पातकं च यत्र तत्राऽविपदेनसि; त्वमपि सत्वरा भव औत्सुक्यं भजेति, संयमस्वीकारकरणेन मम सहा-यीभवेति भावार्थः ॥ १४ ॥

वचनमीरितमात्मभुवेत्यदो-
ऽनघमुदां स्वनिरप्यगरीयसा ।
शिखिसुलोचनयेव पयोधर-
ध्वनिरमानि रमासमयाऽनया ॥ १५ ॥

अगरीयसाऽपि बालेनापि, आत्मभुवा पुत्रेण, इतीरितं व्यावर्णितरूपं वचनं, कीदृशं, अनघमुदां स्वनिर्मनोज्ञहर्षाकरः, शिखिसुलोचनया केकिकान्तया, यथा पयोधरध्वनिर्मेघनादः, तथाऽनया कोडिमदेनाम्न्या जनन्या, किं०, रमासमया लक्ष्मी-तुल्यया, अमानि मेने ॥ १५ ॥

प्रमुदिता प्रति सूरतिबन्दिरं
चलितुमैच्छदथार्थमिवाऽङ्गिनम् ।
सपदि सा परिगृह्य तमात्मनः
सुतमसातमसावुदकोपमम् ॥ १६ ॥

अथेत्यन्यदा, मूर्त्तिमन्तमर्थमिव वित्तमिव, तं आत्मनः सुतं जयसिंहकुमारं, कीदृशं, असातमसौख्यं तद्रूपा मसिर्मषी तत्र, उदकोपमं पानीयप्रतिमं, तन्नपोहकत्वात्; परिगृह्य समादाय, सूरतिबन्दिरं प्रति प्रमुदिता सती, सा चलितुमैच्छच्चिचलिषु-र्जातेति ॥ १६ ॥

जिनवरांश्च गुरूंश्च पुरे पुरे
प्रणयतः प्रणमन्त्यथ पुण्यधीः ।
अचलदध्वनि कोडिमदेसती
त्रसहिता सहिता तनुजन्मना ॥ १७ ॥

अथेति पालीपुरस्थस्वसहजालयात् शुभे दिवसे जिनवरान् देवान्, गुरून् मुनीन्, पुरे पुरे प्रणमन्ती अत एव पुण्ये धर्मे, अथवा पुण्या पवित्रा धीर्यस्याः सा, कोडिमदेसती अचलत्। कीदृशी, त्रसाश्चरजीवा उपलक्षणत्वात् स्थावराश्च तेषां हिता भावचारित्रात्, पुनः, तनुजन्मना पुत्रेण जयसिंहकुमारेण सहिता ॥ १७ ॥

शकुनसूचितभाविमहोदया-
ऽऽत्मजयुता वनिताऽऽलिमतल्लिका ।
निजमनोरथपूर्त्तिमनोरमा-
ऽध्वनि शिवानि शिवाकृतिरन्वभूत् ॥ १८ ॥

शकुनैः सूचितो भावी महान् उदयो यस्याः सा, पुनः, आत्मजेन सुतेन युता, वनिताऽऽलिमतल्लिका स्त्रीश्रेणिश्रेष्ठा, पुनः, निजमनोरथपूर्त्या देवगुरुप्रणमनलक्षणस्वाभिलाषपूरणेन म-नोरमा, पुनः, शिवा पार्वती तद्वत्, अथवा शिवा निरुपद्रवा

आकृतिर्यस्याः सा, सा कोडिमदेवी, अध्वनि मार्गे, शिवानि कुशलानि, अन्वभूत् क्षेमेण याति स्मेति ॥ १८ ॥

विजयदानमुनीन्द्रपदाम्बुजो-
ल्लसदलङ्कृति साऽथ पतिव्रता ।
नगरमाप च सूर्यपुरं कजो-
पमकरा मकराकरपार्श्वगम् ॥ १९ ॥

विजयदानमुनीन्द्रपदाम्बुजाभ्यां उल्लसन्ती अलङ्कृतिर्यत्र तत्, पुनः, मकराकरः समुद्रस्तत्पार्श्वगं उदधितटवर्तित्वात्, सूर्यपुरं नाम नगरं सूरतिबन्दिरं, सा पतिव्रता, अथ मेदपाटगूर्जरधरोल्लङ्घनात्, आप प्राप्ता। कीदृशी, कजोपमौ कमलतुल्यौ करौ यस्याः सा ॥ १९ ॥

जययुतेव पुलोमसुताऽथ सा
प्रणमति स्म सुतेन समन्विता ।
विजयदानमुनीन्दुपदद्वयं
घनरसं नरसंघनमस्कृतम् ॥ २० ॥

जयेन जयदत्तेन युता, पुलोमसुता शचीव, सा सुतेन जयसिंहेन समन्विता, विजयदानमुनीन्दोः पदद्वयं, कीदृशं, नरसङ्घेन नमस्कृतं, घनरसं बहुहर्षं यथा भवति तथा, प्रणमति स्मेति॥२०॥

न्यगददुज्ज्वलदन्तमहोभरा
विदधतीव मनोहरमौक्तिकैः ।
मुनिपतेरुपदामियमग्रतो
वरवचाऽऽरवचारुमुखी सती ॥ २१ ॥

इयं सती, कीदृशी, उज्ज्वलो दन्तमहोभरो यस्याः, इवोत्प्रे-

क्ष्यते—मुनिपतेः श्रीविजयदानसूरेः, अग्रतः मनोहरमौक्तिकैः रम्यमुक्ताफलैः, उपदां ढौकनं, विदधती कुर्वती, पुनः, वरः श्रेष्ठो यो वचः शुकः "वचः शुके" इत्यनेकार्थत्वादिति वरवचः शोभनशुकस्तद्वत् आरवेण ध्वनिना चारुमुखी, न्यगदद् बभाणेति॥२१॥

समममनेन सुतेन लघीयसा
निकट आर्यवराः! सुकृताकरे ।
परिजिघृक्षुरहं ध्रुवमस्मि वः
शुभवतां भवताण्डवहृद् व्रतम् ॥ २२॥

अनेन पुरःस्थितेन सुतेन समं सार्धं, हे आर्यवराः श्रीपूज्यमिश्राः! शुभवतां श्रेयस्विनां, वो युष्माकं, निकटे पार्श्वे, कीदृशे, सुकृताकरे धर्मखानौ, भवताण्डवहृत् संसारनाट्यहरं, व्रतं चारित्रं, ध्रुवं निश्चयेन, परिजिघृक्षुर्ग्रहीतुमिच्छुः, अस्मीत्यर्थः२२

इति तदुक्तिमुदारगुणास्पदं
सुतममुं च निशम्य सदाकृतिम् ।
भृशममी गुरवो गुरुवैभवा
मुमुदिरे मुदिरेष्टसमागमाः ॥ २३ ॥

उदारगुणानामास्पदं पदं, तदुक्तिं तद्वाचं, निशम्य श्रुत्वा, पुनः, सदाकृतिं शोभनाकारं, अमुं सुतं, निशम्य निरीक्ष्य । यत् श्रीहेमसूरयोऽनेकार्थसंग्रहे "निशमनं निशामनं निरीक्षणश्रवणयोः" इत्याहुः, अमी गुरवः श्रीपूज्याः, कीदृशाः, गुरुवैभवा महासंपदः, पुनः, किं०, मुदिरो मेघस्तद्वत् इष्टः समागमो येषां, प्रजानामित्याक्षेप्यते, मुदिरेष्टसमागमाः, मुमुदिरे मोदमापुः ॥२३॥

अमृशदम्बिकयेरित आदरात्

स जयसिंहकुमार उदारदृक् ।
स्वशिरसा बहुशः सुगुरोर्द्वयीं
चरणयो रणयोगतमोऽर्कयोः ॥ २४ ॥

उदारा दृग् बुद्धिर्दृष्टिर्दर्शनं वा यस्य सः, स जयसिंहकुमारः, अम्बिकया मात्रा, ईरितः प्रणोदितः सन्, स्वशिरसा सुगुरोः रणयोगतमोऽर्कयोः कलहसंयोगध्वान्तसूर्ययोः, चरणयोर्द्वयीं बहुशो भूरिवेलं, अमृशत् स्पृशति स्मेति ॥ २४ ॥

अमरभूरुहपल्लवशालिना
शिशुशिरः प्रणतं निजपाणिना ।
यतिवरा बहुवारमथाऽस्पृशन्
ध्वजपयोजपयोधिमुखाङ्किना ॥ २५ ॥

अमरभूरुहपल्लवः कल्पपादपकिशलयं तद्वच्छालिना, पुनः, ध्वजः पताका, पयोजं च कमलं, पयोधिः समुद्रः, तन्मुखानां तदादीनां लाञ्छनानां अङ्को भूषा तदादयो वा अङ्काश्चिह्नानि यस्मिंस्तेन ध्वजपयोजपयोधिमुखाङ्किना, निजपाणिना प्रणतमानतं, शिशुशिरो बालकमस्तकं, यतिवराः श्रीविजयदानसूरयः, बहुवारमनेकशः, अस्पृशन् स्पृशन्ति स्मेति ॥ २५ ॥

दृशि पुमान् गुणिलक्षणलक्षितः
खलु महान् भवतीति वितर्कतः ।
न गुरुदृग् जयसिंहदृशं जहौ
कमलिनीमलिनीव ससौरभाम् ॥ २६ ॥

महान् पुमान् दृशि चक्षुषि, गुणिनां गुणवतां लक्षणैर्लक्षितो भवति, एतावता महतां चक्षुर्लक्षणोपेतं विलोक्यते "यथा-

नेत्रे तथा शीलम्" इत्याद्युक्तेः, इति वितर्कतो गुरुदृग् जयसिंहदृशं न जहौ नाऽत्याक्षीत् । दृष्टान्तं स्पष्टयति–यथा ससौरभां सगन्धां, कमलिनीं नलिनीं, अलिनी भ्रमरीवेति ॥ २६ ॥

जलरुहे भ्रमरीव विकस्वरे
मुनिपदृग् भजति स्म चिरं स्थितिम् ।
शिशुमुखे मधुरत्वलसद्वचो-
मधुनि साधुनि साम्य इवर्षिहृत् ॥२७॥

शिशुमुखे, कीदृशे, मधुरत्वेन माधुर्येण लसद्वच एव मधु क्षीरं क्षौद्रं परागो वा यत्र तत्र, मुनिपदृग् गुरुदृष्टिः, स्थितिं भजति स्म । प्रथमान्त्यपादयोर्दृष्टान्तमाह-विकस्वरे जलरुहे भ्रमरी यथा, पुनः, साधुनि रम्ये, साम्ये समतायां, ऋषिहृत् चारित्रि-चेतः, यथेत्युपन्यासः ॥ २७ ॥

अथैकविंशत्या वृत्तैर्यथा गुरुः शिशुं परीक्षितवांस्तथा वर्णयति–

स्मितपयोजपलाशसुपेशले
प्रचुरपुण्यमये नयनद्वये ।
शुभति चाऽस्य शिशोः सदपाङ्गयो-
ररुणिमोरुणि मोदनिदानभूः ॥ २८ ॥

अस्य शिशोर्नयनद्वये, कीदृशे, स्मितपयोजपलाशवत् वि-कसितकमलदलवत् सुपेशले सुशोभने, पुनः, प्रचुरपुण्यमये बहुधर्ममये, पुनः, उरुणि विस्तीर्णे, सदपाङ्गयोः स्फुरत्कोणयोः, अरुणिमा रक्तिमा, कीदृशः, मोदनिदानभूः हर्षहेतुस्थानं, शुभति भातीति ॥ २८ ॥

चरणपाणितलौष्ठनखावली-

प्रभवयाऽद्भुतशोणतयाऽमुना।
अरुणताऽवधि कोकनदाभिधा-
ऽम्बुजगता जगतामतिचित्रकृत् ॥ २९ ॥

चरणौ क्रमौ, पाणितले हस्ततले, ओष्ठोऽधरः, नखावली प्रतीता, ताभ्यः प्रभव उत्पत्तिर्यस्याः सा तया, अद्भुतशोणतया मनोज्ञरक्तत्वेन, कोकनदाभिधाऽम्बुजं रक्तोत्पलं तद्गता, अरुणता रक्तता, कीदृशी, जगतां अतिचित्रकृद् बह्वाश्चर्यकारिणी, अमुना बालेन, अवधि 'वधि हिंसायाम्' इति प्रयोगाद् हता, निर्जितेति निर्गलितार्थः ॥ २९ ॥

उदयदम्बुजसोदरसोदरा-
ऽभिनवघौसृणघोलविलेपनाः।
जयति विद्रुमपल्लवसंपदो-
ऽमृतरसा तरसाऽस्य शिशो रसा ॥३० ॥

उदयन् उद्गच्छन् योऽम्बुजसोदरः सूर्यस्तत्सोदरस्तुल्योऽभिनवो नव्यो घौसृणः कौङ्कुमो घोलस्तद्विलेपनं यासां ताः, अनेन रक्तताऽतिशयः सूचितः; विद्रुमाणां प्रवालानां पल्लवाः किशलयानि तेषां संपदः संपत्तीर्गुणोत्कर्षान् वा "संपद् ऋद्धौ गुणोत्कर्षे" इत्यनेकार्थत्वादिति, अस्य शिशो रसा रसना, तरसा शीघ्रं, जयतीत्यन्वयः। कीदृशी, अमृतरसा सुधास्वादा मधुरभाषित्वात् ॥ ३० ॥

अरुणिमा यदितः प्रसरद्रुचि-
प्रभव एव भवेद् रसनोष्ठयोः।
इति धिया विधिना बहुशोणता

प्रजनिताऽजनि तालुगता शिशोः ॥ ३१ ॥

अस्येत्यध्याहारः, तेनास्य शिशोः, इति धिया बुद्ध्या, विधिना धात्रा, बहुशोणता, कीदृशी, तालुगता काकुदगा, प्रजनिता निर्मिता, अजनि जातेति । इति किमित्याह—यदिति यतः कारणात्, इतस्तालुत एव, प्रसरद्रुचिप्रभवोऽरुणिमा रक्तिमा, रसनोष्ठयोर्जिह्वाधरयोः, भवेद् जायत इति ॥ ३१ ॥

शिरसिजेषु रदाङ्गुलिपर्वसु
त्वचि नखेषु महस्विषु सूक्ष्मता ।
बहुरमुष्य शिशोः सुभगाकृते-
रति विभाति विभाभरभाजिनः ॥ ३२ ॥

महस्विनस्तेजास्विनो ये शिरसिजाः केशास्तेषु, पुनः, रदा दन्ताः, अङ्गुलिपर्वाणि च तेषु, पुनस्त्वचि चर्मणि, पुनर्नखेषु, सूक्ष्मता कृशता, अस्य शिशोः, किंलक्षणस्य, विभाभरभाजिनः कान्तिनिकरशालिनः, पुनः, सुभगाऽऽकृतेः शोभनाऽऽकारिणः, बहुर्बह्वी, अति विभाति ॥ ३२ ॥

ध्रुवमयं भविता शिशुराढ्यरा-
डिति लिलेख किमक्षरपद्धतिम् ? ।
भ्रमरकच्छलतोऽस्य विधिर्मुदो-
त्सुकमलीकमलीकमुचं सृजन् ॥ ३३ ॥

मुदा हर्षेणोत्सुकं मुदोत्सुकमिति क्रियाविशेषणं, अलीकमुचं कलङ्कमोचकं, अलीकं भालं, सृजन् कुर्वन्, विधिर्विधाता, भ्रमरको भालालकः "स तु भाले भ्रमरकः" इति वचनात्, तन्मिषात्; किं०, इत्यक्षरपद्धतिं वर्णावलीं, लिलेख । इति कथमित्याह—ध्रुवं निश्चितं, अयं शिशुः आढ्यराड् ज्ञानविज्ञा-

नादिधनाढ्यमुख्यः, भविता भावी, इति भावार्थः ॥ ३३ ॥

किमु जगत्प्रभुताचलचक्षुषः
शयनतल्पमनल्पसुखास्पदम् ।
पृथुलमस्ति हृदस्य शिशोः श्रिया
श्रितमनन्तमनङ्गमदच्छिदः ॥ ३४ ॥

जगत्प्रभुतैव चलचक्षुः स्त्री तस्याः, अनल्पसुखानामास्पदं, शयनतल्पं शय्येव, अस्य शिशोः, किं०, अनङ्गमदच्छिदः स्मरस्मयहर्तुः, श्रिया श्रितं, पुनः, अनन्तं निरवधि यथा स्यात्तथेति, पृथुलं हृदस्तीति ॥ ३४ ॥

मुनिसभाचलचञ्चुचलेक्षणा
पथि दृशोः प्रविधाय भजत्यलम् ।
उरुममुष्य मुखं शशिमण्डल-
प्रतिमकान्तिमकान्तकरीर्मुदः ॥ ३५ ॥

अमुष्य शिशोः, शशिमण्डलप्रतिमकान्ति चन्द्रबिम्बतुल्याभं, पुनः, उरुं विस्तीर्णं, मुखं दृशोः पथि प्रविधाय दृष्ट्वेति, मुखशब्दस्य पुंनपुंसकत्वात् मुखसंबन्धिविशेषणद्वयस्य पुंलिङ्गवाचकत्वे न काऽपि विप्रतिपत्तिरिति । मुनिसभाचलचञ्चुचलेक्षणा साधुपर्षच्चकोरी, "अकं दुःखाघयोः" इत्यनेकार्थत्वात् अकानां दुःखानां, पापानां वा अन्तकरीः अकान्तकरीर्दुःखध्वंसिनीः, पापध्वंसिनीर्वा; मुदः प्रीतीः, भजतीत्यर्थः ॥ ३५ ॥

भवति भूरि वयःस्थशिखण्डिना-
मिव पयःपरिपूर्णपयोमुचः ।
अति गभीरममुष्य निशाम्यतां

स्वरमपारमपापदृशां सुखम् ॥ ३६ ॥

पयसा पानीयेन परिपूर्णो यः पयोमुग् मेघस्तस्य, इव यथा, वयःस्थशिखण्डिनां तरुणमयूराणां, तथा अमुष्य शिशोः, गभीरं, पुनः, अपारं स्वरं निशाम्यतां शृण्वतां, "दृग् द्रष्टृदर्शनध्यक्षिण" इत्यनेकार्थत्वात् अपापा दृग् दृष्टिः, दर्शनं वा, धीर्बुद्धिर्वा, येषां तेषां अपापचक्षुषां वा, अपापदर्शनानां वा, अपापधियां वा, पुण्यात्मनामिति यावत्; भूरि बहु, सुखं सातं, भवतीति ॥३६॥

चुलुकतस्तलमाविरभूद् मुने-

स्तुलयतोऽपि पतिं पयसां बहुम् ।

प्रथितमस्य तु सत्त्वधनं सदा-

ऽतलमबालमवाग्विषयं शिशोः ॥३७॥

बहोस्त्रिलिङ्गत्वात् पुंलिङ्गे बहुं महान्तमपि, पयसां पतिं समुद्रं, मुनेरगस्त्यस्य, तुलयतः सतः, चुलुकतस्तलं आविरभूत् प्रकटितं, अस्य तु पृथुलं, पुनः, अतलमगाधं सत्त्वधनं, अबालमजडं, पुनः, अत एवावाग्विषयं वचनागोचरम् ॥ ३७ ॥

असमविस्मयभूरभिभूयते

भुवनवैभववेश्म गभीरिमा ।

पृथुलकूपभुवाऽतिगभीरता-

ऽद्भुततया ततयाऽस्य न नाभिजः ॥३८॥

असमस्य निरुपमस्य विस्मयस्य भूर्भूमिः, पुनः, भुवनवैभवस्य जगदैश्वर्यस्य वेश्म गृहं, अस्य शिशोः, नाभिजो गभीरिमा ततया बहुधा, पृथुलकूपभुवाऽतिगभीरताऽद्भुततया कूपगभीरत्वचारुत्वेन, नाऽभिभूयते निर्जित इति निगर्वः ॥ ३८ ॥

मुनिषु भाव्ययमुन्नतिमान् भृशं

मनसि नक्रमवक्रमवेत्य किम् ?।

प्रविदधेऽस्य शिशोर्बहुबन्धुरो-

न्नततमं ततमम्बुजभूरिति ॥ ३९ ॥

अयं जयसिंहकुमारः, मुनिषु उन्नतिमान् भावी इति मनसि अवेत्य ज्ञात्वा, किं०, अम्बुजभूर्विधाता, अस्य शिशोः, नक्रं, किं०, अवक्रं सरलं, पुनः, बहुबन्धुरं घनमनोज्ञं च उन्नततमं चेति कर्मधारये बहुबन्धुरोन्नततमं, पुनः, ततं विस्तीर्णं, प्रविदधे चकारेत्यर्थः ॥ ३९ ॥

निगरणे युगलेऽपि च जङ्घयो-

रपि च पृष्ठतटेऽरमदीर्घता ।

लसति चास्य शिशोः सततोदय-

स्पृशदलेशदलेतरमानभूः ॥ ४० ॥

च पुनः, अस्य शिशोर्निगरणे कण्ठे, अपि च जङ्घयोर्युगे, अपि च पृष्ठतटे पाश्चात्यभागे, अरं अत्यर्थं, अदीर्घता लसति शोभत- इत्यन्वयः । अदीर्घता किं०, सततोदयं स्पृशतीति सततोदय- स्पृशत् पुनः अलेशं लेशवर्जितं अत एव दलेतरं अखण्डितं यन्मानं पूजासंमानादि तस्य भूः स्थानं, यतः कण्ठादिषु ह्रस्वेषु नरोऽर्चाभाग् भवतीति भावः ॥ ४० ॥

लगनमस्त्यनयोर्मम यज्जग-

ज्जरणसारमिति प्रथनोत्सुकम् ।

स्पृशति चास्य शिशोरिति जानुनी

सरलतारलताकृति दोर्द्वयम् ॥ ४१ ॥

च पुनः, अस्य शिशोः दोर्द्वयं, भुजयुगलं, इति हेतोः, जानुनी स्पृशतीत्यन्वयः । दोर्द्वयं किं०, सरलाऽकुटिला तारा रम्या या लता वल्लिस्तद्वद् आकृतिर्यस्य तत् सरलतारलताकृति, हेतुमाह—यत् यस्मात्कारणात्, अनयोर्जानुनोः, मम लगनं जगद्भरणसारमस्ति जगतो यद् भरणं धारणं, पोषणं वा, डुभृञ्‌ धातोर्धारणपोषणार्थत्वात्, इति प्रथने कथने उत्सुकं तत्परं, अनेन आजानुलम्बिभुजत्वमसूचीति भावः ॥ ४१ ॥

पृथुलमस्य शिशोर्द्वयमंसयो-
रतिशयोर्ध्वगतं श्रुतिसङ्गतम् ।
अति विभाति जगद्भररक्षण-
क्षममवाममवामतरः पदम् ॥ ४२ ॥

अस्य शिशोः अंसयोः स्कन्धयोर्द्वयं, किं०, पृथुलं विस्तीर्णं, पुनः किं०, अतिशयोर्ध्वगतं भृशोन्नतिमागतं, पुनः किं०, श्रुतिसङ्गतं कर्णप्राप्तं, पुनः किं०, जगद्भरस्य जगतीभारस्य रक्षणे क्षमं, पुनः किं०, अवामं अप्रतिकूलं, पुनः किं०, अवामतरः-पदं प्रधानबलास्पदं, अति विभाति भृशं शोभते ॥ ४२ ॥

इति विधिर्विदधे पदमङ्कितं
मृदुलमस्य शुभोर्ध्वकरेखया ।
इदमशेषजगच्छिरऊर्ध्वगं
प्रभविता भवितापविनाशकृत् ॥ ४३ ॥

अस्य शिशोः, विधिर्विधाता, इति हेतोः, शुभोर्ध्वकरेखया अङ्कितं अलङ्कृतं, पुनः, मृदुलं सुकुमालं, पदं विदध इत्यन्वयः । हेतुमाह—इदं पदं, अशेषजगच्छिरसः समस्तविश्वशिरसः ऊर्ध्व-

गतं, तन्नामनात्; प्रभविता भावि, पुनः किं०, भविनां ताप-
विनाशकृत् ॥ ४३ ॥

सकुलिशाङ्कममुष्य कराम्बुरुट्-
तलमलं कमलां कलयत्यदः ।
अहितगोत्रभिदे तदसौ शिशुः
प्रबलभा बलभाग् भविता ध्रुवम् ॥ ४४ ॥

अमुष्य अस्य शिशोः, अदः कराम्बुरुट्तलं करकमलतलं, किं०, सकुलिशाङ्कं सवज्रलक्ष्मकं, कमलां श्रियं, कलयति बिभर्तीत्यन्वयः । सकुलिशाङ्कमिति विशेषणद्वारा वज्रश्लेषं सूचयति पश्चिमार्धेनेति-तदसौ शिशुः, कीदृशः, प्रबलभाः प्रकृष्टतेजाः, पुनः, बलभाग्, अहितगोत्रभिदे रिपुकुलच्छिदे, वज्रपक्षे पर्वतच्छिदे, भविता; इति गुरुश्चिन्तयतीत्यर्थः ॥ ४४ ॥

अयममुष्य करः कमलोत्कर-
श्रियमियर्त्ति हृदीति मनस्विनाम् ।
अरुणता रुचिरं न विमुञ्चते
यमहता महतामपि चित्रकृत् ॥ ४५ ॥

अमुष्य शिशोः, करो हस्तः, कमलोत्करस्य पङ्कजव्रजस्य श्रियं शोभां, इयर्त्ति प्राप्नोति, इति मनस्विनां सहृदयानां, चेतसि, प्रतिभातीत्यध्याहारः । कमलोत्करोपमाहेतुमुत्तरार्धेनाह—यं करं, कमलोत्करं च; अरुणता रक्तता, न विमुञ्चते; यं किं०, रुचिरं चारुं, अथवा रुचिरमिति क्रियाविशेषणम्, रक्तता कीदृशी, अहताऽखण्डिता, पुनः कीदृशी, महतां सतामपि, चित्रकृत् आश्चर्यकारिणीत्यर्थः ॥ ४५ ॥

कमलकूर्मकुलाङ्कुशकान्तिमत्-

कुलिशकेसरिकेतुकुटाङ्कभृत् ।
सृजति पाणिरमुष्य शिशोः सतां
शुचिरसौ चिरसौख्यमुदीक्षितः ॥ ४६ ॥

अमुष्य शिशोः असौ शुचिः पवित्रः, पाणिः उदीक्षितः दृष्टः सन्, सतां चिरसौख्यं नित्यसुखं, सृजतीत्युत्तरार्धेनाऽन्वयः। पूर्वार्धेन पाणिं विशिनष्टि--पाणिः कीदृशः, कमलं प्रतीतं, कूर्मः कच्छपः, कुलं गृहं, अङ्कुशः सृणिः, कान्तिमान् सूर्यः, कुलिशं वज्रं, अथवा कान्तिमत् इति कुलिशविशेषणम्; केसरी प्रतीतः, केतुर्ध्वजः, कुटः कुम्भः; एतेषां अङ्को भूषा लक्ष्म वा बिभर्तीति पूर्वार्धार्थः ॥ ४६ ॥

तदयमेव भविष्यति मेदिनी-
प्रियतमः खलु यानबलर्धिभृत् ।
गमनमस्य शिशोरनयत् त्रपां
कलमरालमरालतयोज्झितम् ॥ ४७ ॥

तदिति तस्माद्धेतोः, अयमेव शिशुः, किं०, यानबलर्द्धिं बिभर्त्तीति यानबलर्द्धिभृत्, अत एव मेदिनीप्रियतमो राजा, भविष्यतीत्यन्वयः। तद्धेतुमाह—अत्र यच्छब्दोऽध्याह्रियते, तेन यद् यस्मात्कारणात्, अस्य शिशोः, गमनं गतिः, कलमरालं कलहंसं, त्रपां लज्जां, अनयत् नयति स्मेति, अत्र धातुर्द्विकर्म्य, गमनं किं०, अरालतया वक्रतया, उज्झितं सरलमिति भावार्थः ॥ ४७ ॥

अतिभरामयमेकपराक्रमी
ननु धरिष्यति यज्जगतो धुरम् ।
अनुसरन् गतिमस्य कथं नव-

श्चरति गौरतिगौरगुणश्रियः ?॥ ४८ ॥

अतिगौरगुणश्रियोऽस्य शिशोः, गतिं अनुसरन्, कथं नवो गौर्वृषभः, चरति गच्छति, अपि तु नेत्यन्वयः; अस्य गतेरनुकारी न स्यादिति तात्पर्यम् । तद्धेतुमेवाह—यदिति यस्माद्धेतोः, अयं शिशुः, एकपराक्रमी सन्, जगतोऽतिभरां महाभारामपि, धुरं धरिष्यति, नवो गौस्तु पराक्रमवानपि एकाकी धुरं न धरतीति निगर्वः ॥ ४८ ॥

इति जगत्प्रभुतापिशुनैर्महो-

दयकृतिप्रवणैर्वरलक्षणैः ।

पृथुशिराः पृथुकः श्रयते श्रियं

सकमलैः कमलैरिव वापिका ॥ ४९ ॥

इति व्यावर्णितस्वरूपैः, पुनः, जगत्प्रभुतापिशुनैर्विश्वैश्वर्यसूचकैः, पुनः, महोदयकृतिप्रवणैः सर्वाऽभ्युदयकरणपरायणैः, वरैः प्रधानैर्लक्षणैः, अयं पृथुको बालकः, कीदृशः, पृथुशिरा विस्तीर्णशीर्षः, श्रियं श्रयते शोभां भजति इत्यन्वयः । दृष्टान्तमाह--यथा सकमलैः सश्रीकैः, कमलैर्वापिका वापीत्यर्थः ॥४९॥

अतिमहत्तरकारणकारणा-

ऽगणितलक्षणलक्षणलक्षितम् ।

अमुमुदीक्ष्य शिशुं गुरवोऽदधु-

र्मुदममी दममीनमहार्णवाः ॥ ५० ॥

अतिमहत्तराणां द्विषतां यत् कारणं घातनं तत्कारणानि प्रकृष्टहेतुभूतानि यानि अगणितानि गणनाऽतीतानि लक्षणानि नामानि येषां तानि लक्षणानि लाञ्छनानि तैर्लक्षितं अलङ्कृतं, अमुं शिशुं उदीक्ष्य दृष्ट्वा, गुरवोऽधिकारात् श्रीवि-

जयदानसूरयः, मुदं हर्षं, अदधुरिति धरन्ति स्मेत्यन्वयः । गुरवः कीदृशाः, दममीनमहार्णवाः उपशमरूपमत्स्यमहाम्भोधयः, तदाधारत्वात् ॥ ५० ॥

सुदृगयं जयसिंहशिशुर्व्रति-
व्रतकलत्रकरग्रहणोत्सुकः ।
शुभति तत्र पुरे सममम्बया
सदयया दयया सुकृती यथा ॥ ५१ ॥

सुदृक् सुलोचनः, सुधीर्वा, सुदर्शनो वा; अयं जयसिंहशिशुः, किं०, व्रतिव्रतकलत्रकरग्रहणोत्सुकः संयमस्त्रीपरिणयनपरायणः, तत्र पुरे सूरतिबन्दिरे, अम्बया मात्रा, समं सार्धं, शुभति शोभते, अम्बया किंलक्षणया, सदयया सद्भाग्यया, यथा सुकृती पुण्यवान्, दयया कृपया, शुभतीति दृष्टान्तः ॥५१॥

सांप्रतं जयसिंहकुमारस्य दीक्षामहोत्सवो वर्ण्यते—

अथ जगज्जनचित्तचमत्कृति-
प्रसित आविरभूदतिशायिमुत् ।
सपदि तत्र महोत्सव उल्लस-
ल्लवमयोऽवमयोगलताहिमम् ॥ ५२ ॥

अथेति अन्यदा, तत्र सूरतिबन्दिरे, सपदि महोत्सवः आविरभूत् प्रकटीबभूव, महोत्सवः कीदृशः, जगज्जनचित्तचमत्कृतौ विश्वलोकचेतश्चमत्कारे, प्रसितः परायणः, पुनः किं०, अतिशायिमुत् घनहर्षदायीति, पुनः किं०, उल्लसन् यो लवो विलासः तन्मयस्तत्प्रधानः, अत्र प्राधान्ये मयट्; पुनः कीदृशः, अवमयोगलतायां पापयोगवल्लौ हिमं तुहिनं, तत्प्लोषकत्वादिति ॥ ५२ ॥

अतुलमङ्गलकृद् धवलध्वनिः

समभवत् पुरि तत्र तदीरितः ।

हृदनयन् विकृतिं ननु याः सदा

युवतयो बत ! योगजुषामपि ॥ ५३ ॥

पुनस्तत्र पुरे, याः पश्चिमार्धे वर्णयिष्यामः, ताभिः स्त्रीभिरीरितस्तदीरितः, धवलध्वनिर्मङ्गलारवः, समभूत् । कीदृशः, अतुलमङ्गलानि करोतीति सोऽतुलमङ्गलकृत् निस्तुलकल्याणकारीति पूर्वार्धम् ; या युवतयः स्त्रियः, बतेति कोमलामन्त्रणे, योगजुषां योगिनां, हृद् हृदयं, विकृतिं विकारं, अनयन् नयन्ति स्मेति ॥ ५३ ॥

नटनमाविरभूत् पणसुभ्रुवां

तदिह हारि जितामरसुभ्रुवाम् ।

नयनयोः पथि यन्नयतां नृणां

समुदभूद् मुदभूतसुखाङ्कुरः ॥ ५४॥

पुनरिह पुरे, हारि मनोज्ञं, तन्नटनं नाट्यं, आविरभूत् । कासां, पणसुभ्रुवां पण्याङ्गनानां पात्रनामधारिणीनां, स्वैरिणीनामिति योगः; पण्याङ्गनानां किं०, जितामरसुभ्रुवां निर्जितनिर्जराङ्गनानां, रूपयौवनहावभावादिभिरिति शेषः । तत्किमित्याह—यन्नटनं नयनयोः पथि नयतां पश्यतां नराणां, मुद् हर्षः, समुदभूत् ; कीदृक्, अभूतं पुरा कदाऽप्यजातं यत्सुखं तस्याङ्कुरो बीजं कारणमिति यावत् ॥ ५४ ॥

उदयदर्यमरम्यरुचां भरै-

र्भवति या खचिते वसुधातले ।

अजनि सा नगरे रुचिरेऽद्भुतै-
रुरुणि माऽरुणिमास्पदकुङ्कुमैः ॥ ५५ ॥

उदयन् उद्गच्छन् योऽर्यमा सूर्यस्तस्य रम्यरुचां मनोहरप्रभाणां भरैः, खचिते व्याप्ते, वसुधातले या चतुर्थचरणाऽऽनीता, मा लक्ष्मीः, स्यात्; अद्भुतैराश्चर्यैः, रुचिरे तत्र नगरे, पुनः किं, उरुणि विस्तीर्णे, अरुणिमास्पदकुङ्कुमै रक्तिमापदघुसृणैः, सा मा, अजनि जातेत्यर्थः ॥ ५५ ॥

अजनि चङ्गमृदङ्गकदम्बक-
प्रमुखतूर्यरवः स तदा महान् ।
य इतवान् जगतां लघु रोदसी-
विवरगो वरगोचरमात्मनः ॥ ५६ ॥

तदा तत्र क्षणे, महान् चङ्गानां वाद्यविशेषाणां, देश्यभाषया मनोज्ञानां वा; मृदङ्गानां मुरजानां यत् कदम्बकं समूहः तत्प्रमुखाणि यानि तूर्याणि तूराणि तेषां रवः शब्दः, सः अजनि जज्ञे । स क इत्याह—यो रवः, लघु शीघ्रं, रोदसीविवरगः दिवस्पृथिवीप्राप्तः सन्, जगतां आत्मनो जीवलोकस्येति, वरगोचरं प्रधानविषयं, इतवान् प्राप्तवानिति ॥ ५६ ॥

रविसुतः किमितो बहुरूपवान्
ननु निरीक्ष्य तदा ददतो जनान् ।
महसि तत्र धनानि पुरेऽर्थिनो-
ऽभ्यधुरिदं धुरि दम्भभिदां स्थिताः ॥५७॥

तदा तत्र पुरे, तत्र महसि दीक्षामहे, जनान् धनानि ददतो निरीक्ष्य अर्थिनः, किं०, दम्भभिदां निष्कपटानां, धुरि स्थिता

इदं अभ्यधुः वदन्ति स्म । किमित्याह—किं बहुरूपवान् रविसुतः कर्णनामा राट्, इतोऽत्राऽऽगतवान्, तस्य हि "सैष कर्णो महात्यागी" इति दातृत्वश्रुतेरिति ॥ ५७ ॥

मणिमनोरममौक्तिककाञ्चना-
ऽऽभरणभूषितभूरिमृगीदृशः ।
अतुलमङ्गलगीतसृजस्तदा
श्रियमिता यमिताद्भुतकञ्चुकाः ॥५८॥

मणिभिः मनोरमैर्मौक्तिकैश्च काञ्चनाभरणैश्च भूषिता अलङ्कृता या भूरिमृगीदृशो बहुहरिणीनेत्राः, किं०, अतुलमङ्गलानि सृजन्तीति ता धवलमङ्गलानि गायन्त्य इति, तदा तत्र महे, श्रियं इताः प्राप्ताः, पुनः किं०, यमितो यन्त्रितोऽद्भुतः कञ्चुको याभिस्ताः ॥ ५८ ॥

इति पुरे दिवति प्रवरोत्सवैः
पुरजनेऽपि च निर्जरति श्रिया ।
त्रिदशनाथति चात्र शिशूत्तमे
सुधिषणा धिषणा गुरवोऽभवन् ॥ ५९ ॥

इत्यमुना वर्णकेन व्यावर्णितैः, प्रवरोत्सवैः पुरे सूरतिबन्दिरे, दिवति देवलोक इवाचरिते सति, पुनः, पुरजने श्रिया संपत्त्या, शोभया वा; निर्जरति देव इवाचरिते सति, पुनः, अत्र शिशूत्तमे जयसिंहे कुमारे, त्रिदशनाथति इन्द्र इवाचरिते सति, गुरवः श्रीविजयदानसूरिपादाः, कीदृशाः, सुधिषणाः सुबुद्धयः, धिषणा बृहस्पतय इव, अभवन्; इत्येकोनषष्ट्या वृत्तैर्द्रुतविलम्बितच्छन्दसा वर्णनम् । अथ तु स्वागताच्छन्दसा, तल्लक्षणं चेदम् " स्वागतेति रनभाद् गुरुयुग्मम् " ॥ ५९ ॥

शोभितः सुभगमौक्तिकरत्न-
स्वर्णभूषणगणेन यथाऽर्हम् ।
हेमतन्तुततदिव्यदुकूलः
श्रीतनूज इव रूपसुरूपः ॥ ६० ॥

दीक्षादिने जयसिंहकुमारः, कीदृशः, सुभगमौक्तिकरत्न-स्वर्णभूषणगणेन यथाऽर्हं शोभितो राजितः, पुनः किं०, हेमतन्तुभिस्ततं विस्तीर्णं वा, निर्मितं वा दिव्यं दुकूलं यस्य सः। उत्प्रेक्ष्यते--श्रीतनूजः कन्दर्प इव, किं०, रूपेण सुरूपो रम्यः, " सुरूपस्तु बुधे रम्ये " इत्यनेकार्थत्वात् ॥ ६० ॥

ईदृक् कः किं च कृतवानित्याह—

नागजारुणशिरस्कमथोच्चं
कुम्भिनं कनकशृङ्खलकान्तम् ।
आरुरोह जयसिंहकुमारः
पूर्वपर्वतमिवाम्बुजबन्धुः ॥ ६१ ॥

स जयसिंहकुमारः, कुम्भिनं गजं, आरुरोहेत्यन्वयः । किं० गजं, नागजारुणशिरस्कं सिन्दूररक्तशीर्षं, पुनः, उच्चं तुङ्गं, पुनः, कनकशृङ्खलेन कान्तम् । दृष्टान्तमत्राह--पूर्वपर्वतं उदयाचलं, अब्जबन्धुः सूर्य इव । इति युग्मव्याख्या ॥ ६१ ॥

पद्ममस्य कमलाङ्कितमास्यं
तेन नौ घटत एतदुपास्तिः ।
चामरच्छलत आशु मराला-
वित्यवेत्य तमिवाऽऽगतवन्तौ ॥ ६२ ॥

अस्य जयसिंहस्य, आस्यं मुखं, कमलया लक्ष्म्या अङ्कि-

तमलङ्कृतं, पद्ममासीत्, तेन नौ आवयोः, एतदुपास्तिर्घटते युज्यते, इति हेतोः आशु शीघ्रं, चामरच्छलतः, मरालौ हंसौ, तं जयसिंहं, इत्यवेत्य ज्ञात्वा; इवोत्प्रेक्ष्यते--आगतवन्तौ; सेवितुमिति हृदयम् ॥ ६२ ॥

आननेन यदनेन जितोऽहं
सर्वदोदयभृता सुभगेन ।
सेव्यते स्म शशिनेव तदानीं
छत्रकैतववतेति कुमारः ॥ ६३ ॥

यत् अनेन कुमारेण, अहं आननेन मुखेन, जितः, आननेन किं०, सर्वदा उदयभृता सदोदयेनेति, पुनः, सर्वदा सुभगेन, इति हेतोः, कुमारो जयसिंहनामा, शशिना चन्द्रेण उक्तविशेषणद्वयाविपरीतस्वरूपेण, सेव्यते स्मेति, शशिना किं०, छत्रकैतववता आतपत्रदम्भभृतेति भावः ॥ ६३ ॥

रूपमस्तु सुभगं खलु मा दृग्-
दोषदूषितममुष्य मुखस्य ।
अञ्जनं न्यधित पौरपुरन्ध्री
काचिदस्य दृशि धन्यधियेति ॥ ६४ ॥

तदानीमिति सर्वत्र योज्यं, अमुष्य बालस्य, रूपं सुभगं दृग्दोषदूषितं माऽस्तु मा भवतु, इति धन्यधिया साधुबुद्ध्या, काचित् अनिर्दिष्टनामिका, पौरपुरन्ध्री नागरनारी, अस्य दृशि नेत्रे, स्वर्णाऽऽभरणादि विहाय अञ्जनं कज्जलमेव, न्यधित स्थापयामासेत्यर्थः ॥ ६४ ॥

शोणिमानमधरोष्ठरसज्ञा-
तालुमूलमतुलं कलयत् किम् ।

आस्यमस्य शुशुभे भृशरक्तं
नागवल्लिदलरङ्गतरङ्गैः? ॥ ६५ ॥

नागवल्लिदलरङ्गतरङ्गैर्भृशरक्तं अस्य आस्यं शुशुभे इत्यन्वयः । किमित्युत्प्रेक्षायां, अधरोष्ठरसज्ञाताधमूलं अतुलं शोणिमानं कलयत् दधत्, अस्तीत्युत्प्रेक्ष्यते; अनेन रक्तताऽतिशायित्वमुक्तमिति ॥ ६५ ॥

भाविगच्छविभुतासुरवल्ले-
रालवाल इव दीप्तिपयोभूः ।
मूर्ध्नि रत्नमुकुटो विकटोऽभा-
दस्य जात्यकनकोत्कट उच्चैः ॥ ६६ ॥

अस्य मूर्ध्नि विकटः पृथुः, रम्यो वा, यदाहुः श्रीहेमाचार्यपादा अनेकार्थसंग्रहे—"विकटः कराले पृथुरम्ययोः" इति; विकटो रत्नमुकुटः, पुनः किं०, जात्येन कनकेन उत्कटः, अभात् शुशुभे इत्यन्वयः । इवोत्प्रेक्ष्यते—भाविगच्छविभुतासुरवल्लेः आगमिष्यद्गच्छैश्वर्यकल्पलतायाः, आलवालः स्थानकमिव, कीदृक्, दीप्तिपयोभूः कान्तितोयास्पदम् ॥ ६६ ॥

अस्य कुन्दकुमुदेन्द्वनुकारः
शोभते स्म हृदि हार उदारः ।
उल्लसल्लवणिमैकपयोधेः
फेनपिण्ड इव पाण्डिमपूर्णः ॥ ६७ ॥

अस्य बालस्य, हृदि हारः शोभते स्मेत्यन्वयः । हारः किं०, कुन्दकुमुदेन्दूनां अनुकारः साम्यं यस्य सः, पुनः, उदारः । इवोत्प्रेक्ष्यते—उल्लसल्लवणिमैकपयोधेः देदीप्यमानलावण्यार्णवस्य, फेनपिण्डः, कीदृशः, पाण्डिम्नाऽतिपाण्डुरत्वेन पूर्ण इति ॥६७॥

कुण्डले कनककान्तमणीरुग्-
मण्डले शिशुमुखे शुशुभाते।
राहुभीतिचकितौ रविचन्द्रौ
निर्भयं शरणमेनमितौ किम्?॥ ६८॥

कनककान्तमणीनां सुवर्णरम्यरत्नानां रुग्मण्डलं कान्तिकदम्बकं ययोस्ते, कुण्डले कर्णाभरणे, शिशुमुखे जयसिंहानने, शुशुभाते इत्यन्वयः। किं०, एनं बालं, निर्भयं, मत्वेत्यध्याहारः कार्यः, राहुभीतिचकितौ सन्तौ रविचन्द्रौ शरणं इतौ प्राप्तौ॥ ६८॥

कान्तकुन्तलविलासिनि सौमी
मूर्धनि स्रगनघा शुशुभेऽस्य।
शारदे नभसि नीलतमे किं
निर्मला तरलतारकराजी?॥ ६९॥

अस्य मूर्धनि अनघा निर्मला, सुमानां पुष्पाणामियं सौमी, स्रक् कुसुममाला, शुशुभे इत्यन्वयः। मूर्धनि किं०, कान्ता ये कुन्तलाः केशास्तैर्विलासिनि शोभमाने। किमित्युत्प्रेक्ष्यते—नीलतमेऽतिनीले, शारदे शरत्कालसंबन्धिनि, नभसि व्योम्नि, तरला भास्वरा तारकाणां राजी श्रेणीति॥ ६९॥

गन्धबन्धुरपयोभरसेका-
ऽत्यन्तशान्तपृथुपौरपरागे।
लोकलोचनचयोत्सवनृत्य-
त्तोरणप्रगुणकाञ्चनकुम्भे॥ ७०॥

मण्डपोल्लसदखण्डदुकूल-

व्रातवारितसदातपतापे ।
लोकयन् नगरवर्त्मनि लोकान्
संचचार जयसिंहकुमारः ॥ ७१ ॥

नगरवर्त्मनि पुरमार्गे, कीदृशे, गन्धबन्धुरः सुगन्धिर्यः पयोभरस्तस्य यः सेकः सेचनं तेनाऽत्यन्तं शान्तः शमितः पृथुर्विस्तीर्णः पौरपरागः पुररेणुर्यत्र तस्मिन्, पुनर्नगरवर्त्मनि किं०, लोकलोचनचयस्य जननयनवृन्दस्य उत्सवप्रायाणि यानि नृत्यन्ति वातादिना वेल्लन्ति तोरणानि तत्र प्रगुणाः पट्टकृताः काञ्चनकुम्भा यस्मिंस्तस्मिन् ॥ ७० ॥ पुनर्नगरवर्त्मनि किं०, मण्डपे विचित्रवस्त्रादिमण्डिते उल्लसन्तो ये दुकूलव्राताः पट्टकूलपटलास्तैर्वारितः सदाऽऽतपस्य विद्यमानोपतापस्य निरन्तरातपस्य वा तापः कष्टं यस्मिंस्तस्मिन् नगरपथे, लोकान् नरनारीरूपान् नागरजनान्, लोकयन् निभालयन्, जयसिंहकुमारः संचचाराऽचलत्, तपस्यार्थमिति। इति युग्मव्याख्या ॥ ७१ ॥

स्वर्णमौक्तिकमणिप्रकरोद्यद्-
भूरिभूषणविभूषितदेहा ।
दानमर्थिनिवहाय ददाना
मूर्त्तिभृत् सुरलतेव रथस्था ॥ ७२ ॥

चीनचीररुचिरा फणिवल्ली-
पत्रपूर्णवदना वनजाक्षी ।
वारिराशिदुहिता किमु साक्षा-
दन्वगात् तनुजमेनमथाम्बा ? ॥ ७३ ॥

स्वर्णमुक्ताफलमणीनां प्रकरेण उद्यन्ति दीप्तानि भूरीणि बहूनि यानि भूषणानि तैर्भूषितं देहं यस्याः सा, पुनः, आर्थिनिवहाय याचकनिकराय, दानं ददाना मूर्त्तिभृत् सुरलतेव साक्षात्कल्पवल्लीव, पुनः किं०, रथस्था ॥ ७२ ॥ पुनः, चीनचीरेण दक्षिणीयवस्त्रविशेषेण रुचिरा चार्वी, पुनः किं०, फणिवल्लीपत्रैर्नागलतादलैः पूर्णं वदनं यस्याः सा, पुनः किं०, वनजाक्षी कमललोचना, किमु साक्षात् प्रत्यक्षा, वारिराशिदुहिता लक्ष्मीः, एनं तनुजं जयसिंहं, अम्बा माता कोडिमदेनाम्नी, अन्वगाद् अनुप्राप्तेत्यर्थः। इयमपि युग्मव्याख्या ॥७३॥

अथ तयोर्जन्यजनन्योर्निर्गमने सति नागरस्त्रीविचेष्टितं यज्जातं तद् वर्णयति–

तन्निरीक्षणभृशोत्सुकयोषा-

शोभिसौधशिखराणि तदास्यैः ।

अभ्रवर्त्मनि विनिद्रसरोज-

स्तोमसौम्यसरसीत्वमवापुः ॥ ७४ ॥

तन्निरीक्षणाय भृशोत्सुका या योषाः स्त्रियस्ताभिः शोभीनि शोभायमानानि यानि सौधशिखराणि तानि, तदास्यैस्तन्मुखैः, अभ्रवर्त्मनि गगने, विनिद्रसरोजस्तोमसौम्यसरसीत्वं विस्मेरकमलकलापकमनीयसरोवरभावं, अवापुः प्राप्नुवन्ति स्मेति ॥७४॥

सौधमूर्ध्नि पृथुकोल्लसदङ्का

काऽप्यभात् तदवलोकनशीला ।

शाखिनः शिरसि चापलमुक्ता

वानरीव गललिङ्गितबाला ॥ ७५ ॥

तयोरवलोकनमेव शीलं स्वभावो यस्याः सा तदवलो-

कनशीला, काऽपि स्त्री, पुनः किं०, पृथुकेन बालकेन उल्लसन् अङ्क उत्सङ्गो यस्याः सा, अभात् शोभते स्म । इवोत्प्रेक्ष्यते- शाखिनः शिरसि वृक्षस्याग्रे, चापलेन मुक्ता अङ्गीकृतस्थैर्या, पुनः, गललिङ्गितबाला कण्ठलग्नस्वार्भका, वानरीवेति ॥ ७५ ॥

काऽप्यभात् तदवलोकनवृत्त्यै
लम्बिताननमनोज्ञगवाक्षा ।
वासरेऽप्युदितपूर्णमृगाङ्कं
तत्क्षणात् त्रिदशवर्त्म सृजन्ती ॥ ७६ ॥

तदवलोकनवृत्त्यै तद्वीक्षणाय, लम्बितेन आननेन वदनेन मनोज्ञगवाक्षा, काऽपि स्त्री, अभादित्यन्वयः । किं कुर्वती, सृजन्ती, किं, त्रिदशवर्त्म व्योम, कीदृशं, वासरेऽपि उदितः पूर्णमृगाङ्कः संपूर्णचन्द्रमा यत्र तत्, वासरेऽपि सचन्द्रं नभस्तलं कुर्वतीत्यर्थः ॥ ७६ ॥

नूपुरध्वनितराजपथाश्च
काश्चिदस्थुरथ नीरजनेत्राः ।
बालहंसललिताः कमलिन्यः
किं सुपर्वपथपर्वतजायाम् ? ॥ ७७ ॥

अथेति पुनरर्थे, काश्चित् नीरजनेत्राः स्त्रियः, किंलक्षणाः, नूपुरैर्मञ्जीरैर्ध्वनितो मुखरीकृतो राजपथो राजमार्गो याभिस्ताः, तस्थुः स्थिता इति, बालहंसैर्ललिता रमणीयाः, सुपर्वपथपर्वतजायां गङ्गायां, कमलिन्यः किमित्युत्प्रेक्षा ॥ ७७ ॥

अभ्यमुं मृगदृशो मुहुरौज्झन्
काश्चिदक्षततती रतिशुद्धाः ।

शीकरोत्करमिवोत्तममन्तः-
शायिकेशवहृदम्बुधिवेलाः ॥ ७८ ॥

काश्चिद् मृगदृशः स्त्रियः, मुहुर्वारं वारं, अमुं जयसिंहं, अभि संमुखं, शुद्धा उज्ज्वलाः, अक्षतानां ततीः श्रेणीः, औज्झन् त्यजन्ति स्म; वर्द्धापयन्ति स्मेति भावः। अन्तःशायिनः केशवस्य हरेर्हृद् हृदयं, अम्बुधिवेला इव यथा, उत्तमं शीकरोत्करं क्षिपन्तीति दृष्टान्तः ॥ ७८ ॥

तत्र सौधशिखरेषु मृगाक्ष्यो
लोललोचनचयाः स्म विभान्ति ।
बम्भ्रमद्भ्रमरभासुरकोशाः
पुष्करिण्य इव शैलशिरस्सु ॥ ७९ ॥

तस्मिन् महे, सौधशिखरेषु मृगाक्ष्यः, किंलक्षणाः, लोललोचनचयाश्चपलनयनोत्कराः, विभान्ति स्मेत्यन्वयः। इवोत्प्रेक्ष्यते-शैलशिरस्सु शिखरिशिखरेषु, पुष्करिण्यः पद्मिन्य इव, किं०, बम्भ्रमद्भिः अतिशयेन भ्रमद्भिर्भ्रमरैर्भासुराः कोशा यासां ताः ॥ ७९ ॥

सौधमूर्धसु वधूवरगीता-
ऽऽराव उच्च उदभूत् पुरि तत्र ।
प्रावृषीव धरणीधरशृङ्गे-
ष्वब्दहृद्यमनसां शिखिनीनाम् ॥ ८० ॥

पुनस्तत्र सौधमूर्धसु वधूनां वरः प्रधानो गीताराव:, किं०, उच्चः, द्वेधा द्रव्यतो भावतोऽपि, उदभूत् संजातः। दृष्टान्तमाह--प्रावृषि वर्षासमये, धरणीधरशृङ्गेषु गिरिशिखरेषु, अब्दे

हृद्यं मनो यासां तासां मेघमनोज्ञचेतसां, शिखिनीनां मयूरीणामिवेति ॥ ८० ॥

इत्यशेषवरवेषविशेषाः
प्रीतिपात्रपुरपौरपुरन्ध्र्यः ।
द्रष्टुमेनमचलद्दृश आसन्
वारिवाहमिव मोरमृगाक्ष्यः ॥ ८१ ॥

इत्यमुना प्रकारेण, अशेषवरवेषाणां सर्वोत्तमनेपथ्यानां विशेषो वैशिष्ट्यं यासां ताः, पुनः, प्रीतिपात्रं पुरं शरीरं यासां ताः "पुरं शरीरे" इत्यनेकार्थत्वात्, प्रीतिभाजनीभूतदेहाश्च ताः पौरपुरन्ध्र्यो नागरनार्यः कर्तृभूताः, एनं जयसिंहं, द्रष्टुं अचलदृशः स्थिरनयनाः, आसन् बभूवुः, इवेति यथा, वारिवाहं घनाघनं, द्रष्टुं मोरमृगाक्ष्यः शिखण्डिन्यः, मयूरवाचको मोर-इत्युणादिसिद्धः शब्दोऽस्तीति ॥ ८१ ॥

आगतः किमु धरासु सुराणां
भूरुहः सुकृतसंचयतो नः ? ।
याचकैरयमतर्कि ददानो
रूप्यहेममुखमर्थमदभ्रम् ॥ ८२ ॥

अयं जयसिंहकुमारः, रूप्यहेममुखं अदभ्रं भूरि, अर्थं वित्तं, ददानः, याचकैरिति अतर्कि चिन्तयाञ्चक्रे, अत्र इतेरध्याहारः, इतीति किं०, नः अस्माकं, सुकृतसंचयतः पुण्यप्रकर्षात्, धरासु पृथिवीषु, सुराणां भूरुहः कल्पपादपः, किमागतः ? इति ॥ ८२ ॥

सादरं विजयदानमुनीन्द्रा-
लङ्कृतामनघसंघमनोज्ञाम् ।

आम्रकम्रवनधारिधरित्री-
माजगाम जयसिंहकुमारः ॥ ८३ ॥

सादरं चित्तोत्साहपूर्वकं, जयसिंहकुमारो विजयदानमुनीन्द्रैरलङ्कृतां, पुनः, अनघेन संघेन मनोज्ञाम्, पुनः, आम्राणां आम्रैर्वा कम्रं यद्वनं तद्धारिणी या धरित्री तां आम्रकम्रवनधारिधरित्रीं, आजगाम आगतवानित्यर्थः ॥ ८३ ॥

अथ गुरुदीक्षावर्षमासतिथिलग्नादिनिर्णीतिं वृत्तत्रयेणाह—

वत्सरेऽग्निशशिषट्क्षितिसंख्ये
विश्वविश्वसुखसूत्रणदक्षे ।
ज्येष्ठमासि विशदद्युति हृद्यै-
कादशीदिवस एणपलग्ने ॥ ८४ ॥

वत्सरे संवत्सरे, वर्षे इति यावत्; कीदृशे, अग्निशशिषट्क्षितिसंख्ये अग्नयस्त्रयस्तेन तृतीयाङ्कः, शशी एकस्तेन एकाङ्कः, षडिति षडङ्कः, क्षितिरेका तेन एकाङ्कः, "अङ्कानां वामतो गतिः" इति वचनात् प्रातिलोम्येन एतेषामङ्कानां मीलने संवत् १६१३ वर्ष इत्यागतम्; वत्सरे कीदृशे, विश्वविश्वस्य समस्तजगतो यत् सुखस्य सूत्रणं करणं तत्र दक्षे निपुणे, पुनः कस्मिन्, ज्येष्ठमासि शुक्रमासे, पुनः कस्मिन्, हृद्यैकादशीदिवसे वर्यैकादशीतिथौ, कीदृशे, विशदा उज्ज्वला द्युत् कान्तिर्यत्र तत्र ज्येष्ठशुक्लैकादश्यामिति, अथवा विशदद्युतिश्चन्द्रस्तेन हृद्यो य एकादशीदिवसस्तस्मिन् विशदद्युतिहृद्यैकादशीदिवसे इत्यखण्डितमेव पदम्; पुनः क सतीत्याह—एणपलग्ने सिंहलग्ने वहमाने सतीत्यर्थः ॥ ८४ ॥

अथ ग्रहसंस्थितिमाह—

चापगे सुरगुरावजभाजोः

सूर्यसूनुतमसोर्मिथुनस्थे ।
ज्ञे रवौ च वृषगे भृगुपुत्रे
चन्द्रभूमिसुतयोश्च तुलायाम् ॥ ८५ ॥

चापगे सुरगुरौ धनुःस्थिते बृहस्पतौ, पुनः, अजभाजोः मेषस्थितयोः, सूर्यसूनुतमसोः शनिराह्वोः, पुनः, मिथुनस्थे ज्ञे बुधे, च पुनः, रवौ सूर्येऽपि मिथुनस्थे सति, च पुनः, भृगुपुत्रे शुक्रे, वृषगे वृषभवनगते सति, च पुनः, चन्द्रभूमिसुतयोः सोममङ्गलयोः, तुलायां गतयोरिति । ग्रहसंस्थापना यथा—

| | | |
|---|---|---|
| ६ मं७चं | ५ | ४ बु३ र |
| ८ | श्रीः | शु २ |
| बृ ९ १० | ११ | श१ रा १२ |

इयं दीक्षाकुण्डलिका । दीक्षाग्रहाणां फलादिविचारस्तु दैवज्ञदीपकलिकादेरवधार्य इति ॥ ८५ ॥

अस्मिन् मुहूर्त्ते के किं कृतवन्त इत्याह—

चक्रिरे विजयदानमुनीन्द्राः
श्रीयुतं स्मरमिवाद्भुतरूपम् ।
अम्बया सममिमं जयसिंहं
शावमाशु नियमस्थितिमन्तम् ॥ ८६ ॥

श्रीविजयदानाख्या मुनीन्द्रा गुरवः, इमं जयसिंहं, शावं बालकं, अम्बया जनन्या समम् । इवोत्प्रेक्ष्यते—श्रीयुतं लक्ष्मी-

सहितं, स्मरमिव कन्दर्पमिव, अद्भुतरूपं, नियमस्थितिमन्तं चक्रिरे दीक्षयामासुरित्यर्थः । इति काव्यत्रिकव्याख्या ॥८६॥

अखिलसुखलताया मूलमेवानुकूलं
भुवनवशविधाने वर्णविद्यामनिन्द्याम् ।
विदधुरनघचित्ता विश्वविता व्रतीन्द्रा
जयविमल इति श्रीधाम नामाऽस्य शस्यम् ॥८७॥

व्रतीन्द्रास्ते गुरवः, किं०, अनघचित्ता निर्मलमनसः, पुनः किं०, विश्वविता जगत्प्रसिद्धाः, अस्य शिष्यस्य, जयविमल- इति नाम विदधुरित्यन्वयः । नाम किं०, श्रीधाम, अत एव शस्यं श्लाघ्यं, पुनः किं०, अनुकूलं मूलमेव, कस्याः, अखिल- सुखलतायाः समस्तसुखवल्ल्याः, पुनः, भुवनस्य जगतो वशवि- धाने वशीकरणे, अनिन्द्यां वर्णविद्यामिवेत्यध्याहार्यम् ॥ ८७ ॥

गुरुरपि मुदितात्मा तस्य शिष्यस्य लाभात्
सविधशिव इवासीत् साधुधर्मस्य साक्षात् ।
प्रथममथ स तस्थौ तच्चतुर्मासकं च
प्रचुरपरमपुण्यैः सुन्दरे बन्दिरेऽस्मिन् ॥ ८८ ॥

गुरुः श्रीविजयदानसूरिः, तस्य शिष्यस्य जयविमलस्य, लाभात् प्राप्तेः, मुदितात्मा आसीत् । क इव कस्येति दृष्टान्तं योजयति--इव यथा, सविधशिवः आसन्नसिद्धिकः पुमान्, साधुधर्मस्य लाभात्तथेति । अथ च स गुरुः, प्रथमं तच्चतुर्मा- सकं प्रचुरपरमपुण्यैः सुन्दरेऽस्मिन्नेव बन्दिरे सूरतिनाम्नि, तस्थौ स्थित इति ॥ ८८ ॥

गुरुचरणसरोजोपास्तिलीलामरालः

सनयविनयविद्याऽम्भोजिनीभृङ्गबालः ।
शिशुरपि जयसिंहः शुद्धबुद्धिः सुनन्दा-
तनुरुह इव सद्यः शास्त्रपाठानपाठीत् ॥ ८९ ॥

गुरुचरणसरोजानां उपास्तेः सेवाया या लीला तत्र मरालो हंसः, तदासक्तत्वात्; पुनः, सनयविनया या विद्या सैवाम्भोजिनी पद्मिनी तत्र भृङ्गबालो द्विरेफः, शिशुरपि नव-वर्षीयोऽपि, जयसिंहमुनिः सुनन्दातनुरुह इव वज्रस्वामीव, शुद्धबुद्धिः सन्, सद्यः शीघ्रं, शास्त्रपाठान्, अपाठीत् पठति स्मेत्यर्थः। अन्त्ये वृत्तत्रये मालिनीनाम च्छन्दः, तल्लक्षणं चेदम्—"ननमयययुतेयं मालिनी भोगिलोकैः" इत्युक्तेः॥ ८९ ॥

. . . . . . . . . . . . . . . . . . . . . . . . .

इतीति सर्वं सुगमम् ।

इति सुविहितसभासार्वभौमसमानसकलपण्डितमण्डलीमौलिमौ-
लीयमानपण्डितश्रीकमलविजयगणिशिष्यमुख्यपण्डितपुर-
न्दरप्रख्यपण्डितश्रीविद्याविजयगणिविनेयवाचकश्रीगुण-
विजयगणिविरचितायां विजयप्रदीपिकाऽभिधानधारि-
कायां श्रीविजयप्रशस्तिमहाकाव्यटीकायां पञ्चमः
सर्गोऽर्थतः समर्थितः ।



अर्हम्

# अथ षष्ठः सर्गः ।

—:०:—

अथ षष्ठः सर्गः प्रारभ्यते, तस्येदमादिकाव्यम्—

अन्येद्युरेनमनघं विनयावनम्रं
साक्षाद् बृहस्पतिमिव प्रतिभापटिष्ठम् ।
दृष्ट्वा विशिष्टगुणधाम विनेयमेवं
तैश्चिन्तितं विजयदानमुनीन्द्रचन्द्रैः ॥ १ ॥

अथ अन्येद्युः अन्यदा, एनं विनेयं जयविमलाऽऽख्यं शिष्यं, किं०, अनघं मनोज्ञं, पुनः, विनयावनम्रं, पुनः, साक्षाद् बृहस्पतिमिव प्रतिभया प्रज्ञया, पटिष्ठं पटीयांसं, पुनः, विशिष्टगुणानां धाम गृहं, दृष्ट्वा तैर्विजयदानमुनीन्द्रचन्द्रैः, एवमिति वक्ष्यमाणलक्षणं, चिन्तितं विचारितम् ॥ १ ॥

चिन्तितमेवाह—

नन्वेष शिष्यवृषभः शुभलक्षणश्री-
रस्त्यम्बुराशिरिव दीधितिदीप्ररत्नः ।
आचार्यहीरविजयव्रतिवर्यपार्श्वे
हेमेव चारुमणिरर्हति रम्यधामा ॥ २ ॥

ननु इति वितर्के, एष शिष्यवृषभः अम्बुराशिरिव समुद्र इव, शुभलक्षणश्रीः, पुनः, दीधितिरेव दीप्रं रत्नमस्मिन्निति अस्ति, अत एव आचार्यहीरविजयव्रतिवर्यस्य मम पट्टधरस्य पार्श्वे अर्हति योग्यतामेति । किमिव क इत्याह--हेमेव सुवर्णमिव, चारुमणिः, किं०, रम्यधामा कान्ततेजा इति दृष्टान्तः ॥ २ ॥

ध्यात्वेति साधुशशिभिः शकुनानुकूल्या-
ऽतुल्यर्क्षवारतिथियोगमनोहरेऽह्नि ।
शिष्योत्तमः प्रहित एष चचाल मूर्त्त-
आद्यः पुमर्थ इव सुन्दरसाधुसार्थः ॥ ३ ॥

इति ध्यात्वा तैः साधुशशिभिर्गुरुभिः, प्रहित एष शिष्योत्तमः, चचालाऽचलत्; कस्मिन्, अह्नि दिने, किं०, शकुनानुकूल्यं च अतुल्यानि यानि ऋक्षाणि अश्विन्यादीनि, वाराश्च रव्यादयः, तिथयः प्रतिपदादयः, योगाश्च विष्कम्भप्रमुखाः, अथवा योगा रवियोगराजयोगकुमारयोगप्रमुखाः, अथवाऽतुल्यर्क्षवारतिथीनां यो योगस्त्रिकसिद्धियोगादिस्तेन ताभ्यां वा शकुनानुकूल्याऽतुल्यर्क्षवारतिथियोगाभ्यां मनोहरे दिवसे। इवोत्प्रेक्ष्यते--आद्यः प्रथमः, पुमर्थः पुरुषार्थः, अर्थाद्धर्मः, अङ्गवान् मूर्त्त इति, पुनः, सुन्दरसाधुसार्थ इति शिष्यविशेषणम् ॥ ३ ॥

अथ शकुनान् वर्णयति—

पीनः पृथुः श्रवणयुग्ममनोज्ञमूर्धा
श्यामश्चतुश्चरणचारुरतुच्छपुच्छः ।
द्राक् संमुखं वलितकन्धरबन्धुरास्यो
वामः पथि प्रथमतः सरमासुतोऽगात् ॥ ४ ॥

पीनः पुष्टः, मांसोपचितत्वात्, अत एव पृथुर्विस्तीर्णः, अङ्गोपाङ्गादिभिरिति, पुनः, श्रवणयुग्ममनोज्ञमूर्द्धा श्रोत्रयुगलशालिशिराः, पुनः, श्यामो वर्णतः, वसन्तराजादौ श्यामः श्वानोऽतिवरीयानिति ज्ञायते, पुनः, चतुश्चरणैः चारुः, पुनः, अतुच्छं पुच्छं यस्य सः, पुनः, संमुखं अभिमुखं, तस्य शिष्यस्य संमुखं, वलितकन्धरं वलितग्रीवं यथा स्यात्तथा बन्धुरं आस्यं यस्य

सः, सरमासुतः श्वानः, प्रथमतः पूर्वं, पथि मार्गे, वाम इति द-
क्षिणपार्श्वाद् वामपार्श्वं, अगात् गत इति। स हि प्रयाणेऽतीव शुभः,
यदुक्तम्–"दक्षिणाद् वामगमनं प्रशस्तं श्वशृगालयोः" इति ॥४॥

छायाकुले तरुतले पथि तस्थिवांस-
मेनं विनेयमथ दक्षिणमेत्य चाषः ।
संसूचयन् सपदि चारुवचःप्रपञ्चै-
स्त्रिर्भाविनीमुदयिनीं पदवीं परीतः ॥ ५ ॥

छायया आकुले, अथवा छायायाः कुले गृहे, तरुतले, पथि
मार्गे, तस्थिवांसं स्थितिजुषं, एनं विनेयं जयविमलाख्यं, वामतो
दक्षिणं दिग्भागं, चाषः चासपक्षी, एत्य आगत्य, त्रिः परीतः
तिस्रः प्रदक्षिणा दत्तवान्, चाषः किं कुर्वन्, संसूचयन् ज्ञापयन्,
कां, भाविनीं पदवीं गच्छैश्वर्यलक्षणां; प्रदक्षिणां ददानो हि चा-
षोऽतीव श्रेष्ठः ।

यदुक्तं श्रीभद्रबाहुस्वामिपादैः–

"जम्बू चासमऊरे भारद्दाए तहेव नउले अ ।
दंसणमेव पसत्थं पयाहिणे सव्वसंपत्ती" ॥ १ ॥ इति ।

पुनः पदवीं किं०, उदयिनीं अग्रतोऽभ्युदयवतीमिति,
कैः, चारुवचःप्रपञ्चैः मनोहरवाग्विस्तरैः । एतावता शब्दाय-
मानस्य चाषस्य दर्शनमप्यतिश्रेयः सूचितम् ।

यतः–

"नकुलाजमयूराणां चाषखञ्जनयोरपि ।
दर्शनं कीर्त्तनं शब्दः सर्वसिद्धिकरं नृणाम्" ॥१॥

इति वचनात् ॥ ५ ॥

आनन्दकन्दसदृशा स्वदृशा पुरस्तात्

पश्यन् पथि प्रचलतां परमर्द्धिसिद्ध्या ।
सव्येतरः सुकृतिनोऽस्य विनेयवृन्द-
चन्द्रस्य पेशलकुलो नकुलो जगाम ॥ ६ ॥

अस्य विनेयवृन्दचन्द्रस्य शिष्यसमूहशशिनः, नकुलः सव्येतरो दक्षिणः जगामेत्यन्वयः । अस्य किं०, सुकृतिनः पुण्यात्मनः, कथम्, पुरस्तात् अग्रतः, किं कुर्वन्, पश्यन्, कया, स्वदृशा निजचक्षुषा, किं०, आनन्दकन्दसदृशा हर्षाङ्कुरतुल्यया, पुनर्दृशा किं०, परमर्द्धिसिद्ध्या उत्कृष्टसम्पत्साधिन्या, केषां, पथि प्रचलतां, पुरुषाणामिति गम्यम् । नकुलः किं०, पेशलकुलः कमनीयकुटुम्बयुक् ॥ ६ ॥

सौन्दर्य्यमत्यधिकमात्मदृशोर्विशाल-
स्फारत्वताररयोरपि दृश्यमुष्य ।
सव्येतराः सविधगाः प्रविलोकयन्त-
उत्तेरुरध्वनि मृगाः सुभगास्तदानीम् ॥ ७ ॥

अमुष्य शिष्यस्य, दृशि नयने, आत्मदृशोर्निजनयनयोः, किं०, विशालत्वस्फारत्वाभ्यां तारतरयोर्मनोज्ञतरयोरपि, अत्यधिकं सौन्दर्यं प्रविलोकयन्त इवेत्यध्याहार्यम्, तदानीं तत्र क्षणे, सुभगाः सौभाग्यशालिनः, मृगाः; अध्वनि मार्गे, सविधगाः समीपप्राप्ताः, सव्येतरा दक्षिणाः, उत्तेरुरुत्तीर्णा इत्यर्थः॥७॥

दुर्गाऽहमस्मि मुनिरेष महाव्रती च
स्थानेऽस्य सव्यसाविधे मम वाक् स्थितायाः ।
मत्वेति किं शकुनरत्नमियं सदैव
देवी पथि प्रमुदिता विदधे तथैव ? ॥ ८ ॥

एष जयविमलमुनिर्महाव्रती अस्ति, च पुनः, अहं दुर्गाऽस्मीत्यन्वयः। महाव्रती–मुनीन्द्रः, महादेवश्च; दुर्गा देवीति प्रतीता शकुनजातीया पक्षिणी, पार्वती च; अत एवाऽस्य मद्भर्तुः, सव्यसविधे वामे समीपे, स्थिताया मम वाक्, स्थाने योग्या, अस्ति। किमित्युत्प्रेक्ष्यते--इति मत्वा किं इयं शकुनरत्नं शकुनजातिश्रेष्ठा, इयं देवी दुर्गा, पथि प्रमुदिता सती, तथैव वामस्वरादिकं, विदधे कृतवतीत्यर्थः ॥ ८ ॥

कर्ता नतिं क्रमणयोस्तव कौशिको यो
हन्ता स मे मयि भवेत् प्रमना यथाऽशु।
कुर्यास्तथा मुनिवरेति निवेदनाय
वामोऽस्य किं पथि शुभो बलिभुग् ववासे ?॥९॥

हे मुनिवर! "कौशिकः शक्रघूकयोः" इत्यनेकार्थत्वाद् यः कौशिकः शक्रः, तव क्रमणयोश्चरणयोः, नतिं प्रणामं, कर्त्ता करिष्यति, स कौशिको घूकः, मे मम, हन्ताऽस्ति, तेन स यथा मयि प्रमनाः प्रीतिमान्, भवेत् तथा त्वं कुर्या इति निवेदनायेव किं पथि वामो दक्षिणेतरः, बलिभुग् वायसः, ववासेऽजल्पदित्यर्थः ॥ ९ ॥

अन्ये महर्द्धिपिशुनाः शकुनाः सुदूरे
सन्त्वस्य पुण्यपरमर्द्धिपुरन्दरस्य ।
भेजेऽनिलोऽपि पटुपुष्पितपादपाली-
प्रेङ्खोलनैककुशलोऽतुलमानुकूल्यम् ॥ १० ॥

अस्य मुनेः, किं०, पुण्यपरमर्द्धयो ये पुण्याढ्यास्तेषु पुरन्दरस्य, अन्ये येऽनुक्ताः शकुनाः खञ्जनभैरवीप्रमुखा ग्राम्या आटव्याश्च, किं०, महर्द्धिपिशुना महासंपत्तिसूचकाः, सुदूरे

सन्तु भवन्त्वित्यन्वयः । यतः अनिलो वायुरपि, कीदृशः, पटवः पुष्पिताश्च ये पादपा वृक्षास्तेषामाली श्रेणी तस्याः प्रेङ्खोलने कम्पने एकोऽद्वितीयः कुशलो निपुणः सोऽपि, अतुलं निष्प्रतिमं, आनुकूल्यं भेजेऽभजत्, एतावता वायुरपि पाश्चात्यो महाशकुनमिति सूचितम् ॥ १० ॥

इत्यादिभिः सुभगदृग्विहगैः प्रभूतैः
संसूचितप्रचुरसंपदयं विनेयः ।
पादाब्जपांसुपटलैः पृथिवीं पुनानः
प्राप क्रमाद् द्रुतमजर्जरगूर्जरत्राम् ॥ ११ ॥

अयं विनेयः, किं०, संसूचिता प्रचुरा संपद् यस्य सः, कैरित्याह—सुभगदृग्विहगैः सुभगा भाग्यवती दृग् दर्शनं दृष्टिर्वा येषां ते विहगाः शकुनास्तैः, पुनः किं०, प्रभूतैः अनेकैः, पुनः, इत्यादिभिर्व्यावर्णितस्वरूपैः, अयं किं कुर्वाणः, पुनानः पवित्रीकुर्वाणः, कां, पृथिवीं, कैः, पादाब्जपांसुपटलैः चरणकमलरेणुगणैः, क्रमादनुक्रमेण सूर्यपुराच्चलन्, अजर्जरा सौराज्यसमृद्ध्यादिना सज्जा या गूर्जरत्रा तामजर्जरगूर्जरत्रां, प्राप आगतवानिति ॥ ११ ॥

अत्रापि यद् नगरमागात् तदाह—

आचार्यहीरविजयव्रतिचन्द्रपाद-
पद्मद्वयीपतदपारपरागपूतम् ।
श्रीपत्तनं पुरमगात् क्रमतश्च शिष्यो-
त्तंसः स हंस इव कूलममर्त्यनद्याः ॥ १२ ॥

स शिष्योत्तंसो विनेयशेखरः, अमर्त्त्यनद्या गङ्गायाः, कूलं हंस इव क्रमतः क्रमेण, श्रीपत्तनं अणहिल्लपाटकनामकं पुरं, अगात् प्राप्तः, पुरं किं०, आचार्यहीरविजयव्रतिचन्द्राः श्रीवि-

जयदानसूरिपट्टधारिणस्तेषां पादपद्मद्वय्याश्चरणकमलयुगल्याः पतन् अपारो बहुर्यः परागो रेणुस्तेन पूतं पवित्रमिति ॥१२॥

अथ प्रावेशिकान् शकुनान् कानप्याह—

आनीयमानमृषभद्वयमात्तरश्मि
पुंसा पुरः प्रचलता मिलितं तदस्य ।
गुर्वीं धरिष्यति धुरं जगतोऽयमेव
यद्दर्शनादयमुपैति महत्त्वमर्थः ॥ १३ ॥

अस्य जयविमलमुनेः, तद् ऋषभद्वयं मिलितं, किं क्रियमाणं, आनीयमानं, संमुखमिति गम्यं; केन, पुंसा पुरुषेण, किं कुर्वता, पुरः प्रचलता गच्छता, पुनः किं०, आत्ता गृहीता रश्मिः रज्जुर्यस्य तत् । तत्किमित्याह—यद्दर्शनात् यस्य ऋषभद्वयस्य दर्शनात्, अयमर्थो महत्त्वं माहात्म्यं उपैति । अयं क इत्याह—अयमेव मुनिः, जगतो धुरं धरिष्यति, धुरं किं०, गुर्वीं महतीं, अयमेवेत्यत्र एवकारोऽन्ययोगव्यवच्छेदकः, यतो गुरोः शिष्यभूयस्त्वेऽपि पट्टभृदयमेव भावीति भावार्थसूचक इति तात्पर्यम् ॥ १३ ॥

अभ्यागमत् तदनु संमुखमम्बुपूर्णं
कल्याणकारि कलशं शिरसा धरन्ती ।
कौसुम्भचीवरवती युवतीतिसूचा
कामोत्सवाय भविताऽयमतीव मद्वत् ॥१४॥

तदनु ऋषभद्वयादनु पश्चात्, संमुखं अम्बुपूर्णं पानीयपूरितं, कल्याणकारि मङ्गलकरं, कलशं कुम्भं, शिरसा शीर्षेण, धरन्ती सती, पुनः, कौसुम्भचीवरवती कुसुम्भरङ्गरक्तवस्त्रधरा, युवती स्त्री, अभ्यागमद् मिलितेत्यन्वयः । पुनः कीदृशी, इति सूचा

सूचनं यस्याः सा, इतीति किं, अयं मुनिः, मद्वत् कामोत्सवाय भविता भविष्यति; स्त्रीपक्षे कामः कन्दर्पस्तस्योत्सवः, पक्षे कामं प्रकामं उत्सवस्तस्मै ॥ १४ ॥

भाव्येष शिष्यवृषभः परवादिवंश-
ध्वंसाज्जयावह इहेति निवेदकः किम् ।
अस्याऽमिलत् प्रविशतः पुरगोपुरान्त-
र्मूर्तोऽद्भुतो रस इव द्विरदोऽतितुङ्गः ? ॥१५॥

अस्य मुनेः, पुरगोपुरान्तर्नगरप्रतोलीमध्ये, प्रविशतः प्रवेशं कुर्वतः, अतितुङ्गो द्विरदो गजः, अमिलदित्यन्वयः । इवोत्प्रेक्ष्यते—मूर्तो मूर्त्तिमान्, अद्भुताख्यः पञ्चमरस इव साक्षाद् मिलितः, किमित्याशङ्कायां, गजो निवेदक इव, किमित्याह—एष शिष्यवृषभः शिष्यमुख्यः, परवादिवंशध्वंसात् कुवादिवंशोन्मूलनात्, इह जगति, जयावहो भावीति ॥ १५ ॥

स्कन्धाधिरूढपुरुषः पुरुषः पुरान्त-
रस्यामिलत् प्रविशतः पुरतः प्रतोल्याम् ।
प्रौढप्रभुत्वपदवी न दवीयसी स्याद्
मद्वीक्षणात् प्रविशतामिति सूचनोत्कः ॥१६॥

अस्य प्रतोल्यां प्रविशतः सतः, पुरतोऽग्रतः, पुरान्तर्नगरमध्ये, पुरुषोऽमिलदित्यन्वयः । कीदृशः, स्कन्धाधिरूढपुरुषः स्कन्धेऽधिरूढः पुरुषो बालरूपो यस्य सः, पुरुषारूढो हि पुमानतिश्रेष्ठः, यदुक्तं शकुनशास्त्रे—"प्रस्थाने वा प्रवेशे वा नरारूढो नरो वरः" इति । पुरुषः कीदृशः, इति सूचने उत्क उत्सुकः, इतीति किं, मद्वीक्षणात् प्रविशतां पुरुषाणां, प्रौढप्रभुत्वपदवी दवीयसी दूरतरा, न स्यात् आसन्नैव स्यादिति तत्त्वम् ॥ १६ ॥

संसूचयन्निति किमुद्धतधामवह्नि-

रस्याऽमिलत् प्रविशतः पुरि धूममुक्तः ।

मद्दर्शनस्य फलमस्तपरप्रभावो-

ऽमुष्योल्वणः प्रभविता परितः प्रतापः ? ॥१७॥

अस्य पुरि पत्तने, प्रविशतः, उद्धतं धाम तेजो यस्याऽसौ वह्निश्चेति कर्मधारये उद्धतधामवह्निरग्निः, पुनः, धूममुक्तो निर्धूमः, अमिलदित्यन्वयः। किमित्युत्प्रेक्षायां, इति संसूचयन् , इतीति किं, तदेवाह—अमुष्य एतस्य मुनेः, मद्दर्शनस्य इदं फलं भावि, तदाह-अस्य उल्वण उत्कटं, पुनः, अस्तः क्षिप्तः परेषां प्रभावो येन सः, अस्य प्रतापः परितः सर्वतः, प्रभविता उत्पत्स्यत इति, भविष्यतीति ॥ १७ ॥

गङ्गेव पेशलपयाः शुचिगोविलासै-

श्चेतश्चमत्कृतिकरी च सरस्वतीव ।

ज्योत्स्नेव निर्मिततमद्विजराजतुष्टि-

गौरस्य वत्ससहिता मिलिता पुरस्तात् ॥१८॥

अस्य मुनेः, वत्ससहिता सवत्सा, गौर्मिलितेत्यन्वयः। कीदृशी, पेशलं मनोहारि पयो यस्याः सा, केव, गङ्गेव, गङ्गापक्षे पयः पानीयं, गोपक्षे पयो दुग्धं, पुनः, सरस्वतीव शुचिगोविलासैश्चेतश्चमत्कृतिकरी; सरस्वतीपक्षे शुचय उज्ज्वला ये गोविलासा वाग्विलासास्तैः, गोपक्षे शुचिगोविलासाः शुचयः शुभ्रा गोविलासाः कान्तिविलासा धेनोर्धवलवर्णत्वादिति, अथवा गोविलासा धेनुविलासास्तैः, पुनः कीदृशी, ज्योत्स्नेव कौमुदीव, निर्मिततमा द्विजराजस्य महाब्राह्मणस्य, पक्षे द्विजराजस्य चन्द्रस्य तुष्टिर्यया सा गौर्मिलितेति ॥ १८ ॥

इत्यादिहृद्यतमभाविमहोदयश्री-
संसूचनेन सुभगैर्विहगैः शुभेऽह्नि ।
आचार्यहीरविजयर्षिमहीमहेन्द्र-
पादौ ननाम जयसिंहमुनिर्महात्मा ॥ १९ ॥

इत्यादि हृद्यतमं मनोहरतरं यद् भाविमहोदयश्रीसंसूचनं भविष्यदुच्चैश्वर्यलक्ष्मीज्ञापनं, तेन सुभगै रम्यैः, विहगैः शकुनैः, शुभेऽह्नि दिने, आचार्यश्चासौ हीरविजयर्षिमहीमहेन्द्रो मुनिराजस्तस्य पादौ क्रमौ, महात्मा जयसिंहमुनिर्ननामाऽनमत् ॥ १९ ॥

भाति स्म हीरविजयैर्व्रतिवृन्दचन्द्रै-
र्न्यस्तोऽस्य मूर्धनि नते स्वकरोऽपसव्यः ।
देया ध्रुवं त्रिजगतः प्रभुतानिदानं
स्वाऽस्माभिरस्य पदवी प्रतिभूरिवेति ॥ २० ॥

व्रतिवृन्दचन्द्रैर्हीरविजयैः श्रीहीरविजयसूरीन्द्रैः, अस्य मूर्द्धनि, किं०, नते प्रणतिकृति, अपसव्यो दक्षिणः, करो न्यस्तः सन् भाति स्मेत्यन्वयः । ध्रुवं नूनं, त्रिजगतः प्रभुताया निदानं बीजं, स्वा स्वकीया, पदवी अस्माभिरस्य देया इति प्रतिभूः साक्षीवेत्यर्थः ॥ २० ॥

शिष्यं निरीक्ष्य जयसिंहमुनिं मनस्वि-
मुख्यं मुदां भरमवापुरमी मुनीन्द्राः ।
पूर्णं कलाभिरखिलाभिरुषाधिनाथ-
मापः प्रभोरिव पयोधिनितम्बिनीनाम् ॥२१॥

मनस्विमुख्यं सहृदयश्रेष्ठं, जयसिंहमुनिं शिष्यं निरीक्ष्याऽमी मुनीन्द्राः श्रीहीरविजयाचार्याः, मुदां भरं हर्षप्रकर्षं,

अवापुरित्यन्वयः । दृष्टान्तमाह—इव यथा, अखिलाभिः कलाभिः सकलाभिः कलाभिः, पूर्णमुषाधिनाथं चन्द्रं, निरीक्ष्य पयोधि-नितम्बिनीनां नदीनां, प्रभोः पत्युः समुद्रस्य, आपः पयांसि, मुदं प्राप्नुवन्तीत्यर्थः ॥ २१ ॥

रेजे धियां निधिरयं नितमां गुरूणां
पार्श्वे प्रसन्नमतिलक्ष्मिजुषाममीषाम् ।
पीयूषभुग्वसुमतीभृदुपत्यकायां
दौस्थ्यच्छिदङ्कुर इव त्रिदिवद्रुमाणाम् ॥२२॥

प्रसन्नमतिलक्ष्मिजुषां सद्बुद्धिसंपद्युतां, अमीषां गुरूणां, पार्श्वेऽयं शिष्यः, किं०, धियां निधिः, अत एव रेजे सदृशसं-योगेनाऽराजतेत्यन्वयः । क इव केत्याह—पीयूषभुजो देवास्तेषां वसुमतीभृत् पर्वतो मेरुस्तस्य या उपत्यका ऊर्ध्वभूमिस्तस्यां, त्रिदिवद्रुमाणां कल्पवृक्षाणां, अङ्कुर इव, कीदृशः, दौस्थ्यच्छित् दारिद्र्यभेत्तेति ॥ २२ ॥

वात्सल्यवत्यजनि चात्र विनेयरत्ने
सर्वत्र सन्निभदृशामपि दृग् गुरूणाम् ।
भागेऽतिनिम्न इह वारिधिमेखलायाः
संस्थायिनी भवति वृष्टिरिवाम्बुदानाम् ॥२३॥

सर्वत्र सन्निभदृशामपि गुरूणां दृग् दृष्टिः, अत्र विनेयरत्ने, वात्सल्यवती वत्सला, अजनि जातेत्यन्वयः । वारिधिमेखलायाः पृथिव्याः, भागे, किं०, अतिनिम्ने गभीरे, यथा अम्बुदानां मेघानां, वृष्टिः संस्थायिनी स्थास्नुशीला भवति तथेयं गुरु-दृष्टिरिति दृष्टान्तः ॥ २३ ॥

गुर्वङ्घ्रियुग्मसरसीरुहराजहंसः

प्रावीण्यपेशलमनाः प्रमनाः प्रकुर्वन् ।
नित्याङ्गमण्डनमयं विनयं विनेयः
श्रीधाम वाङ्मयमयं भणति स्म भूरि ॥२४॥

गुरूणां यद् अंह्रियुग्मं क्रमयमलं तदेव सरसीरुहं तत्र राजहंसः, पुनः, प्रावीण्यं चातुर्यं तत्र तेन वा पेशलं रम्यं दक्षं वा मनो यस्य सः, पुनः, प्रमनाः प्रचेताः सन्, प्रकुर्वन्, कं विनयं, किं०, नित्याङ्गमण्डनमयं निरन्तराङ्गभूषणप्रधानं, अयं विनेयः किं०, श्रीधाम, वाङ्मयमग्रेतनसर्गवक्ष्यमाणलक्षणं, भणति स्म, भूरि क्रियाविशेषणं, अथवा वाङ्मयस्यैव विशेषणं; अत्र जातावेकवचनं ज्ञेयम् ॥ २४ ॥

श्रीसङ्घनीरनिधिवृद्धिविधानसज्ज-
स्तन्वन् गुरोर्मनसि तुष्टिमयं विनेयः ।
पक्षे वलक्ष उडुराज इवातिकान्ति-
र्वृद्धिं क्रमेण कलयन् शुशुभे शुभश्रीः ॥२५॥

अयं विनेयः वलक्षे शुक्ले पक्षे, उडुराज इव चन्द्रवद्, वृद्धिं कलयन् शुशुभे शोभते स्मेत्यन्वयः । किं०, अतिशयेन कान्तिर्यस्य सः, पुनः, श्रीसङ्घ एव नीरनिधिस्तस्य वृद्धिविधाने सज्जः पटुः, पुनः, गुरोः श्रीहीरविजयसूरेः, मनसि तुष्टिं तन्वन्, चन्द्रपक्षे गुरोर्बृहस्पतेर्मनसि तुष्टिं तन्वन्, चन्द्रो हि गुरोर्मित्रमिति ज्योतिर्विदां मतं, यदुक्तम्--"जीवस्यार्कात् त्रयो मित्राणि" इति वचनात् ॥ २५ ॥

नित्योन्नतैः सपदि भाविसमुन्नतिश्रीः
प्रौढासनैस्त्वरितभाविमहासनश्च ।

सूरीन्द्रहीरविजयैः सममेष यूथ-
नाथेन पोत इव शिष्यवरो व्यहार्षीत् ॥२६॥

सूरीन्द्रहीरविजयैः समं एष शिष्यवरो व्यहार्षीदित्यन्वयः। क इव केनेत्याह—यूथनाथेन गजेन्द्रेण सह, "पोतस्तु दशवार्षिकः" इति वचनात् पोतो गजबाल इवेति दृष्टान्तः । सूरीन्द्रहीराविजयैः किं०, नित्योन्नतैः सदोदयवद्भिः, शिष्यवरः किं०, सपदि शीघ्रं भाविनी समुन्नातिश्रीरुन्नतिलक्ष्मीः सूरिपदवीरूपा यस्य सः, पोतपक्षे सपदि भाविनी समुन्नतिश्रीः प्रोच्चत्वलक्षणा यस्य सः, पुनः सूरीन्द्रः किं०, प्रौढं महद् आसनं गच्छैश्वर्यलक्षणं येषां तैः, शिष्यः किं०, त्वरितं भावि महासनं गुर्वासनाध्यासनरूपं यस्य सः, गजपोतपक्षे भावि महासनं हस्तिस्कन्धलक्षणं यस्य सः, "आसनं विष्टरे हस्तिस्कन्धे" इत्यनेकार्थत्वात् । अत्र तृतीयान्ते गुरुविशेषणे, प्रथमान्ते च शिष्यविशेषणे इति ॥ २६ ॥

अथ श्रीविजयदानसूरिनिर्वाणस्वरूपं प्राह—

अस्मिन्नथाऽवसर इद्धसमृद्धिभाज-
स्तेजस्विनो विजयदानमुनीन्द्रचन्द्राः ।
स्तोमैर्गवां कुवलयं प्रतिबोधयन्तः
प्रापुः क्रमेण वटपल्लिपुरीं प्रसिद्धाम् ॥ २७ ॥

अथेत्यधिकारान्तरे, अस्मिन्नवसरे श्रीविजयदानमुनीन्द्रचन्द्राः, किं०, इद्धसमृद्धिभाजो दीप्तर्द्धिमन्तः, पुनः किं०, तेजस्विनः, पुनः किं कुर्वन्तः, प्रतिबोधयन्तः, किं०, कुवलयं, गुरुपक्षे भूवलयं, चन्द्रपक्षे चोत्पलं, कैः, गवां वाचां किरणानां च स्तोमैर्वृन्दैः, क्रमेण वटपल्लिपुरीं पत्तनपरिसरस्थां, प्रापुः सं-

प्राप्ता इति ॥ २७ ॥

तत्र ते किं चक्रुरित्याह–

मत्वा स्वमन्तसमयं समयज्ञसूरि-
सिंहा महाव्रतगृहोपरि वैजयन्तीम् ।
आराधनां विदधिरे जिनसिद्धसाधु-
देवात्मसाक्षिकमघौघविघातिनीं ते ॥ २८ ॥

स्वं अन्तसमयं मत्वा ते समयज्ञसूरिसिंहाः समयज्ञा- अवसरज्ञा आगमज्ञा वा ते च ते सूरिसिंहाश्चेति कर्मधारयः, महाव्रतगृहोपरि संयमवेश्मशृङ्गे, वैजयन्तीं ध्वजतुल्यां, पुनः, अघौघविघातिनीं पापव्यापविनाशिनीं, आराधनां व्रताद्यतिचारालोचनारूपां, विदधिरे चक्रुः, कथं, जिनसिद्धसाधुदेवात्मानः अर्हत्सिद्धसंयमिसम्यग्दृष्टिसुरजीवाः साक्षिणो यत्र तज्जिनसिद्धसाधुदेवात्मसाक्षिकमिति क्रियाविशेषणम् ॥ २८ ॥

श्रीविक्रमार्कधरणीधवतः पयोधि-
वस्त्राविलोचनरसद्विजराण्मितेऽब्दे ।
वैशाखमासि तुहिनत्विषिशोभनायां
तिथ्यां च पङ्करुहिणीपतिसंमितायाम् ॥२९॥

श्रीविक्रमार्कधरणीधवतो विक्रमादित्यनरेन्द्रात्, पयोधिवस्त्रा पृथिवी एका, तेन एकाङ्कः, विलोचने नेत्रे द्वे, तेन द्व्यङ्कः, रसाः षट्, तेन षडङ्कः, द्विजराट् चन्द्र एकः, तेन एकाङ्कः, एतैर्वामगतिमीलितैः १६२१ मितेऽब्दे वर्षे, पुनः, वैशाखमासि राधाभिधमासे, पुनः, तिथ्यां, किं०, पङ्करुहिणीपतयः पद्मिनीप्राणनाथाः सूर्याः, ते च लौकिकसमयानुसारेण द्वादशोच्यन्ते, तेषां च द्वादशसंख्यावाचकाः पुराणगताः श्लोका यथा–

अरुणो माघमासे तु सूर्यो वै फाल्गुने तथा ।
चैत्रे मासे तु सविता भानुर्वैशाखमासि च ॥ १ ॥
ज्येष्ठमासे तु मार्त्तण्ड आषाढे तपते रविः ।
गभस्तिः श्रावणे मासि तथा भाद्रपदे भगः ॥ २ ॥
आदित्यश्चाऽऽश्विने मासे कार्त्तिके तु दिवाकरः ।
मार्गशीर्षे तपेद् मित्रः पौषे मासि सहस्ररुक् ॥ ३ ॥
इत्येते द्वादशादित्याः काश्यपेयाः प्रकीर्त्तिताः ।
नित्यं द्वादशमासेषु तपन्ते द्वादशाऽप्यमी ॥ ४ ॥

इति लौकिकग्रन्थानुसारेण द्वादशसूर्याः, तेन सूर्यसंमितायां द्वादशीतिथ्यां, किं०, तुहिनत्विषिश्चन्द्रस्तेन शोभनायां, शुक्लायामिति गम्यम् ॥ २९ ॥

स्मृत्वा चतुःशरणमुत्तममर्हदाद्यं
कृत्वा तथाऽनशनमस्तसमस्तदोषम् ।
ते सूरयोऽथ सुरवामविलोचनाना-
मातिथ्यमस्तकलुषाः कलयाम्बभूवुः ॥३०॥

उत्तमं अर्हदाद्यं चतुःशरणं स्मृत्वा ध्यात्वा, पुनः, कृत्वा विधाय, अस्तसमस्तदोषं निर्दोषं, अनशनं चतुराहारनिषेधरूपं, नियमविशेषं, अत एव ते सूरयः किं०, अस्तकलुषा गतपापाः, सुरवामविलोचनानां देवाङ्गनानां, आतिथ्यं कलयाम्बभूवुर्दिवं गतवन्त इति भावः। श्रीविजयदानसूरीणां सं० १६२१ वर्षे वैशाखशुक्लद्वादश्यां वटपल्ल्यां स्वर्गमनं जातमिति ॥ ३० ॥

तद्भक्तिभावितमनाः सकलोऽथ सङ्घः
स्तूपं व्यधत्त पुरि तत्र मनोज्ञमुच्चैः ।
यद् वन्दितं स्मृतमुदीक्षितमर्चितं च

सूते लतेव मरुतां द्रुतमृद्धिमिद्धाम् ॥ ३१ ॥

अथ तत्र सकलसङ्घः, किं०, तद्भक्तिभावितमना गुरुसेवावासितचेताः, तत्र पुरि वटपल्ल्यां, उच्चैर्मनोज्ञं गुरुपादुकास्थापनारूपं स्तूपं, व्यधत्त चक्रे, इति पूर्वार्द्धव्याख्या। उत्तरार्द्धेन तद् विशिनष्टि--यत् स्तूपं वन्दितं गुणोत्कीर्त्तनादिना स्तुतमिति यावत्, स्मृतं गुरुगुणध्यानादिना ध्यातं, उदीक्षितं दृशा निभालितं, अर्चितं चन्दनादिना पूजितं सत्, मरुतां लतेव सुरवल्लिवत्, इद्धां दीप्तां, ऋद्धिं संपत्तिं, सूते कुरुत इत्यर्थः॥३१॥

आचार्यहीरविजया अथ सत्प्रथेषु
प्राप्तेषु सूरिषु सुपर्वपुरीममीषु ।
खेदं तदा विदधिरे हृदि चक्रवाका
द्वीपान्तरं गतवतीव सरोजबन्धौ ॥ ३२ ॥

अथाऽमीषु श्रीविजयदानसूरिषु, किं०, सत्प्रथेषु सत्ख्यातिषु, सुपर्वपुरीं दिवं, प्राप्तेषु सत्सु, आचार्यहीरविजयास्तदा खेदं विदधिर इत्यन्वयः । यथा सरोजबन्धौ सूर्ये, द्वीपान्तरं गतवति सति, चक्रवाकाः कोका इवेति दृष्टान्तः ॥ ३२ ॥

अथ श्रीहीरविजयसूरिसाम्राज्यं वर्णयति—

या धूः सुधर्मगणभृत्प्रमुखैरशेषै-
रूहेऽत्र सूरिभिरभिद्रुतवादिवृन्दैः ।
दध्रेऽथ सा स्वयममीभिरहार्यधैर्यै-
र्धुर्यैरिवात्मभुजमूर्धनि वर्यवीर्यैः ॥ ३३ ॥

श्रीसुधर्मस्वामिप्रमुखैः सूरिभिः, किं०, अभिद्रुतवादिवृन्दैस्तिरस्कृतदुर्वादिव्रातैः, या धूस्तपागच्छधुर्वी, ऊहे व्यूढेति, अथा-

ऽमीभिः श्रीहीरविजयसूरिभिः, सा धूः स्वयं धुर्यैरिव आत्मभुजमूर्द्धनि स्वस्कन्धे, दध्रे धृतेति, अमीभिः किं०, अहार्यं हर्तुमशक्यं धैर्यं येषां तैः, अत एव पुनर्वर्यवीर्यैर्मनोज्ञबलैः ॥ ३३ ॥

श्रीगौतमप्रतिममूर्त्तय आर्यवर्या-
राज्यं तपागणनभोऽङ्गणभासमानाः ।
प्रापालयन्नथ समर्थमसीमभीम-
कान्तैर्गुणै रविहिमांशुसमा इवामी ॥ ३४ ॥

अथामी आर्यवर्याः पूज्यमुख्याः, किं०, श्रीगौतमो गणभृत्, तत्तुल्या मूर्त्तिर्येषां ते, पुनः, तपागण एव नभोऽङ्गणं गगनाङ्गणं, तत्र भासमानाः शोभमानाः, समर्थं शक्तिसंपन्नं यथा स्यात्तथा, राज्यं प्रापालयन् पालयामासुः । इवोत्प्रेक्ष्यते—असीमभीमकान्तैरतिमात्रोग्रसौम्यैः, गुणैः रविहिमांशुसमाः सूर्यशशितुल्याः, तत्र भीमगुणैः सूर्यसमाः, सौम्यगुणैः शशिसमाश्चेति भावार्थः ॥ ३४ ॥

सर्वज्ञशासनविभासनभासि राज्यं
प्राज्यं प्रपालयति सूरिपुरन्दरेऽस्मिन् ।
क्षोणीतलेऽत्र शुशुभे न परं परेषां
तेजः सहस्रकिरणे सुरवर्त्मनीव ॥ ३५ ॥

अस्मिन् सूरिपुरन्दरे, प्राज्यं प्रकृष्टं, राज्यं प्रपालयति सति, अस्मिन् किं०, सर्वज्ञशासनविभासनभासि जिनशासनप्रकाशकारिमहसि, अत्र क्षोणीतले, परेषां सूरीणां, तेजो न शुशुभे तिरोऽभूदिति भावः । सुरवर्त्मनि गगने, सहस्रकिरणे तरणौ सति, परेषां ग्रहनक्षत्रादीनां तेजो यथा न शोभत इति दृष्टान्तः ॥ ३५ ॥

अस्मिन्नशोभततमाममरत्वभाजा-
मप्यद्भुतं मह इलातिलके गुरूणाम् ।
सप्तार्चिषीव चरमाचलचूलिकायां
चूलामणीयिततनोस्तमसामरातेः ॥ ३६ ॥

अमरत्वभाजामपि गुरूणां दिवं गतानामपि श्रीविजयदानसूरीणां, महस्तेजः, अस्मिन् श्रीहीरविजयसूरौ, किं०, इलातिलके भूमिभूषणे, अशोभततमां भृशं शुशुभे इत्यन्वयः । इव यथा, तमसामरातेः सूर्यस्य, किं०, चरमाचलचूलिकायां अस्ताचलशृङ्गे, चूलामणीयिततनोः शिरोरत्नायितवपुषः, अस्तंगतस्येति यावत्; महः सप्तार्चिषि वह्नौ, शोभते ॥ ३६ ॥

भट्टारकत्वमधिगम्य मुनीन्द्र एष
सौभाग्यभूरपि जगत्यधिकं दिदीपे ।
भद्रः करीन्द्र इव पार्थिवसार्वभौम-
द्वारावनीनलिनदृक्तिलकायमानः ॥३७॥

एष मुनीन्द्रः, किं०, सौभाग्यभूः सुभगताधामापि, भट्टारकत्वं गणैश्वर्यरूपं, अधिगम्य प्राप्य, जगति लोके, अधिकं दिदीपे दीप्तिमापेत्यन्वयः। भद्रः करीन्द्रो भद्रहस्तीव, किं०, पार्थिवसार्वभौमद्वारावनीनलिनदृक्तिलकायमानः महाराजेन्द्रगृहभूभामिनीतमालपत्रोपमानः, इव यथेति दृष्टान्तः ॥ ३७ ॥

भट्टारकोऽयमिह साधुजनैरमानि
भीमत्वभूरपि भृशं तपनो नवीनः ।
अस्योदये मुमुदिरे किल कौशिका य-
च्छाया जवादुदलसच्च घनप्रकाशा ॥३८॥

इह जगति, अयं भट्टारकः, भीमत्वभूरपि भीमतायाः स्थानमपि, नवीनस्तपनो नूतनो रविः, साधुजनैरमानि मेने इत्यन्वयः । नूतनत्वे हेतुमाह—यस्माद्धेतोः, अस्योदये कौशिका इन्द्राः, मुमुदिरे मोदमापुः, च पुनः, घनप्रकाशा बहुप्रसिद्धा, छाया शोभा, उदलसत् शोभते स्म, तपनोदये हि कौशिका उलूकाः, न मुदं लभन्ते "दिवा पश्यति नोलूकः" इत्युक्तेः, तस्यान्धत्वसद्भावात्, पुनः, घनप्रकाशा मेघतुल्या, छाया ध्वान्तं, नोल्लसति "छाया तमसि" इत्यनेकार्थत्वात् ॥३८॥

भट्टारकप्रभुरसावपि कान्तकान्ति-
मेने जनैरिति नवः पतिरोषधीनाम् ।
दोषोदयो न यदभूददसीयदीप्तौ
शोभां बभार सकलः कमलाकरश्च ॥ ३९ ॥

असौ भट्टारकप्रभुः, किं०, कान्तकान्तिरपि आह्लादकृत्कान्तिरपि, नवो नवीनः, ओषधीपतिश्चन्द्रः, जनैर्मेनेऽमानीत्यन्वयः । तथात्वे हेतुमाह—यस्मात् कारणात् अदसीयदीप्तौ एतद्द्युतौ सत्यां, दोषोदयो दोषसद्भावो नाभूत्, च पुनः, सकलः कमलाऽऽकरः लक्ष्मीसमूहः, शोभां श्रियं, बभार धृतवान्, चन्द्रोदये हि दोषोदयो रात्रेरुदयः, भवति, समस्तः कमलाकरस्तटाकः, सरोरुहव्यूहो वा, शोभां न बिभर्त्तीति भावः ॥ ३९ ॥

सप्तर्षिभूषितसमाजमथैकसौम्यं
दोषज्ञयुग्मसुभगं धनदैक्यहारि ।
तत्तद्बहुत्वसहितेन तुलां न यस्य
राज्येन सार्द्धमभजत् सुरराजराज्यम् ॥४०॥

यस्य गुरोः, राज्येन सार्द्धं सुरराजराज्यं तुलां नाभजदित्य-

न्वयः।सुरराजराज्यं हि शक्रराज्यं किं०,सप्तर्षिभिर्भूषितः समाजः सभा यत्र तत्, पुनः किं०, एकः सौम्यो बुधो यत्र तत्, पुनः किं०, दोषज्ञयोर्वैद्ययोरर्थात् स्ववैद्ययोर्यद् युग्मं तेन सुभगं, पुनः किं०, धनदस्य कुबेरस्य यदैक्यं तेन हारि रम्यं; यस्य राज्येन, किं-विशिष्टेन, तत्तद्बहुत्वं तेषां उक्तविशेषणानां यद्बहुत्वं बाहुल्यं ऋषीणां बहुत्वं, सौम्यानां अनुग्राणां बहुत्वं, दोषज्ञानां प्राज्ञानां बहुत्वं, धनदानां श्रीदायिनां बहुत्वं; तेन तत्तद्बहुत्वसहितेन यद्राज्येन महेन्द्रराज्यं न साम्यमेतीति भावार्थः ॥ ४० ॥

कालिन्दिकासलिलकज्जलजालकाले-
ऽङ्गारत्वमञ्चति कुवाद्ययशःप्रपञ्चे ।
कुन्देन्दुकम्बुकुमुदाकरभासि यस्य
राज्ये स्थिरत्वमनिशं घनसार आसीत् ॥४१॥

यस्य गुरोः, राज्ये घनसारे यद्राज्यकर्पूरे, किं०, कुन्देन्दु-कम्बुकुमुदाकरभासि कुन्दकुसुमशीतांशुशङ्खकैरवनिकरकान्तौ, अनिशं स्थिरत्वं स्थैर्यम्, आसीत् इत्यन्वयः । क्व सति, कुवाद्य-यशःप्रपञ्चे दुर्वाद्यकीर्त्तिविस्तारे, अङ्गारत्वं अञ्चति सति अङ्गारतां गच्छतीत्यर्थः । किं०, कालिन्दिकासलिलकज्जलजालकाले य-मुनाजलाञ्जनपुञ्जश्यामले; एतावता दुर्वाद्यशोऽङ्गारेण सह स-ङ्गतिमागतो यद्राज्यकर्पूरः स्थैर्यभागभूदिति भावः ॥ ४१ ॥

भीमत्वभाजि बहुदुःसहतैकपात्रे
ग्रीष्मेऽम्भसामिव रवेरिव भासि भानाम् ।
दुर्ध्यानदुर्गतिदुराग्रहदुर्मतीनां
यद्वैभवे स्फुरति फल्गुदशामसत्ता ॥ ४२ ॥

यद्वैभवे यस्य गुरोः साम्राज्ये स्फुरति सति, फल्गुदशां

असारदृष्टीनां, मिथ्यादृशामिति यावत् । फल्गुदृशां किं०, दुर्ध्यानदुर्गतिदुराग्रहदुर्मतीनां दुर्ध्यानाश्च दुर्गतयश्च दुराग्रहाश्च दुर्मतयश्चेति द्वन्द्वस्तेषां, असत्ताऽसद्भावोऽभूदिति, सतामप्येषामसत्प्रायता जातेति रहस्यम् । दृष्टान्तद्वारेणाह--यथा ग्रीष्मे ज्येष्ठाषाढरूपे ग्रीष्मर्तौ, अम्भसां पानीयानां; पुनः, यथा रवेर्भासि सूर्यस्य दीप्तौ सत्यां, भानां नक्षत्राणां,असत्ता स्यात् तथैवेति दृष्टान्तद्वयम्; यद्राज्ये ग्रीष्मे रविभासि च किं०, भीमत्वभाजि भीमतया युक्ते, पुनः, बहुदुस्सहतैकपात्रे घनदुःसहताया एकपात्रे एकस्थाने, इति विशेषणद्वयं त्रिष्वपि विशेष्येषु योज्यमिति ॥ ४२ ॥

तेषामथ क्रमसमागतसूरिमन्त्र-
ध्यानेऽन्यदा सकलकृत्यकृतौ निदाने ।
चेतोधृतिः सफलमुन्नतिमाससाद
द्राग् युग्मिनामिव तरावमृताशनानाम् ॥४३॥

अथान्यदा तेषां श्रीहीरविजयसूरीणां, चेतोधृतिश्चित्तधारणा, क्रमसमागतसूरिमन्त्रध्याने, किं०, सकलकृत्यानां कृतौ करणे निदाने कारणे, सफलमिति क्रियाविशेषणं, उन्नतिं आससाद उदयं प्रापेत्यन्वयः । दृष्टान्तमाह–युग्मिनां युगलधर्मिणां नराणां, अमृताशनानां सुराणां, तरौ कल्पपादपे, यथा स्पृहा स्यात्तथेति भावः ॥ ४३ ॥

ततस्ते ध्यानाय क्व गतवन्त इत्याह–

मुक्ताफलैरिव पदद्वयपांसुपूरैः
पृथ्वीं विभूषणमयीमथ ते सृजन्तः ।
श्रद्धालुलोककुलसंकुलमुत्सवाढ्यं

डीसाऽभिधाननगरं गुरवोऽधिजग्मुः ॥ ४४ ॥

अथ ते गुरवः पदद्वयपांसुपूरैश्चरणयुग्मरेणुगणैः, मौक्तिकैरिव, पृथ्वीं विभूषणमयीं सृजन्तः सन्तो विहरन्त इति यावत्, श्रद्धालवश्च ते लोकाश्च श्रद्धालुलोका आस्तिकजनास्तेषां यानि कुलानि गृहाणि कुटुम्बानि वा तैः संकुलं पूर्णं, डीसाऽभिधाननगरं, पुनः किं०, उत्सवाढ्यं महार्द्धिमत्त्वात्, अधिजग्मुः प्राप्ता इति ॥ ४४ ॥

आरोप्य तत्र जयसिंहगणीन्दुरत्ने
व्याख्यानमुख्यमखिलं यतिजातकृत्यम् ।
आराधयन्नथ हृदीहितकार्यमेते
श्रीसूरिमन्त्रमनघं शमिनामधीशाः ॥ ४५ ॥

तत्र डीसाऽऽख्ये नगरे, अथैते शमिनामधीशा मुनीन्द्राः, श्रीसूरिमन्त्रं, किं०, अनघं निष्पापं, आराधयन्, हृदि हृदये, मन्त्रं किं०, ईहितं कार्यं यस्मात् तत्, अथवा हृदीहितकार्यमित्यखण्डं पदं, किं कृत्वा, आरोप्य संस्थाप्य, किं, यतिजातकृत्यं यतिजातस्य मुनिवृन्दस्याऽध्ययनाध्यापनयोगोद्वाहनादि कार्यं, किं०, व्याख्यानमुख्यं व्याख्यानादिकं, कस्मिन्, जयसिंहगणीन्दुरत्ने, जयविमलगणिचन्द्रचूडामणौ सर्वं साधुश्राद्धसामाचारीसत्यापनरूपं कृत्यं स्थापयित्वा स्वयं त्रिमासिकं सूरिमन्त्रध्यानं कृतवन्त इति ॥ ४५ ॥

ध्यानाधिरूढमनसां मुनिपुङ्गवानां
तेषां सुदुस्तपतपः सृजतां तदानीम् ।
आसीत् तडित्ततिरिवाऽद्भुतसूरिमन्त्रा-
धिष्ठायकः सुरपतिः प्रकटः पुरस्तात् ॥ ४६ ॥

तेषां मुनिपुङ्गवानां गुरूणां, किं०, ध्यानाधिरूढं मनो येषां तेषां, पुनः किं कुर्वतां, सृजतां, किं, सुदुस्तपं च तत्तपश्च, दुष्करं तपस्तन्वतां, तदानीं ध्यानावसाने सति, तडित्ततिरिव विद्युद्दण्ड इव, अद्भुतसूरिमन्त्राधिष्ठायकः सुरपतिर्देवमुख्यः, पुरस्तादग्रतः, प्रकट आसीत् प्रकटीबभूवेत्यर्थः ॥ ४६ ॥

दन्तद्युतिप्रकरपेशलशुक्तिजानां
कुर्वन्नथोज्ज्वलरुचामुपदां पुरस्तात् ।
ऊचे ललाटमुकुटायितपाणिपद्म-
युग्मः स निर्जर इति प्रमना मनाग्वाग् ॥४७॥

स निर्जरः, किं०, प्रमना हृष्टमानसः, पुनः किं०, मनाग्वाग् ईषद्वचाः, वाचाटो नेतिः यद्गुरुवचः—"ब्रुवते यदेकवाणीमुत्तममर्त्या अमर्त्याश्च" इति, पुनः किं०, ललाटे मुकुटायितं चूडामणीयितं पाणिपद्मयुग्मं करकमलयमलं यस्य सः, इति वक्ष्यमाणं वाक्यं, ऊचेऽवोचदित्यन्वयः । किं कुर्वन्, कुर्वन्, कां, उपदां प्राभृतकं, केषां, दन्तद्युतिप्रकरपेशलशुक्तिजानां दशनच्छविनिवहमनोहरमुक्ताफलानां, किं०, उज्ज्वलरुचां विमलत्विषां, कथं, पुरस्ताद्, गुरोरित्याक्षेप्यम् ॥ ४७ ॥

यदूचे तदाह—

गाङ्गो भगीरथकुमारमिव प्रवाहः
पट्टः पटिष्ठमहिमा भगवन्नयं वः ।
श्रीधामधाम जयसिंहगणीन्दुमेन-
मर्हत्यतुल्यभरभूस्त्रिजगत् पुनानः ॥ ४८ ॥

हे भगवन् ! अयं वो युष्माकं पट्टः, किं०, पटिष्ठो महिमा यस्य सः, गाङ्गः प्रवाह इव गङ्गाप्रवाह इव, भगीरथकुमारं

सगरचक्रधरपौत्रं जन्हुकुमारपुत्रं, तथा श्रीधाम्नोर्लक्ष्मीतेजसोर्धाम गृहं, एनं जयसिंहं गणीन्दुं, अर्हति योग्यतामेति, पट्टो गङ्गाप्रवाहश्च कीदृशः, अतुल्यभरस्य निष्प्रतिमातिशयस्य भूः स्थानमिति, पुनः किं कुर्वाणः, पुनानः, किं, त्रिजगत्, जगत्त्रयं पवित्रीकुर्वाण इति ॥ ४८ ॥

इत्यात्मचिन्तिततमाव्यभिचारचार्वी-
माकर्ण्य कर्णसुखमूलमिमां तदुक्तिम् ।
सूरीश्वरा मुमुदिरे हृदि दृष्टशिष्ट-
स्वप्ना इव त्वरितजातसमीहितार्थाः ॥ ४९ ॥

इत्युक्तरूपस्य, आत्मचिन्तिततमस्य स्वध्यानविषयीकृततरमनोरथस्य योऽव्यभिचारो विसंवादाभावस्तेन चार्वीं रम्यां, पुनः, कर्णसुखमूलं श्रोत्रसुखहेतुं, इमां तदुक्तिं देववाणीं, आकर्ण्य श्रुत्वा, सूरीश्वरा हृदि मुमुदिरे मुदितमनसः संजाता इति । किं०, त्वरितं जातः समीहितोऽर्थो मनोरथपूर्तिलक्षणो येषां ते, क इवेत्याह—दृष्टः शिष्टः स्वप्नो यैस्ते, यथा विशिष्टस्वप्नदर्शनात् शीघ्रं समीहितार्थसिद्धिमन्तः स्युः, तथा तद्देववाक्याऽऽकर्णनाद् गुरवोऽपि संजातार्थितार्थसिद्धिभाजोऽभूवन्निति निर्गलितार्थः ॥ ४९ ॥

स्पष्टं प्रहृष्टतमदृष्टिमथो मुनीन्द्र-
मेनं प्रणम्य च मुहुर्मुहुरित्युदीर्य ।
वेलाम्बुधेरिव विनिर्मितसिद्धिरात्म-
स्थानं यथाऽऽगतमियाय सुरः स सद्यः ॥५०॥

अथो एनं मुनीन्द्रं, किं०, प्रहृष्टतमदृष्टिं हर्षिततरदृशं, प्रणम्य, च पुनः, इति वचः जयविमलगणेरेव पदस्थापनाज्ञा-

पनरूपं वाक्यं, मुहुर्वारं वारं, उदीर्य उक्त्वा, स सुरः सद्यः, किं०, विनिर्मिता सिद्धिर्गुर्वर्थसिद्धिर्येन सः, आत्मस्थानं स्वं पदं, अम्बुधेर्वेलेव जलधिवेलावत्, इयाय गतवान्, कथं, यथाऽऽगतं तथा गतवान् ॥ ५० ॥

ईषत्प्रमीलितदृशः प्रभवः प्रभूणां
हंसेन पद्ममिव भूषितमात्मनोऽङ्कम् ।
पक्षद्वयीविजयिना जयसिंहनाम्ना
शिष्येण शिष्यमुकुटेन तदाऽऽश्वपश्यन् ॥५१॥

तदा तत्र सुरे गते सति, प्रभूणां प्रभवस्ते गुरूणां गुरवः, किं०, ईषन्मात्रं प्रमीलिता निद्रिता दृग् येषां ते, आशु शीघ्रं, आत्मनोऽङ्कं स्वमुत्सङ्गं, किं०, भूषितं भ्राजितं, केन, जयसिंहनाम्ना शिष्येण, किंलक्षणेन, शिष्यमुकुटेन शिष्यशिरोमणिना, कमिव केनेति दृष्टान्तमाह—यथा हंसेन पद्मं कमलं, हंसेन शिष्येण च किं०, पक्षद्वयीविजयिना हंसपक्षे पक्षयोश्छदयोर्द्वयं, शिष्यपक्षे पक्षयोर्मातृपितृरूपयोर्द्वयं, तेन विजयिना जयवता, अपश्यन् पश्यन्ति स्मेत्यर्थः ॥ ५१ ॥

इत्यात्मचित्तगतिना वचसा सुरस्य
स्वप्नेन तेन च तदा स्वयमीक्षितेन ।
अस्मिन् विनेयवृषभे तपगच्छलक्ष्मी-
र्न्यास्या मया ध्रुवमथो गुरुणेत्यमानि ॥५२॥

इति पूर्वोक्तेन, आत्मचित्तगतिना स्वमनोज्ञेन, वचनेन, च पुनः, तदा स्वयमीक्षितेन तेन स्वप्नेन, अथ गुरुणा इत्यमानि इति निश्चिक्ये, इतीति किं, अस्मिन् विनेयवृषभे जयविमलना-

ष्मिन, ध्रुवं नूनं, मया तपगच्छलक्ष्मीर्गच्छाधिपत्यसंपत्तिः, न्यास्या स्थापनीयेति ॥ ५२ ॥

रोचिष्णुचित्तचरिताम्बुजबान्धवेन
प्रातःस्मिताननविलोचनपुण्डरीकाः ।
संघेन मेनिर इमे मुनिपुण्डरीका-
श्चिह्नैर्मुदां सपदि सिद्धसमीहितार्थाः ॥ ५३ ॥

रोचिष्णुचित्तचरिताम्बुजबान्धवेन मनोज्ञमानसाध्यवसायरूपाचारतरणिना, प्रातःस्मिताननविलोचनपुण्डरीकाः प्रातर्वेलायां व्याख्यानसभायां स्मिते हसिते आननविलोचनपुण्डरीके वदननयनकमले येषां ते, इमे मुनिषु पुण्डरीका व्याघ्रा गुरवः, मुदां चिह्नैः पूर्वार्द्धविशेषणसूचितैः, सिद्धसमीहितार्थाः कृतकृत्याः, संघेन समस्तसाधुसाध्वीश्राद्धश्राद्धीलक्षणेन, मेनिरे ज्ञाता इति ॥ ५३ ॥

अमरगिरिसहायां दुर्वहायामदोऽन्यै-
र्गणधरधुरि योज्योऽवश्यमस्माभिरेषः ।
गणिजयविमलाख्यः शिष्यमुख्यः समेषा-
मजनि रतिकृदित्यानन्ददृष्ट्या गुरूणाम्॥५४॥

अमरगिरिर्मेरुस्तद्वत् सहो बलं यस्यां तस्यां, अत एव अदोऽन्यैः एतस्माच्छिष्यादन्यैरपरैः, दुर्वहायां दुर्धरायां, गणधरधुरि गच्छनायकपदव्यां, अवश्यं अस्माभिरेष शिष्यः, योज्यः स्थाप्य एवेति पूर्वार्द्धम्, इति गुरूणामानन्ददृशा हर्षदृशा, गणिजयविमलाख्यः शिष्यमुख्यः समेषां सर्वेषां चतुर्विधसंघलोकानां, रतिकृत् रागभाजनं, अजनि जातवानिति ॥५४॥

हरिहरिदिव सद्योभाविभानूदयश्रीः

सुरसरिदिव भाविस्कन्दशीघ्रप्रसूतिः।
जयविमलगणीन्दोः स्फूर्त्तिरर्तिच्छिदुच्चै-
र्मुनिपपदसमेष्यत्सौख्यलक्ष्मीर्विरेजे ॥ ५५ ॥

जयविमलगणीन्दोः स्फूर्त्तिः, किं०, अर्तिच्छित् पीडाऽपहारिणी, उच्चैरतिशयेन, विरेजे शुशुभे इत्यन्वयः। किं०, मुनिपपदस्य गच्छेशपदव्याः, समेष्यन्ती आगमिष्यन्ती सौख्यलक्ष्मीर्यस्यां सा, केवेति दृष्टान्तद्वयीमाह—इव यथा, हरेरिन्द्रस्य हरिद् दिग् पूर्वेत्यर्थः, किं०, सद्यो भाविनी भानूदयस्य श्रीर्यस्यां सा, पुनरित्यध्याहार्यम्, तेन पुनर्यथा सुरसरिद् गङ्गा, किं०, भाविनी स्कन्दस्य स्वामिनः शीघ्रप्रसूतिर्यस्यां सा, एतावता यथा आसन्नसूर्योदया पूर्वा दिग् भाति, पुनरासन्नकार्तिकेयप्रसवा यथा गङ्गा भाति, तथा शीघ्रमागमिष्यद्गच्छैश्वर्यसुखश्रीः श्रीजयविमलगणेः स्फूर्त्तिरपि शोभते स्मेति भावार्थः। अत्र सर्गे वसन्ततिलकाख्यं छन्दस्तल्लक्षणं चोक्तपूर्वम्, अन्त्यवृत्तद्वयच्छन्दोऽपि पूर्वप्रोक्तलक्षणमतो नाभिहितम् ॥ ५५ ॥

इतीति सर्वं सुबोधम्।

इति सुविहितसभासार्वभौमसमानसकलपण्डितमण्डलीमौलिमौलीयमानपण्डितश्रीकमलविजयगणिशिष्यमुख्यपण्डितपुरन्दरमुख्यपण्डितश्रीविद्याविजयगणिविनेयवाचकगुणविजयगणिविरचितायां विजयप्रदीपिकाऽभिधानधारिकायां श्रीविजयप्रशस्तिमहाकाव्यटीकायां षष्ठः सर्गोऽर्थतः समर्थितः।

अर्हम्

# अथ सप्तमः सर्गः ।



अथ सप्तमः सर्गः प्रारभ्यते, तस्येदमादिकाव्यम्—

अन्येद्युरानन्दितचित्तवृत्तिना
जयादिसिंहेन विनेयभूभुजा ।
युक्ता जयेनेव गदाग्रजाग्रजा-
स्ते सूरिसिंहा व्यहरन् भुवस्तले ॥ १ ॥

अन्येद्युरिति एकदा डीसाऽऽख्यनगरात्, ते सूरिसिंहा भुवस्तले भूतले, व्यहरन् विहरन्ति स्मेत्यन्वयः । ते किं०, युक्ताः सहिताः, केन, जयादिसिंहेन विनेयभूभुजा जयसिंहशिष्यराजेनेति, किंलक्षणेन, आनन्दिता हर्षिता गुरुहितदृशा चित्तवृत्तिर्यस्य तेन, क इव केनेत्याह--गदाग्रजाग्रजा अच्युताग्रजा इन्द्राः, यथा जयेन स्वपुत्रेण जयदत्तेन, युक्ता इवेत्युत्प्रेक्षा वा, दृष्टान्तो वेति ॥ १ ॥

अथ काव्यत्रयेण शिष्यं वर्णयति—

शिष्योऽथ स श्रीजयसिंहसंज्ञकः
प्रज्ञाप्रकर्षात् परभागपेशलः ।
अम्भोरुहं भृङ्गयुवेव पादयो-
र्द्वन्द्वं गुरूणां भजमान आदरात् ॥ २ ॥

लक्ष्मीलतामण्डपमङ्गमण्डनं
स स्फूर्तिकीर्तिभ्रमरीसरोरुहम् ।
विद्यासरिद्वाहधराधरं धरन्

नित्यं प्रभूतं विनयं लसन्नयम् ॥ ३ ॥
अष्टाभिरुत्कृष्टतमैर्धियां गुणै-
र्युतः स्वकीयेतरशास्त्रसन्ततीः ।
सिद्धीः समृद्धा इह हारिमूर्त्तिभिः
प्रीतः पिनाकीव वशीचकार सः ॥ ४ ॥

अथ सः श्रीजयसिंहसंज्ञकः शिष्यः, किं०, प्रज्ञाप्रकर्षात् प्रतिभोत्कर्षात्, स्वकीयेतरशास्त्रसंततीः स्वकीयपरकीयग्रन्थवीथीः, प्रीतः सन् वशीचकारेत्यन्वयः। स किं०, परभागपेशलः गुणोत्कर्षप्रियः, पुनः किं कुर्वाणः, भजमानः सेवमानः, किं, गुरूणां श्रीहीरविजयसूरीणां पादयोर्द्वन्द्वं चरणयुगं, इव यथा, भृङ्गयुवा अम्भोरुहं कमलमिति ॥ २ ॥ पुनः किं कुर्वन्नित्याह—विनयं धर्ममूलं विनयगुणं, किं०, लसन्नयं न्यायोपपन्नं, पुनः किं०, प्रभूतं बहुं धरन्, पुनर्विनयं किं०, लक्ष्मीलतायाः संपद्वल्लेर्मण्डपं, तदाऽऽधारत्वात्; पुनः, अङ्गस्य मण्डनं, शरीरशोभाहेतुत्वात्; पुनः, सस्फूर्त्तिकीर्त्तिभ्रमर्याः सरोरुहं सरोजं, पुनः, विद्यैव सरिद्वाहो नदीप्रवाहस्तस्य धराधरं पर्वतं, तदुत्पादकत्वादिति ॥ ३ ॥ पुनः स शिष्यः किं०, युतः संयुक्तः, कैः, धियां गुणैः, किं०, उत्कृष्टतमैरत्युत्कृष्टैः, पुनः कतिभिः, अष्टाभिः शुश्रूषाश्रवणग्रहणधारणोहापोहार्थज्ञानलक्षणैः, अमीभिरष्टभिर्बुद्धिगुणैः, स शिष्यः, स्वपरशास्त्रश्रेणीः वशीकुरुते स्म; यथा पिनाकी महादेवः, हारिमूर्त्तिभिरष्टभिर्मनोज्ञमूर्त्तिभिः, अष्टौ सिद्धीर्वशीकुरुते, तथेति दृष्टान्तः। अत्रान्ते पुनः सशब्दस्तस्य पुनः पुनः प्रसिद्धिवाचकः, अथवा सशब्दो दृष्टान्तीकृते पिनाकिनि योज्य इति त्रयाणां युगपद्व्याख्यानम् ॥ ४ ॥

अथैकादशभिः काव्यैः शास्त्राध्ययनमाह—

निःशेषशास्त्रार्थसमर्थनात्मकं
विचक्षणो लक्षणनाम वाङ्मयम् ।
जग्राह शीघ्रं स्वगुरोः समीपतः
कूपादिवाऽपः पथिकस्तृषाऽऽतुरः ॥ ५ ॥

स विचक्षणः, लक्षणनाम वाङ्मयं व्याकरणाख्यं शास्त्रं, किं०, निःशेषशास्त्रार्थसमर्थनात्मकं समस्तग्रन्थार्थसमर्थनस्वरूपं, स्वगुरोः समीपतो जग्राह गृहीतवान्, यथा कूपात् तृषातुरः पथिकः पान्थ इव, अपः पाथांसि, इति दृष्टान्तः ॥ ५ ॥

व्यक्तिः प्रदीपैरिव यैर्द्रुतं भवे-
दाकीटकोटिध्वजमुख्यवस्तुनः ।
स रूढमिश्रान्वयिनां च संग्रहान्
नाम्नामभाणीद् भगवद्विनेयराट् ॥ ६ ॥

कीटं मर्यादीकृत्य आकीटं, आकीटं च कोटिध्वजमुख्यं च यद् वस्तु तस्य आकीटकोटिध्वजादिवस्तुनः, नाम्नां यैः प्रदीपैरिव व्यक्तिर्भवेदित्यन्वयः । स भगवद्विनेयराट् गुरोः शिष्यराजः, अत्र तच्छब्दोऽध्याहार्यस्तेन तान् नाम्नां संग्रहान्, नाम्नां किं०, रूढमिश्रान्वयिनां रूढमिश्रयौगिकाणां, संग्रहान् नाममालाऽऽख्यग्रन्थान्, अभाणीद् भणति स्मेति ॥ ६ ॥

गुणाश्च दोषाश्च भजन्ति दृक्पथं
गिरां पथामर्ककरैरिवाशु यैः ।
काव्यानुशास्तिप्रभृतीन् बहून् सुधी-
र्ग्रन्थानलङ्कारपटून् पपाठ सः ॥ ७ ॥

यैर्ग्रन्थैर्गिरां वाचां, गुणा औदार्यसमताकान्त्यादयः, च पुनः, दोषा अनर्थकश्रुतिकटुप्रभृतयः, दृक्पथं भजन्ति ज्ञानगोचरमायान्तीत्यन्वयः । दृष्टान्तमाह—इव यथा, पथां मार्गाणां गुणाश्च दोषाश्च अर्ककरैः सूर्यकिरणैः, दृक्पथं नेत्रपथं, भजन्ति; सः सुधीः शिष्यस्तान् ग्रन्थान् बहून्, पुनः, अलङ्कारपटून् चित्राद्यलङ्कृतिपाटवयुक्तान्, पुनः किं०, काव्यानुशास्तिः काव्यानुशासनं, तत्प्रभृतीन् काव्यानुशासनकाव्यप्रकाशवाग्भटालङ्कारकाव्यकल्पलतादीन्, पपाठाऽपठत् ॥७॥

यैश्छन्दसां व्यक्तिरुदेति दोषभूः
स्वादैरपि स्वाच्छ्यजुषामिवाम्भसाम् ।
छन्दोऽनुशास्तिं सृजतः सुधीर्बहून्
ग्रन्थाननैषीद् विषयं धियामयम् ॥ ८ ॥

छन्दसामार्यावृत्तादीनां, यैः करणभूतैः, दोषभूर्व्यक्तिः उदेति प्रकटीभवति; छन्दोदोषजा निर्णीतिर्यैर्ज्ञायत इति शेषः। किंच तन्निर्णीतौ गुणनिर्णीतिस्तु जातैव, विधिप्रतिषेधयोरेकतरनिषेधेऽन्यतरसद्भावस्याऽवश्यंभावादिति छन्दोगुणव्यक्तेरुपादानं न कृतमिति प्रेक्ष्यम्। कैः केषामिवेति दृष्टान्तमाह-स्वाच्छ्यजुषामपि अम्भसां स्वच्छानामपि पानीयानां, स्वादैर्माधुर्यक्षारत्वादिरसास्वादरूपैः, यथा जलदोषोद्भवा व्यक्तिर्ज्ञायत इति पूर्वार्धम्, तान् मात्रागणादिभेदानां छन्दसां अनुशास्तिं शिक्षां, सृजतः कुर्वतः, बहून्, छन्दोनुशासनच्छन्दोरत्नावलीवृत्तरत्नाकरादीन् ग्रन्थान्, अयं विनेयो धियां विषयं अनैषीत् ज्ञानगोचरीकृतवानिति ॥ ८ ॥

कान्ताननेकान्तमतावलम्बिनः
स्याद्वादरत्नाकरवाङ्मयादिकान् ।

ग्रन्थान् स निर्ग्रन्थपतिप्रियः पृथून्
सुधीरधीते स्म विनेयवासवः ॥ ९ ॥

स सुधीः सद्बुद्धिः विनेयवासवः शिष्येन्द्रः, पुनः किं०, निर्ग्रन्थपतेर्गुरोः प्रियः इष्टः, स्याद्वादरत्नाकरवाङ्मयादिकान् स्याद्वादरत्नाकरनामा अणहिल्लपुरपत्तने श्रीसिद्धराजजयसिंहदेवप्रमुखमहासभ्यसमक्षं कुमुदचन्द्राख्यदिगम्बराचार्येण सह विवादं कुर्वाणैर्लब्धजयवादैर्वादिश्रीदेवसूरिपादैः कृतश्चतुरशीतिसहस्रप्रमाणः, प्रमाणग्रन्थ इति शेषः; स आदौ येषां संमत्यनेकान्तजयपताकारत्नाकरावतारिकाप्रमाणमीमांसान्यायावतारस्याद्वादकलिकादिग्रन्थानां ते स्याद्वादरत्नाकरवाङ्मयादिकास्तान्, पुनः किं०, कान्तान् वल्लभान्, विदुषामिति शेषः; पुनः किं०, अनेकान्तमतावलम्बिनः स्याद्वादाश्रयिणः जैनप्रमाणरूपान् ग्रन्थान्, पुनः किं०, पृथून् विस्तीर्णान्, अधीते स्माऽध्यैष्टेति ॥ ९ ॥

वित्तं विनेवौकसि पण्यसुभ्रुवां
विना यदभ्यासममार्दवात्मकम् ।
अभ्यस्तकाव्यादिकशास्त्रसन्तते-
रपि प्रवेशः परदर्शने न हि ॥ १० ॥

पण्यसुभ्रुवां वेश्यानां, ओकसि गृहे, यथा वित्तं विना प्रवेशो न स्यात्, वित्तं किं०, अमार्दवात्मकं काठिन्यात्मकं, यदूचे प्राचीनैः—

"रोचते यदि ते लक्ष्मीस्तदमार्दवमाश्रय ।
पुत्रस्यापि हि विश्वासमकुर्वाणः पिता धनी" ॥ १ ॥

इति वचनात् । तथा यदभ्यासं किं०, अमार्दवात्मकं कठिनं, यदभ्यासं विना अभ्यस्तकाव्यादिकशास्त्रसन्ततेः अभ्या-

सविषयीकृतसाहित्यादिकसकलशास्त्रश्रेणेरपि पण्डितस्य, परदर्शने, शैवशासने प्रवेशो न स्यादिति ॥ १० ॥

प्रेक्ष्येति पूज्यैः परमार्थकाङ्क्षिभि-
स्तैः प्रेरितोऽध्यैष्ट कुशाग्रधीः सुधीः ।
प्रमाणसंज्ञानि बहूनि सत्वरं
शास्त्राणि चिन्तामणिमुख्यकानि सः ॥११॥

इति पूर्वोक्तं, प्रेक्ष्य विचार्य, तैः पूज्यैः, किं०, परमार्थकाङ्क्षिभिस्तत्त्वार्थाभिलाषिभिः, स सुधीः, किं०, कुशाग्रधीर्दर्भाग्रतीक्ष्णबुद्धिः, पुनः किं०, प्रेरितः सन् चिन्तामणिमुख्यकानि श्रीमद्गङ्गेश्वरोपाध्यायविरचिततत्त्वचिन्तामणिर्मुख्यो येषु किरणावलीवर्द्धमानप्रशस्तपादभाष्यशशधरादिषु तदादीनि चिन्तामण्यादीनि, प्रमाणसंज्ञानि शैवतर्करूपाणि शास्त्राणि, सोऽध्यैष्टाऽधीतवानित्यर्थः । इति युग्मव्याख्या ॥ ११ ॥

ग्रहोदयास्ताहववैरसौहृदा-
तिचारमुख्यप्रचुरोक्तिसूचकान् ।
ग्रन्थान् महाज्योतिषपण्डितप्रियान्
प्राज्यानपाठीदशठः स शिष्यराट् ॥ १२ ॥

ग्रहाणां अङ्गारकादीनां उदयश्चाऽस्तश्च आहवश्च वैरं च सौहृदं च अतिचारश्च ग्रहोदयग्रहास्तग्रहाहवग्रहवैरग्रहसौहृदग्रहातिचाराः, अत्र द्वन्द्वान्ते श्रूयमाणस्य प्रत्येकं संबन्धात् ग्रहशब्दस्यादौ प्रत्येकं संग्रहस्तेन ग्रहोदयास्ताहववैरसौहृदातिचारमुख्या या उक्तयः किं०, प्रचुरा बह्वयः, प्रचुरोक्तयस्तासां सूचकान्, पुनः, महाज्योतिषपण्डितप्रियान् महाज्योतिर्विद्वल्लभान्, पुनः, प्राज्यान् प्रभूतान्, स शिष्यराट् अशठः सन् अपाठीत् पपाठेति॥१२॥

संख्यासु नैकद्विमुखासु यैर्जना-
मुह्यन्ति वित्तैरिव गेहिकर्मसु ।
जज्ञेऽन्तिषत् स त्रिशतीमुखान् बहून्
ग्रन्थान् गरिष्ठान् गणितप्रपञ्चिनः ॥ १३ ॥

यैर्जना एकद्विमुखासु एकद्व्याद्यासु परार्द्धान्तासु संख्यासु न मुह्यन्ति, इव यथा, गेहिकर्मसु गृहस्थकृत्येषु, वित्तैः समृद्धजना न मुह्यन्ति, स अन्तिषत् शिष्यः, त्रिशतीमुखान् ग्रन्थान् किं०, गणितप्रपञ्चिनः संख्याविस्तारिणः, तान् बहून्, जज्ञे ज्ञातवानिति ॥ १३ ॥

अर्थो भवद्भूतभविष्यदात्मको
जनेन यैर्ज्ञानवतेव वीक्ष्यते ।
विवेद शास्त्राणि स शाकुनानि सद्-
वसन्तराजप्रमुखाणि भूरिशः ॥ १४ ॥

भवद्भूतभविष्यदात्मकोऽर्थः वर्तमानातीतानागतस्वरूपः पदार्थः, यैर्जनेन लोकेन, ज्ञानवतेव ज्ञानिनेव, वीक्ष्यते ज्ञायत इति स शिष्यः, तानि वसन्तराजः शकुनशास्त्रविशेषस्तत्प्रमुखाणि वसन्तराजशकुनार्णवशकुनरहस्यशकुनपञ्चाशिकाशकुनप्रदीपादीनि शास्त्राणि, विवेद वेत्ति स्मेति ॥ १४ ॥

चित्ते तदीये स्फटिकोपमे स्फुटं
सर्वात्मना सर्वविदां वचोऽद्भुतम् ।
पुरः स्थितं रूपमिवात्मदर्शके
सद्यो विनाऽऽयाममवाप संक्रमम् ॥ १५ ॥

तदीये चित्ते, किं०, स्फटिकोपमे विशदत्वादच्छत्वाच्च,

सर्वविदां वचः सर्वज्ञवाक् सर्वात्मना सर्वप्रकारेण टीकाटिप्पनकपञ्जिकाभाष्यचूर्णिसंग्रहणीनिर्युक्तिप्रभृतिना प्रकारेण, सर्वोऽपि सिद्धान्त एकादशाङ्गद्वादशोपाङ्गादिः, आयासं विनाऽक्लेशेन, संक्रमं समवाप प्रतिबिम्बं प्राप, यथाऽऽत्मदर्शके दर्पणे, पुरःस्थितं रूपमिति दृष्टान्तः ॥ १५ ॥

स्वेनाऽन्यसत्केन च तत्त्वहारिणा
शास्त्रेण शाली भयकृद् बभूव सः ।
असद्गतीनां कुदृशां कुवादिनां
पक्षद्वयश्रीः फणिनामिवाऽहिभित् ॥ १६ ॥

स शिष्यः स्वेन स्वकीयेन अन्यसत्केन च परकीयेण शास्त्रेण, किं०, तत्त्वहारिणा सतत्त्वेन, अधीतेनेति शेषः; शाली शोभितः सन् भयकृद् बभूव । केषामित्याह—असद्गतीनां दुर्गतीनां असज्ज्ञानिनां वा, 'गतिर्ज्ञाने' इत्युक्तेः । कुदृशां मिथ्यादृष्टीनां, पुनः, कुवादिनां दुर्वादिनां, स्वशास्त्रेण जैनागमलक्षणेन मिथ्यादृशां भयकृत्, पुनः, परेण शैवशास्त्रेण, दुर्वादिनां भयकृद् बभूवेति भावार्थः । इव यथाऽहिभिद् गरुडः । किं०, पक्षद्वयस्य श्रीर्यस्य सः, शिष्यपक्षे स्वपरशास्त्रवेत्तृत्वलक्षणपक्षद्वयस्य श्रीर्यस्येति, पक्षे असती गतिर्गमनं येषां कुटिलगतित्वादिति, तेषां फणिनां सर्पाणां भयाय भवतीति दृष्टान्तः ॥ १६ ॥

विशुद्धनानाविधशास्त्ररत्नभूः
कर्पूरपूरोपममूर्त्तिरर्त्तिहृत् ।
विनेय एष प्रभुपूज्यपुङ्गवै-
र्मेनेतमां मूर्त्तिमती सरस्वती ॥ १७ ॥

एष विनेयः प्रभुपूज्यपुङ्गवैः श्रीहीरविजयसूरिगुरुमिश्रै-

मूर्त्तिमती साक्षात्, सरस्वती मेनेतमामित्यन्वयः । किं०, विशुद्धानां नानाविधशास्त्ररत्नानां व्यावर्णितरूपाणां भूः स्थानं, शिष्यस्तदाश्रयत्वात्, सरस्वती तु तदुत्पादकत्वात्, पुनः किं०, कर्पूरपूरोपमा शिष्यस्य सुगन्धित्वेन, निर्मलत्वेन, सरस्वत्यास्तु शुभ्रत्वेन मूर्त्तिर्यस्य सः, अर्त्तिहृदिति विशेषणं द्वयोस्तुल्यम् ॥ १७ ॥

अलीव पाथोरुहि पाण्डुनीडजः
स्वर्गापगाया इव कूलयोः पदे ।
रेमे सदामोदिनि पुण्यजीवने
तेषां गुरूणां हृदये स शिष्यराट् ॥ १८ ॥

पाथोरुहि कमले, अलीव भृङ्ग इव, पाण्डुनीडजो राजहंस इव स्वर्गापगाया गङ्गायाः कूलयोः पदे स्थाने, यथा रमते, तथा तेषां गुरूणां हृदये स शिष्यराट् रेमे अरमत । पाथोरुहि किं०, सदामोदिनि सत्परिमलशालिनि, गङ्गाकूलपदे किं०, पुण्यं जीवनं पानीयं यत्र तत्र, गुरूणां हृदये किं०, सदामोदिनि सदाहर्षिणि, पुनः किं०, पुण्यस्य वा पुण्यं वा जीवनं वृत्तिर्यत्र तत्रेति ॥ १८ ॥

पूज्या अथ क्ष्मां हिमवालुकाकणै-
रिवाञ्चयन्तः पदपद्मपांसुभिः ।
श्रीस्तम्भतीर्थं नगरं समागताः
सन्मन्दिरं बन्दिरमिन्दिराऽऽस्पदम् ॥ १९ ॥

अथ ते पूज्याः पदपद्मपांसुभिश्चरणकमलरेणुभिः, हिमवालुकाकणैः कर्पूरलवैरिव, क्ष्मां पृथिवीं, अञ्चयन्तस्सन्तो विहरन्त इति यावत् । श्रीस्तम्भतीर्थं किं०, नगरं स्थलपथसद्भावात्, पुनः

किं०, बन्दिरं जलपथसद्भावात्, पुनः किं०, सन्मन्दिरं प्रशस्य-गृहं, पुनः किं०, इन्दिराया लक्ष्म्या आस्पदं पदं, समागता आगतवन्त इति ॥ १९ ॥

तत्राथ पुण्यैः प्रमना अगारिणी
पूनीतिनाम्नी शुचिशीलधारिणी ।
महोत्सवोत्साहमयैः श्रियो व्ययै-
रर्हत्प्रतिष्ठां सुघटामजीघटत् ॥ २० ॥

अथ तत्र नगरे स्तम्भतीर्थे, पुण्यैः प्रमना हर्षितमानसा, पूनीतिनाम्नी अगारिणी गृहस्था, अस्तीत्यन्वयः । किं०, शुचि-शीलधारिणी, सा पूनी नाम श्राविका श्रियो व्ययैः, किं०, महो-त्सवोत्साहमयैः प्रचुरोत्सवैः प्रचुरोत्साहैश्च, अर्हत्प्रतिष्ठां, किं०, सुघटां मनोज्ञरचनां, अजीघटत् कारयामासेति ॥ २० ॥

पूज्याः ! प्रतिष्ठा विबुधत्वसंपदा-
मस्मिन् गणीन्दौ जयसिंहनामनि ।
शिष्यर्षभे स्वे प्रविधीयतां द्रुतं
गुरौ गुरुत्वं त्रिदशैरिवोत्तमम् ॥ २१ ॥

हे पूज्याः ! अस्मिन् जयसिंहनाम्नि, गणिचन्द्रे, पुनः किं०, शिष्यर्षभे विनेयवृषभे, स्वे स्वकीये, विबुधत्वसंपदां प-ण्डितपदश्रीणां, प्रतिष्ठा विधीयतामित्यन्वयः। यथा गुरौ बृह-स्पतौ, त्रिदशैर्देवैः, गुरुत्वं प्रविधीयते; तस्य हि सुरगुरुरित्याभि-धानादिति ॥ २१ ॥

इत्याग्रहं कुर्वति कृत्यकोविदे
सङ्घेऽनघे तीर्थनिवासिनि स्फुटम् ।

वैद्योपदिष्टं स्वयमिष्टमित्यतो
न्यायादभूवन् गुरवो मुदञ्चिताः ॥ २२ ॥

इति उक्तरूपं आग्रहं कुर्वति सति तीर्थनिवासिनि स्तम्भतीर्थवास्तव्ये, सङ्घे, पुनः किं०, कृत्यकोविदे कार्यज्ञे, " इष्टं वैद्योपदिष्टम् " इति न्यायात् गुरवस्ते पूज्या मुदञ्चिता हर्षान्विता अभूवन्निति । अर्थतो युग्मं व्याख्यातमिति ॥ २२ ॥

वर्षे रसाक्षिक्षितिपेऽथ फाल्गुने
मासे दशम्यां तुहिनत्विषित्विषि ।
मूलेऽनुकूले त्रिजगन्मनोमुदा-
मस्मिन् प्रतिष्ठाहनि लग्नशालिनि ॥ २३ ॥

सङ्घानघप्रेमपयोजभास्करे
शिष्ये सवैराग्यरसे मुनीश्वराः ।
अस्थापयन् पण्डिततामिह स्वयं
प्रमोदतः कन्दमिवालवालके ॥ २४ ॥

अथ वर्षे, किं०, रसाः षट्, अक्षिणी द्वे, क्षितिपा राजानः षोडश, एतेऽङ्का यत्र तत्र वर्षे, सं० १६२६ वर्षे, पुनः, फाल्गुने मासे, पुनः, दशम्यां तिथौ, किं०, तुहिनत्विषिः चन्द्रस्तस्य त्विट् कान्तिः श्वेतपक्षत्वाद्, यस्यां तस्यां तुहिनत्विषित्विषि, पुनः, अस्मिन् प्रतिष्ठाहनि प्रतिष्ठाया दिने, किं०, लग्नशालिनि शोभनलग्नके, पुनः किं०, त्रिजगन्मनोमुदां अनुकूले मूले हर्षानुकूलहेताविति ॥ २३ ॥ अत्र किं कृतवन्त इत्याह—शिष्ये, किं०, सङ्घानघप्रेमपयोजभास्करे चतुर्विधसङ्घस्नेहसरोजसूर्ये, पुनः०, सवैराग्यरसे, ते मुनीश्वरा गुरवः, पण्डिततां अस्था-

पयन् पाण्डित्यं स्थापयामासुः, आलवाले स्थानके कन्दमिवेति दृष्टान्तो वोत्प्रेक्षा वा । युग्मव्याख्या ॥ २४ ॥

संप्रापुषि प्रीतिपदं सुधीपदं
विनेयरत्नेऽत्र पवित्रपद्धतौ ।
महात् प्रतिष्ठाप्रभवात् पुनस्तया
श्राद्ध्याऽथ पून्या विदधेऽधिकोत्सवः ॥२५॥

अस्मिन् विनेयरत्ने, किं०, पवित्रा पद्धतिश्चारित्रप्रवृत्तिरूपा यत्र तत्र, प्रीतिपदं सुधीपदं, संप्रापुषि सति पण्डितपदवीं प्राप्ते सति, प्रतिष्ठाप्रभवात् महाद् महोत्सवात् अपि तया श्राद्ध्या पून्या पुनरधिकोत्सवो गुर्वङ्गपूजाशिष्याङ्गपूजासङ्घपूजारूप्यकप्रभावनारूपो, विदधे चक्रे ॥ २५ ॥

आनन्दसाम्राज्यमभूत्तदा सुधी-
पदं विनेयेऽत्र गणावुपेयुषि ।
चित्रं किमत्राभ्युदिते दिवाकरे
पद्मोत्सवो यद्वचसामगोचरः ? ॥ २६ ॥

अत्र विनेये जयविमलगणौ, सुधीपदं उपेयुषि सति, आनन्दसाम्राज्यं हर्षाद्वैतत्वलक्षणं, अभूत् सर्वेषामिति शेषः । अत्र किं चित्रं, यत् दिवाकरेऽभ्युदिते सति, वचसां अगोचरो वचनाविषयकः पद्मोत्सवोऽम्भोजोत्सवो भवतीति ॥ २६ ॥

तेऽथर्षिमुख्याः सुदृशां दृशां श्रियं
सद्यः सृजन्तो मुनिराजिसंयुताः ।
भूमौ विहारं विदधुर्गवां भरै-
स्तमो हरन्तस्तपना इवाम्बरे ॥ २७ ॥

अथ स्तम्भतीर्थतोऽन्यदा ते ऋषिमुख्याः, किं०, मुनिराजिभिः संयुताः परिवृताः, पुनः०, सुदृशां सम्यग्दृष्टीनां, दृशां नेत्राणां, श्रियं शोभां, सृजन्तः कुर्वन्त इति भूमौ विहारं विदधुर्विजह्रुरिति । के इव केत्याह—तपनाः सूर्या इवाम्बरे गगने; ते च तपनाश्च किं कुर्वन्तः, तमो हरन्तः, एकत्र पापं, अन्यत्र ध्वान्तम्, कैः, गवां भरैः, एकत्र गवां वाचां, अन्यत्र गवां किरणानां भरैरिति ॥ २७ ॥

सुपर्वपूर्णं वृषभावभासुरं
सुधामयं वैश्रमणास्पदं सदा ।
अहम्मदावादपुरं पुरन्दर-
द्रङ्गोपमं प्रापुरथर्षिशेखराः ॥ २८ ॥

अथ ऋषिशेखरा वाचंयमवतंसाः अहम्मदावादपुरं प्रापुरित्यन्वयः । किं०, पुरन्दरद्रङ्गोपमं इन्द्रपुरोपमं, इत्युत्तरार्द्धम् । पूर्वार्द्धेन द्वयं श्लेषालङ्कारेण वर्णयति—सुपर्वपूर्णं शोभनोत्सवपूर्णं, अन्यत्र देवपूर्णं, पुनः, वृषभावेन धर्मरागेण भासुरं; अन्यत्र वृषा शक्रस्तस्य भावः सद्भावस्तेन भासुरम्, पुनः, सुधामयं सुधा गृहादिलेपकारी द्रव्यविशेषः, तन्मयम्, यतस्तत्र भूयसां सुधाधवलीकृतानां सौधानां सद्भावात् आधाराधेययोरभेदोपचारादिति । अन्यत्र सुधामयं पीयूषमयं अमृतप्रचुरं, देवभोज्यत्वात् सुधाया इति । पुनः, वैश्रमणास्पदं, एकत्र वै निश्चितं श्रमणास्पदं साध्वास्पदं, अन्यत्र वैश्रमणास्पदं कुबेराख्यलोकपालस्थानम्; इति द्वयोः श्लेषः ॥ २८ ॥

अहम्मदाबादसमीपवर्त्तिनि
श्रियां विलासैककुले जनाकुले ।
अहम्मदाह्वेऽथ पुरे मुनीश्वरा-

श्चार्वीं चतुर्मासभवां स्थितिं व्यधुः ॥ २९ ॥

अथाऽहम्मदपुरे, किं०, अहम्मदावादाख्यनगरस्य समीपवर्त्तिनि शाखापुरे, पुनः किं०, श्रियां विलासस्य एककुलेऽद्वितीयगृहे, पुनः, जनाकुले लोकसङ्कुले, मुनीश्वरा गुरवः, चतुर्मासभवां चातुर्मासिकीं स्थितिं, चार्वीं रम्यां, निर्विघ्नत्वाद् व्यधुश्चक्रिरे ॥ २९ ॥

अथैकदैषां गणचिन्तनात्मनां

सूरीश्वराणां कृतधर्मकर्मणाम् ।

श्रीसूरिमन्त्राधिपतिः सुपर्वराट्

समेत्य भूयोऽभिदधेऽभिरामगीः ॥ ३० ॥

एकदा तत्पारणके तत्रैव पुरे, एषां सूरीश्वराणां, किं०, कृतधर्मकर्मणां विहितपौरुषीपाठनादिसुकृतकृत्यानाम्, पुनः किं०, गणचिन्तने आत्मा येषां तेषां गच्छचिन्ताविचारिणां, निशीथे सुप्तानामिति शेषः । श्रीसूरिमन्त्राधिष्ठायकः सुपर्वराट् सुरवरः, किं०, अभिरामगीर्मनोज्ञवाक्, भूयः पुनः, समेत्यागत्य, अभिदधेऽवक् ॥ ३० ॥

विद्वन्मणेः श्रीजयसिंहवाग्मिनः

पट्टप्रदाने किमियं विलम्बधीः ? ।

भावी यतो वीरपरम्पराब्जिनी-

दिवाकरः पट्टधरः स्फुरन्नयम् ॥ ३१ ॥

हे पूज्याः ! इत्यध्याहार्यम्; विद्वन्मणेर्मनीषिश्रेष्ठस्य, जयसिंहवाग्मिनो जयविमलाख्यपण्डितस्य, पट्टप्रदाने, इयं किं विलम्बधीः अनुत्सुकता, भवतां दृश्यत इति, यतः कारणात् अयं पट्टधरः, किं०, वीरपरम्पराब्जिन्यां दिवाकरो भावी इत्यवधार्यम् ॥ ३१ ॥

उक्त्वेत्यदृश्यस्त्रिदशः स जातवान्
मुदं मुनीनामधिपाश्च भेजिरे ।
स्वेष्टार्थसिद्धौ समताजुषामपि
प्रेष्येव मुत् स्याद् यदरं पुरःसरा ॥ ३२ ॥

इत्युक्त्वा स त्रिदशः सुरः, अदृश्यो जातवान् गत इति यावत् । च पुनः, मुनीनां अधिपाः गुरवो मुदं भेजिरे हर्षमापुरिति । तद्धेतुमेवाह–समताजुषामपि साधूनामपि, स्वेष्टार्थसिद्धौ जातायां, अरं अत्यर्थं, मुत् प्रेष्येव किंकरीव, पुरःसरा स्यादिति ॥ ३२ ॥

अथान्यदा सूरिसभोग्रधन्वनोऽ-
भ्येत्येति भून्यस्तसहस्तमस्तकाः ।
श्रीवाचकाधीश्वरपण्डितोत्तमाऽऽ-
दयः समस्ता ऋषयो बभाषिरे ॥ ३३ ॥

अथ सूरिसभोग्रधन्वनः आचार्यपर्षदिन्द्रान्, श्रीगुरून्, वाचकाधीश्वरा उपाध्यायोत्तमाः पण्डितोत्तमाश्च, गीतार्थमुख्यास्तदादयस्तत्प्रमुखाः समस्ता ऋषयः, किं०, भून्यस्तसहस्तमस्तकाः पृथिवीस्थापितसपाणिशीर्षाः कृताञ्जलय इति यावत् । अभ्येत्य इति बभाषिरेऽवदन् ॥ ३३ ॥

यदब्रुवंस्तदाह–

पूज्याः ! अनूचानपदैकगोचरा
सङ्घस्पृहा श्रीजयसिंहमण्डपे ।
ऊकेशवंशप्रभवेऽधिरोहणात्
फलेग्रहिर्वल्लिरिवास्तु सत्वरम् ॥ ३४ ॥

हे पूज्याः ! अनूचानपदैकगोचरा आचार्यपदस्थापनाविष-

यिणी सङ्घस्पृहा श्रीजयसिंहमण्डपे श्रीजयविमलरूपमण्डपे, किं०, ऊकेशवंशप्रभवेऽधिरोहणात् वल्लिरिव सत्वरं शीघ्रं, फलेग्रहिरस्तु स्तात्; वल्लिरपि वंशजे मण्डपे चटिता सती फलवती भवति, तथेयमपीति तत्त्वम् ॥ ३४ ॥

स्वाकूतदेवोक्तिसमस्तसङ्घदृक्-
साङ्गत्यसन्तुष्टहृदोऽथ सूरयः ।
ओमित्युदारां गिरमानने स्मिता-
म्भोजे निविष्टां वरटामिवाकरन् ॥ ३५ ॥

अथ सूरयः, किं०, स्वाकूतं निजाभिप्रायः, देवोक्तिर्देववाणी, समस्तसङ्घस्य वाचकपण्डितादिकस्य, दृग् दृष्टिर्बुद्धिर्वा, स्वाकूतं च देवोक्तिश्च समस्तसङ्घदृक् च स्वाकूतदेवोक्तिसमस्तसङ्घदृशः, तासां साङ्गत्यमव्यभिचारित्वेन यन्मिलनं तेन सन्तुष्टहृदः हर्षितहृदयाः सन्तः, आनने मुखे, ओमिति गिरं अकरन् कुर्वन्ति स्म, इवोत्प्रेक्ष्यते—वरटां कलहंसीं स्मिताम्भोजे निविष्टां कुर्वन्ति स्म, अत्र आननस्य स्मिताम्भोजोपमाऽऽरोपणात् स्मितमुखीभूय तद्वचस्तैः प्रतिपन्नमिति रहस्यम् ॥ ३५ ॥

अत्याग्रहात् सङ्घभवादनुग्रहाऽऽ-
ग्रहा अथो सूरिसमाजकुञ्जराः ।
अहम्मदावादपुरं पुरोत्तमं
ते प्राविशन्नुत्सवपालिपेशलम् ॥ ३६ ॥

अथ ते सूरिसमाजकुञ्जरा आचार्यसभासिन्धुराः, उत्सवानां पालिः श्रेणिस्तया पेशलं रमणीयं, पुरोत्तमं अहम्मदावादपुरं, प्राविशन् प्रविशन्ति स्मेति। कस्मात् सङ्घभवात् अत्याग्रहात् सङ्घजनघनाग्रहात्, ते किं०, अनुग्रहाग्रहा अनुग्रहस्य ग्राहिणः इति ॥

अथ नवभिर्नगरप्रवेशार्हशकुनान् वर्णयति—

पुरप्रवेशे प्रथमं सुभूषणा

सकङ्कणा पुण्ड्रवती सुहासिनी ।

सूरीश्वराणाममिलद् मृगेक्षणा

मूर्द्ध्ना दधाना घटमम्भसा भृतम् ॥ ३७ ॥

पुरप्रवेशे सति, तेषां सूरीश्वराणां, प्रथमं मृगेक्षणा स्त्री अमिलत्, किंलक्षणा, सुभूषणा सुशृङ्गारा, अनेन सभर्तृकत्वमसूचि; भर्त्तारमन्तरा शृङ्गारस्यैवाभावादिति । पुनः किं०, सकङ्कणा कराभरणवती, पुनः, पुण्ड्रवती सतिलका, पुनः, सुहासिनी स्मितमुखी, पुनः किं कुर्वाणा, मूर्द्ध्ना शिरसा, अम्भसा भृतं घटं, पानीयेन पूर्णं कुम्भं, दधाना। अत्र मृगेक्षणाया विशेषणपञ्चकं उत्तरोत्तरमङ्गलवाचकम् । यतः—शृङ्गारादपि कङ्कणं बलवन्मङ्गलसूचकं, कङ्कणादपि भाले तिलकं बलवत्, ततोऽपि मुखे स्मितं बलवत्, ततोऽपि पूर्णकुम्भधारणं बलवदिति हृदयम् ॥ ३७ ॥

जगर्ज पर्जन्य इवावनौ गतो

महाननड्वानथ दक्षिणः पुरः ।

सदैव वोढाऽहमिवैष पण्डितो

धुरं गणस्यास्य वदन्निवेत्यलम् ॥ ३८ ॥

अथ ततः पुरो दक्षिणो गुरोर्दक्षिणकरदिशि महान् अनड्वान् महावृषभः, जगर्ज गर्जितनादमकरोत्। इवोत्प्रेक्ष्यते— "पर्जन्यो गर्जदम्बुदे" इत्यनेकार्थवचनात्, अवनौ पृथिव्यां, पर्जन्यो गर्जन्मेघो, गतः प्राप्त इव अहमिव एष पण्डितोऽपि, अस्य गणस्य तपगच्छस्य, धुरं वोढा इति अलं बाढस्वरेण वदन्निवेति भावः॥३८॥

अभ्यापतन्नास्पदमेकमर्चिषां

पूज्यैर्विशद्भिर्ददृशेऽथ दर्पणः ।

यन्मे तुलामेति तदस्ति कीदृशं

द्रष्टुं किमस्यास्यमितीन्दुरीयिवान् ? ॥३९॥

अथ पूज्यैर्नगरं प्रविशद्भिर्दर्पणो ददृशे दृष्ट इत्यन्वयः । किं कुर्वन्, अभ्यापतन् संमुखमागच्छन्, पुनः किं०, अर्चिषां रोचिषां, एकं अद्वितीयमास्पदं इति पूर्वार्द्धम् । यद् मे मम तुलां मदुपमामेति तत्कीदृशमस्ति इति हेतोः अस्य गुरोरास्यं मुखं, द्रष्टुं किं दर्पणच्छलादिन्दुश्चन्द्रमा, ईयिवान् प्राप्त इति ॥ ३९ ॥

गोण्यः पुरस्तात् सुमृदामुदीक्षिता

बह्व्यो नवानां किमुपागता इति ? ।

वक्तुं यथा स्मो जगतां वयं तथा

शिष्योऽपि वो भाव्ययमत्र मङ्गलम् ॥४०॥

ततः पुरस्तात् नवानां नूतनानां, सुमृदां शोभनमृदां तत्क्षणोत्खातानामिति शेषः । बह्व्यो घना गोण्यो गुरुभिरुदीक्षिता दृष्टा इत्यन्वयः । इति किं वक्तुं कथयितुं उपागताः?, इतीति किं, यथा जगतां वयं मङ्गलं स्मः, तथा वो युष्माकमयं शिष्योऽपि सूरिपदस्थः सन् मङ्गलं भावीति भावार्थः ॥ ४० ॥

स्पर्द्धां मया यः कुरुते यशोभरैः

पश्यामि तस्यास्यमिति त्वरात्मकम् ।

दध्यौषधीवल्लभदीप्तिसन्निभं

तदाऽमिलत्तत्पुरगोपुरे पुरः ॥ ४१ ॥

यो गुरुः, यशोभरैः कीर्त्तिपुञ्जैः, मया सह स्पर्द्धां कुरुते तस्य

आस्यं मुखं पश्यामि इति त्वरात्मकं औत्सुक्यभृत्, दधि तदा तत्पुरगोपुरे नगरप्रतोल्यां, अमिलत् । किं०, औषधीवल्लभदीप्तिसंनिभं चन्द्ररश्मिसदृशं, धवलवर्णत्वादिति ॥ ४१ ॥

सिद्धान्नपात्रं परिपूर्णमापतत्
पन्थानमक्ष्णोः स्म नयन्ति सूरयः ।
सिद्धाः प्रसिद्धाः स्वमनोरथा इति
प्रोल्लासि चिह्नं किमु मूर्त्तमागतम् ? ॥४२॥

ततः सूरयः सिद्धान्नपात्रं अक्ष्णोः पन्थानं नयनपथं, स्म नयन्ति नयन्ति स्मेत्यन्वयः । सिद्धान्नपात्रं किं०, परिपूर्णमन्यूनं, पुनः, आपतत् संमुखमागच्छत्, किमु उत्प्रेक्ष्यते-प्रसिद्धाः प्रतीताः, स्वमनोरथाः सिद्धाः सिद्धिमाप्ता इति प्रोल्लासि चिह्नं मूर्त्तं मूर्त्तिमत् आगतम् ॥ ४२ ॥

सौत्रो गुरुर्ग्रन्थिरुदैक्षि सूरिभिः
सभर्तृकस्त्रीशिरसा धृतः पुरः ।
मेने तदैवं च यशोविधायिने
चिकीर्षितं कृत्यमिदं गुणाय नः ॥४३॥

ततः पुरः सौत्रः सूत्रसंबन्धी ग्रन्थिर्गुरुर्महान्, पुनः किं०, सभर्तृकस्त्रीशिरसा सधववधूशीर्षेण, धृतः सूरिभिरुदैक्षि दृष्टः, च पुनः, सूरिभिरेवं तदा मेनेऽमानि । एवमिति किं, इदं चिकीर्षितं कर्तुमीप्सितं, कृत्यं सूरिपदप्रदानरूपं कार्यं, नोऽस्माकं, यशोविधायिने श्लाघ्यताकारिणे, गुणाय भावीतिशेषः ॥४३॥

दृतिं वहन्नद्भिरलं भृतं द्वयो-
रभ्यर्णयोस्तैर्वृषभो निरीक्षितः ।

शिष्यं तमीक्षेऽहमिवातिवीवधं
वोढा स्वपृष्ठे य इवेत्यभीयिवान् ॥ ४४ ॥

ततो गुरुभिस्तैर्वृषभो निरीक्षित इत्यन्वयः । वृषभः किं०, कुर्वन् वहन्, कं, दृतिं, किं०, भृतं, काभिः, अद्भिः पानीयैः, कयोः, अभ्यर्णयोः पार्श्वयोः, किं०, द्वयोरितिपूर्वार्द्धम् । तं शिष्यं ईक्षे । तं कमित्याह—यः अहमिवातिवीवधं भूरिभारं गच्छभाररूपं स्वपृष्ठे वोढा इति हेतोरिवोत्प्रेक्ष्यते; अभीयिवान् अभ्यागात् ॥४४॥

अभ्यापतन् पेशलपुष्पभृत्स्रज-
स्तेषां गुरूणां विशतां पुरं पुरः ।
वक्तुं किमेता इति शिष्य एष वो
लोकं विधाता सुरभिं वयं यथा ? ॥ ४५ ॥

तेषां गुरूणां पुरं विशतां पुरोऽग्रतः, पेशलपुष्पभृत्स्रजः कमनीयकुसुममाला अभ्यापतन् संमुखमागता इत्यन्वयः । इति किं वक्तुं एताः प्राप्ताः । इतीति किं, तदाह—वो युष्माकं एष-शिष्यः लोकं सुरभिं धर्मेण रम्यं विधाता, यथा वयं लोकं सुरभिं सुगन्धिं कुर्मस्तथाऽयमपीति ॥ ४५ ॥

इत्यादिभिर्भूरिभविष्यदक्षय-
क्षेमस्य चिह्नैः शकुनैश्च शोभनैः ।
उत्साहभाजो नगरं गुरूत्सवं
सङ्घैर्वृताः स्म प्रविशन्ति सूरयः ॥४६॥

इत्यादिभिर्वर्णितस्वरूपैः भूरिभविष्यदक्षयक्षेमस्य बह्वागमिष्यदखण्डकुशलस्य चिह्नैर्निमित्तैः, च पुनः, शोभनैः शकुनैः सद्भिः अत एवोत्साहभाजः सन्तः सूरयो गुरूत्सवं महोत्सवं, नगरं राजनगरं, सङ्घैः सहिताः प्रविशन्ति स्मेति ॥ ४६ ॥

मुत्प्रह्वीपाह्वगृहस्थहस्तिनः
सोत्कर्षभूषाभिरलङ्कृतं गृहम् ।
पूज्या अलंचक्रुरुदारवृत्तयः
सभां सुधर्मामिव वज्रपाणयः ॥ ४७ ॥

मुदा हर्षेणाथवा मुदि हर्षे प्रह्वः परायणो यो वीपाह्वो गृहस्थहस्ती श्राद्धसिन्धुरस्तस्य गृहं, किं०, अलङ्कृतं शृङ्गारितं, काभिः, सोत्कर्षाः सविशेषा या भूषा मण्डनलेपनधूपनदीपनधवलनस्वस्तिकस्थासकार्पणतोरणचन्द्रोदयादिनिर्मापणरूपास्ताभिः पूज्या अलञ्चक्रुः, किं०, उदारवृत्तयः स्फाराचाराः । अत्र दृष्टान्तमुत्प्रेक्षां वा प्राह--सुधर्मां सभां वज्रपाणय इन्द्रा इवेति ॥ ४७ ॥

अथास्तिकैरस्तिधनैर्गुरूत्तमा-
भिप्रायविज्ञानविचक्षणैः क्षणात् ।
प्रचक्रिरेऽस्मिन्नगरे महोत्सवा
याम्यैः समीरैरिव केलिकानने ॥ ४८ ॥

अथाऽस्मिन्नगरे आस्तिकैः, किं०, अस्तिधनैर्धनवद्भिः, पुनः किं०, गुरूत्तमानां योऽभिप्रायोऽध्यवसायः पदस्थापनारूपस्तस्य विज्ञाने ज्ञाने विचक्षणैर्निपुणैः, महोत्सवा महामहाः, प्रचक्रिरे । अत्र दृष्टान्तमाह—केलिकानने क्रीडोद्याने, याम्यैर्दाक्षिणात्यैः, समीरैर्मलयानिलैः, तरुलताकुसुमगुल्मादिवृद्धिहेतवो महोत्सवा महोत्सेका महोत्कर्षा विधीयन्त इति ॥ ४८ ॥

अथाचार्यपदोत्सवं वर्णयति—

स मण्डपोऽमण्डि मनोज्ञकुम्भभृ-

त्तस्मिन्महे मौक्तिकमञ्जुजालकः ।
पराजितं येन सपूर्णपूर्णिमा-
चन्द्रं शरत्तारकतारमम्बरम् ॥ ४९ ॥

तत्र महे तस्मिन्महोत्सवे स मण्डपः अमण्डि मण्डित इत्यन्वयः । किं०, मनोज्ञं माङ्गल्यं कुम्भं शीर्षे बिभर्त्तीति सः, पुनर्मण्डपः किं०, मौक्तिकानां मञ्जूनि चारूणि जालकानि रचनाविशेषा यत्र सः, स क इत्याह—येन मण्डपेन अम्बरं आकाशं, पराजितं जिग्ये । अम्बरं किं०, सपूर्णपूर्णिमाचन्द्रं सह पूर्णेन कृत्स्नेन ग्रहणाद्यभावात् अखण्डितेन पूर्णिमाचन्द्रेण राकामृगाङ्केण वर्तते यत् तत्, पुनः, शरत्तारकैस्तारं मनोहरम् । अत्र पूर्णकुम्भस्य चन्द्रोपमा मौक्तिकजालकानां तारकोपमा चेति ॥ ४९ ॥

कालं विनाऽऽविर्भवदम्बुभृन्नवा-
म्भोवाहभूत्साहवता समन्ततः ।
धूमेन दग्धागुरुधूपजन्मना
रेजे पुरं तत्र महोत्सवे महत् ॥ ५० ॥

तत्र महोत्सवे तत् पुरं महत् बहु, रेजे भृशं शुशुभे इत्यन्वयः । केन धूमेन, किं०, दग्धागुरुधूपजन्मना निर्दग्धकृष्णागुरुधूपोद्भवेन, पुनर्धूमेन किं०, कालं वर्षाकालं विना आविर्भवन् प्रकटीभवन्, पुनः अम्बुभृत् पानीयवान् यो नवाम्भोवाहो नूतनमेघस्तद्भूयं उत्साहस्तद्वता, सजलजलधरोत्साहकारिणा लोकानामिति ॥ ५० ॥

रेजुः पुरे दुन्दुभिवल्लकीलस-
न्मृदङ्गचङ्गादिकवाद्यनिस्वनाः ।

तत्रोत्सवे पूरितरोदसीपदा
गर्जारवास्तोयमुचामिवाम्बरे ॥ ५१॥

तत्रोत्सवे दुन्दुभिवल्लकीलसन्मृदङ्गचङ्गादिकवाद्यनिस्वना भेरीवीणासन्मर्दलचङ्गादिवाद्यध्वनयो रेजुर्भान्ति स्मेत्यन्वयः । किं०, पूरितं भरितं, रोदसीपदं द्यावाभूम्यास्पदं यैस्ते, अम्बरे गगने तोयमुचां मेघानां, गर्जारवा इवेत्युत्प्रेक्ष्यते ॥ ५१ ॥

सुवर्णमुक्ताफलरत्नभूषणा
बभुः पुरे तत्र महे मृगीदृशः ।
नन्तुं मुनीनामधिनायकस्य किं
क्रमद्वयीमप्सरसः समागताः ? ॥ ५२ ॥

तत्र महे मृगीदृशो हरिणीलोचना बभुरित्यन्वयः । किं०, सुवर्णमुक्ताफलरत्नभूषणाः कनकमौक्तिकमण्याभरणाः; किमित्युत्प्रेक्ष्यते–मुनीनां अधिनायकस्य यतीनां पत्युः, क्रमद्वयीं नन्तुं अप्सरसः स्ववेंश्याः, समागता इति ॥ ५२ ॥

वीथ्यो ऽव्यभुस्तत्र महे मृगीदृशां
गीतैः स्फुरन्मञ्जुलमङ्गलागमैः ।
पिकाङ्गनानामिव काननान्तराऽ-
वन्यो वसन्ते प्रियपञ्चमस्वरैः ॥ ५३ ॥

तत्रोत्सवे मृगीदृशां स्त्रीणां, गीतैः वीथ्यो राजमार्गत्रिकचतुष्कचत्वरादिकमार्गाः, बभुः शोभन्ते स्मेत्यन्वयः । गीतैः किं०, स्फुरन्मञ्जुलानि यानि मङ्गलानि तेषामागमो येभ्यस्तैः, वसन्ते चैत्रवैशाखरूपे ऋतुविशेषे, पिकाङ्गनानां कोकिलानां प्रियपञ्चमस्वरैः मनोज्ञपञ्चमध्वनिभिः, काननान्तराऽवन्यो वनमध्यभूमय इवेत्युत्प्रेक्षादृष्टान्तौ ॥ ५३ ॥

श्रीसङ्घवात्सल्यविलासकौशलं
तत्तत्पुरे तत्र महोत्सवेऽभवत् ।
लोका अभूवन्नमरद्रुमाः समे
भुक्तिः सुधाभाऽजनि येन येन च ॥ ५४ ॥

तत्पुरे तत्रोत्सवे तत्सङ्घवात्सल्यविलासकौशलं चतुर्विधसङ्घभक्तिलीलानैपुणमभवत्, लोकेष्विति गम्यम्। तत् किमिमित्याहोत्तरार्द्धेन--येन सङ्घवात्सल्यविलासकौशलेन लोकाः समे सर्वे, अमरद्रुमाः कल्पवृक्षा अभूवन्, च पुनः, भुक्तिर्येन सुधाभा पीयूषकल्पा स्वादेनाऽजनि जातेत्यर्थः ॥ ५४ ॥

दानैरमानैर्घुसृणैर्महारुणै-
र्गीतैर्विनीतैर्नटनैः सभाऽटनैः ।
प्रत्यट्टमार्गालयमुत्सवोत्सुक-
स्तदा पुरेऽभूत्प्रमनाः सना जनः ॥ ५५ ॥

अमानैः अप्रमाणैः, दानैर्वितरणैः, याचकादीनामिति शेषः। पुनः, महारुणैर्बहुरङ्गैः, घुसृणैः कुङ्कुमैः, च पुनः, विनीतैर्निभृतैः, गीतैर्देवगुरुगुणगानैः, पुनः, नटनैः, किं०, सभाः सभ्यास्तेषां अटनं द्रष्टुमागमनं येभ्यस्तैर्नटनैः राजसभादियोग्यपात्रनृत्यैरिति, प्रत्यट्टमार्गालयं, अत्र प्रतिशब्दस्त्रिषु प्रयोज्यस्तेन प्रत्यट्टं प्रतिमार्गं प्रत्यालयं, मध्यपदलोपी समासोऽत्र; तेन प्रत्यट्टमार्गालयं उत्सवोत्सुको महोत्सवदिदृक्षुस्तदा तत्र पुरे सना सदा जनो लोकः, प्रमनाः प्रहृष्टचेता अभूत् ॥ ५५ ॥

अपामिवाब्धिः पदवी दिवौकसां
भानामिवाऽहर्पतिरर्चिषामिव ।

इन्दुः कलानामिव सुन्दरश्रिया-
मेवं महानां पदमस्ति तत् पुरम् ॥ ५६ ॥

तत् पुरं नगरं एवं महानामुत्सवानां पदमस्ति इत्यन्वयः । एवमिति किमित्याशङ्काव्यपोहायाह--अपां पानीयानां अब्धिरिव समुद्र इव, दिवौकसां पदवी देवमार्ग आकाशमिति यावत्; भानां नक्षत्राणां, पुनः, अहर्पतिः सूर्य इव अर्चिषां किरणानां, इन्दुश्चन्द्रः कलानामिव, तथा तत्पुरं सुन्दरश्रियां मनोहरशोभानां, महोत्सवानां पदमस्तीति ॥ ५६ ॥

इति सङ्घेन विधीयमानमुत्सवमुक्त्वा पदस्थापनाकारिणं श्रेष्ठिनं तन्निर्मितोत्सवं च वर्णयति–

अहम्मदावादभवेभ्यसंसदां
मुख्यो ग्रहाणामिव पद्मिनीपतिः ।
सदा सदादेयवचा वचःकला-
विलासशीलोऽधिपतिर्गिरामिव ॥ ५७ ॥
उदारचेतास्तपनात्मभूरिव
श्रियोऽधिभर्त्ता च गदाग्रभूरिव ।
मूलाभिधो मूलमिव स्फुरन्मुदां
श्रेष्ठीति दध्यौ हृदि धर्मधीरथ ॥ ५८ ॥

अहम्मदावादभवेभ्यसंसदां श्रीराजनगरीयव्यवहारिसदसां मुख्यो, यथा ग्रहाणामङ्गारकादीनां पद्मिनीपतिरिव रविरिव, पुनः, सदा नित्यं सद्भिरादेयं वचो यस्य स सदादेयवचाः, पुनः, गिरामधिपतिरिव बृहस्पतिरिव, वचःकलाविलास एव शीलमस्येति सः, वाक्कलावानित्यर्थः ॥ ५७ ॥ पुनः, तपनात्मभू-

रिव कर्ण इव उदारचेताः, पुनः, गदाग्रभूरिव हरिरिव श्रियोऽधिभर्त्ता लक्ष्म्याः पतिरिति; ईदृक् मूलाभिधानः श्रेष्ठी, किं०, स्फुरन्मुदां मूलमिव, पुनः किं०, धर्मे धीर्यस्य सः, हृदि इति वक्ष्यमाणं दध्यौ ध्यातवान् । इति युग्मव्याख्या ॥ ५८ ॥

न्यायार्जितानां ननु संपदामिदं
फलं प्रतिष्ठादिविधानमर्हताम् ।
अपापमापं स्वयमुप्तवीरुधा-
मिवाहमासां तदशेषतत्कृतेः ॥ ५९ ॥

न्यायेनार्जितानां संपदां श्रीणां, इदं फलं प्रोक्तम्—यत् अर्हतां तीर्थकृतां, प्रतिष्ठादिविधानं आदिशब्दात् प्रासाद-पूजादिग्रहः, तत् फलं स्वयमुप्तवीरुधां निजरोपितवल्लीनामिव, अहं अपापं निष्पापं यथा स्यात्तथा, आपं प्रापम् । कुत इत्याह—अशेषतत्कृतेः समस्ततत्कार्यकरणात् यतः श्रीशत्रुञ्जये मुख्यशृङ्गे मुख्यचैत्ये, श्रीवृषभदेवप्रासाददक्षिणपाश्चात्यान्तर्वर्त्तिदिग्भागे, मूलश्रेष्ठिकारितं चैत्यं सांप्रतमस्तीति श्रेष्ठ्यभिप्रायो विशेषण-द्वारेणासूचीति ॥ ५९ ॥

पुनर्यद् दध्यौ तदाह—

गृह्णामि तासां तपगच्छगच्छराट्-
पदप्रतिष्ठोत्सवतः पुनः फलम् ।
ध्यात्वेत्यसौ श्रेष्ठिसभापुरन्दरः
सद्योऽभवत्तत्र महे कृतादरः ॥ ६० ॥

तासां संपदां पुनः फलं गृह्णामीत्यन्वयः । कुतस्तपग-च्छगच्छराट्पदप्रतिष्ठोत्सवतस्तपागच्छाचार्यपदस्थापनामहोत्स-वविधानात्, अथेति ध्यात्वा ज्ञात्वाऽसौ मूलाख्यः श्रेष्ठिस-

भायां पुरन्दरस्तन्मुख्यत्वात्, तत्र महे तदुत्सवविधौ, कृतादरः सज्जोऽभूत् तत्परो जातवान् । इति अर्थतो युग्मम् ॥ ६० ॥

दत्ते स्म वित्तानि यथेच्छमर्थिना-
मपस्तडित्वानिव कान्तकीर्त्तिमान् ।
समौक्तिकैः स्वस्तिकमण्डनं पुनः
पुनर्व्यधात् पूज्यपुरः पुरोगवाक् ॥ ६१ ॥

स श्रेष्ठी, किं०, कान्तकीर्त्तिमान् मनोहरयशोभृत्, तडित्वानिव मेघ इव, अपः पानीयानि, यथेच्छं यथारुचि, अर्थिनां वित्तानि दत्ते स्मेति । पुनः स किं०, पुरोगवाक् मुख्यवचाः, पूज्यपुरः मौक्तिकैः स्वास्तिकं व्यधादुपदेशद्वारेति भावार्थः ॥६१॥

ताम्बूलपूगीफलनालिकेरको-
र्मिकादुकूलादिकदानकौशलात् ।
सङ्घेषु वात्सल्यमयं विनिर्ममे
वृक्षेष्विवाक्षीणबलो बलाङ्गकः ॥ ६२ ॥

ताम्बूलानि नागलतापत्राणि, पूगीफलानि प्रतीतानि, नालिकेराण्यपि प्रसिद्धानि, ऊर्मिका मुद्रिकाः, दुकूलानि पट्टकूलानि इत्यादीनां यद् दानं तस्य कौशलात् पाटवात्, अयं श्रेष्ठी, सङ्घेषु वात्सल्यं विनिर्ममे कृतवान्, यथा अक्षीणबलः पूर्णबलो बलाङ्गको वसन्तर्तुर्वृक्षेषु पत्रपुष्पफलादिदानतो वात्सल्यं कुरुते इति दृष्टान्तः ॥ ६२ ॥

गीतान्यगीयन्त तदोकसि स्फुर-
न्मङ्गल्यमूलानि कुलाङ्गनाजनैः ।
पिकीभिरुद्यानभुवीव मन्मथ-

स्थामस्थिराणि स्वरजृम्भितान्यलम् ॥ ६३ ॥

तदोकसि तस्य श्रेष्ठिनो गेहे कुलाङ्गनाजनैः गीतानि, किं०, स्फुरन्मङ्गल्यमूलानि लसत्कल्याणहेतूनि, अगीयन्त गानगोचरीकृतानि, इव यथा, उद्यानभुवि वनभूमौ, पिकीभिः स्वरजृम्भितानि पञ्चमकूजितविलसितानि, किं०, मन्मथस्थाम्ना स्मरबलेन स्थिराणि निश्चलानि गीयन्ते स्मेति दृष्टान्तः ॥६३॥

वित्तार्पणैस्तृप्तमनोमनोरथा

महस्यगायन्निह गायना भृशम् ।

नानाप्रसूनव्रजगन्धबन्धिनः

सुमञ्जु गुञ्जन्त इवालिनो वने ॥ ६४ ॥

इह महसि उत्सवे, गायना भृशं अगायन्, गीतानि गायन्ति स्मेत्यन्वयः । गायनाः किं०, वित्तार्पणैः प्रार्थितधनप्रदानैस्तृप्ता मनोमनोरथा येषां ते, अत्रापि उत्प्रेक्षया द्रढयति-नानाप्रसूनानां यो व्रजः पुञ्जस्तस्य यो गन्धः सौरभ्यं, तद्बन्धिनस्तल्लीना इति। इवोत्प्रेक्ष्यते—वने कानने, अलिनो भ्रमरा गुञ्जन्तः कथं सुमञ्जु इति क्रियाविशेषणम् ॥ ६४ ॥

धत्ते स्म गान्धर्वगणस्य कर्णयो-

रसावतः काञ्चनकुण्डलद्वयीम् ।

गुणान् गुरूणां यदनेन गायता

व्यधायि मुन्मे श्रवसोः सुवर्णजा ॥ ६५ ॥

असौ श्रेष्ठी, अतो हेतोः गान्धर्वगणस्य कर्णयोः काञ्चनकुण्डलद्वयीं धत्ते स्मेति पूर्वार्द्धेनान्वयः । उत्तरार्द्धेन तद्धेतुमेवाह—यत् कारणात् अनेन गान्धर्वगणेन गुरूणां गुणान् गायता

सता, मे मम, श्रवसोः श्रोत्रयोः, सुवर्णजा मुद् व्यधायि गान्धर्वगणेन सुवर्णजा शोभनाक्षरोत्पन्ना मुद् व्यधायि तेन श्रेष्ठिनाऽपि तत्कर्णयोः सुवर्णकुण्डलयुगली दत्तेति नि-गर्वः ॥ ६५ ॥

इति प्रभूतैर्जगतां जयावहै-
महैर्महद्भिर्गृहमस्य तद्बभौ ।
लक्ष्मीसुखोल्लासविलासशालिनी
किं राजधानी प्रमदक्षमापतेः ? ॥ ६६ ॥

इति व्यावर्णितैर्महैरुत्सवैस्तस्य श्रेष्ठिनस्तद् गृहं बभौ शोभते स्मेत्यन्वयः । महैः किं०, प्रभूतैर्भूयोभिः, पुनः, जगतां जयावहैर्जयङ्करैः, पुनः, महद्भिर्विस्तीर्णैः । उत्प्रेक्ष्यते--प्रमदक्ष-मापतेः प्रमोदमेदिनीभर्तुः किं राजधानी साम्राज्यस्थानं, किं०, लक्ष्मीसुखोल्लासाः प्रतीतास्तेषां विलासेन शालिनी शो-भमानेति भावः ॥ ६६ ॥

अथ काव्यचतुष्टयेन गुरोः पदस्थापनावर्षमासतिथिलग्ना-दिनिर्णीतिमाह—

अब्देऽथ दन्ताबलबाहुभूमिभृ-
न्मिते तिथौ चान्दिरभासि सप्तमे ।
मासे तपस्येऽहनि शीतरोचिषो
लग्ने वृषाख्ये शशिना विभूषिते ॥ ६७ ॥

अब्दे वर्षे, किं०, दन्तावला दिग्गजा अष्टौ तेनाष्टाङ्कः, बाहू भुजौ द्वौ तेन द्व्यङ्कः, भूमिभृतो राजानः षोडश तेन षो-डशाङ्कः, एतैर्वामगतिगणितैर्मिते वर्षे, संवत् १६२८ प्रमाणे इत्यागतम् । पुनस्तिथौ सप्तमे, किं लक्षणे, चान्दिरश्चन्द्रस्तस्य

भासः कान्तयो यस्मिंस्तस्मिंश्चन्द्रिरभासि शुक्ले इति यावत् । पुनः, मासे तपस्ये फाल्गुने, पुनः, अहनि दिने शीतरोचिषः शीतांशोर्वासरे सोमवार इति, मृगशीर्षनक्षत्रे चेति योगः, पुनः, शशिना चन्द्रेणालङ्कृते वृषाख्ये द्वितीये वृषलग्ने वहमाने उदयिनि सतीति भावः ॥ ६७ ॥

अथ ग्रहस्थित्या कुण्डलिकामाह—

विधुन्तुदे चन्द्रगृहं समागते
　　रवेः पृथिव्याश्च सुते तुलाऽऽश्रिते ।
कुम्भस्थयोः पङ्कजिनीप्रियज्ञयो-
　　र्मीनौकसोर्भार्गवशक्रमन्त्रिणोः ॥ ६८ ॥

विधुन्तुदे राहौ चन्द्रगृहं कर्कलग्नं समेते सति, पुनः, रवेः सुते शनैश्चरे पृथिव्याः सुते मङ्गले च तुलाऽऽश्रिते तौल्यां गते सति, पुनः, पङ्कजिनीप्रियज्ञयोः सूर्यबुधयोः कुम्भस्थयोः सतोः, पुनर्भार्गवशक्रमन्त्रिणोः शुक्रगुर्वोः, मीनौकसोर्मीनलग्नस्थितयोरिति ग्रहसंस्थितिः स्थापना; यथा—द्वादशभवनविभागेन कुण्डलिका ।

| | | |
|---|---|---|
| ३<br>४ रा. | २ चं. | १<br>शु १२ बृ. |
| ५ | श्रीः | ११ बु. सू. |
| ६ मं.<br>७ श. | ८ | १०<br>९ |

एतद्ग्रहाणां फलादिविचारस्तु व्यवहारचर्यागतराज्याभिषेकप्रकीर्णकादवधार्योऽत्र तु ग्रन्थगौरवभीरुणा मया न लिख्यत इति ॥ ६८ ॥

पुनराह—

अन्तर्विंशद्वायुनि वामनासिका-
　　रन्ध्रे च रन्ध्रैरहिते समारुते ।

तत्त्वे धराया वहमान ऊर्जिते

कार्यस्य सौभाग्यविधानधूर्वहे ॥ ६९ ॥

च पुनः, वामनासिकारन्ध्रे सति, कीदृशे, रन्ध्रैश्छिद्रैः रहिते निर्दोषे इति यावत्। पुनः किं०, अन्तर्मध्ये विशन् प्रविशन् वायुर्यस्मिंस्तस्मिन्; पुनर्धरायाः पृथिव्यास्तत्त्वे समारुते वायुना पूरिते वहमाने सति; यतः--"सर्वेभ्योऽपि हि तत्त्वेभ्यः पृथ्वीतत्त्वं महाबलम्" इत्युक्तेः। पुनर्धरायास्तत्त्वे किं०, कार्यस्य कर्तुमारब्धस्य, सौभाग्यविधाने धूर्वहे समर्थे इति। यदुक्तमारम्भसिद्धौ— "कार्याणि भूमिजलतत्त्वगतौ कृतानि निर्दम्भमाभ्युदयिकीं प्रथयन्ति लक्ष्मीम्" इत्यादिवचनात्, ऊर्जिते बलवति पृथ्वीतत्त्वे ॥ ६९ ॥

यत् कृतं तदाह—

अथो जगद्बोधिपयोधिचन्द्रमाः

स्थानं जयानां जयसिंहपण्डितः ।

श्रीमानुपाध्यायपदे स्वमूर्त्तिव-

न्न्यधायि सूरीन्द्रपदे च सूरिभिः ॥ ७० ॥

अथास्मिन् मुहूर्त्ते जयसिंहपण्डितः, किं०, जगद्बोधिपयोधौ विश्वोद्बोधसमुद्रे चन्द्रमाः, पुनः, जयानां स्थानं, श्रीउपाध्यायपदे न्यधायि, पूर्वमिति गम्यम्। च पुनः, तदनु तत्कालमेव, तैः सूरिभिः श्रीहीरविजयाचार्यैः, सूरीन्द्रपदे न्यधायि स्थापितः । किंवत्, स्वमूर्त्तिवत् स्वमूर्तिप्रतिबिम्बमेव कृतमिति भावार्थः। इति काव्यकलापकव्याख्या ॥ ७० ॥

अथास्य नामवर्णनमाह—

श्रीसुन्दरीहृदयसंवननक्रियाया

मन्त्रः सदक्षर इवाशु फलाप्तिमूलम् ।
सूरीन्द्रहीरविजयैः प्रमदादमुष्य
चक्रेऽभिधा विजयसेन इति प्रसिद्धा ॥७१॥

सूरीन्द्रहीरविजयैः, अमुष्य अस्याचार्यस्य, विजयसेन इति प्रसिद्धाऽभिधा संज्ञा, चक्रे कृतेत्यन्वयः । उत्प्रेक्षामाह–श्रीरेव सुन्दरी स्त्री, तस्या हृदयस्य संवननाक्रियाया वशीकारस्य, सदक्षरो वर्ण्यवर्णो, मन्त्र इव, पुनर्मन्त्रः किं०, आशु शीघ्रं, फलाप्तेः फलप्राप्तेः, मूलं कारणमिति तत्त्वम् ॥ ७१ ॥

वर्णा अनूचानपतेर्विरेजिरे
पञ्चाऽस्य नाम्नि त्रिजगन्मनोहरे ।
स्वस्वांशसंपद् निदधे किमद्भुता
भूतैः प्रभूता भुवनोपकारिणी ? ॥ ७२ ॥

अस्यानूचानपतेर्विजयसेनसूरेः, नाम्नि, किं०, त्रिजगन्मनोहरे जगत्त्रयचेतोहरे, पञ्च वर्णा अक्षराणि, विरेजिरे शुशुभिरे इत्यन्वयः। उत्प्रेक्षामाह--किं०, पञ्चभिर्भूतैर्महाभूतैः पृथ्व्यप्तेजोवायुगगनलक्षणैः, स्वस्वांशसंपत् निजानिजांशसंपत्तिः, किं०, प्रभूता बह्वी, पुनः, अद्भुताऽऽश्चर्यकारिणी, पुनः, भुवनोपकारिणी लोकोपकारकृद्, निदधे स्थापितेत्यर्थः ॥ ७२ ॥

नामाक्षरेष्वस्य गुरोः प्रपञ्चितं
पञ्चत्वमप्यद्भुतभृद्बभूव नः ।
मूलं मुदां यन्निखिलात्मनामभू-
दगोचराणां वचनैर्विपाश्चिताम् ॥ ७३ ॥

अस्य गुरोर्नामाक्षरेषु प्रपञ्चितं रचितं, पञ्चत्वं निधन-

मपि, नोऽस्माकं, अद्भुतभूत् घनाश्चर्यकारि, बभूव संजातमित्यन्वयः । तदेव उत्तरार्धेन द्रढयति--यत् कारणात् निखिलात्मनां सर्वजीवानां, मुदां मूलमभूत्, मुदां किं०, विपश्चितां पण्डितानां, वचनैरगोचराणामतिप्रभूतानामिति, अद्भुताविर्भावने तु पञ्चत्वं पञ्चसंख्याकत्वमिति भावार्थः ॥ ७३ ॥

पञ्चेप्सितां द्राक् सृजति श्रियं गुरो-
र्नाम्न्यस्य वर्णाः सुभगा व्यभुस्तमाम् ।
औदार्यवर्यास्तरवः सुधाऽन्धसां
वर्णत्वमेत्येव गुरौ समागताः ॥ ७४ ॥

अस्य गुरोर्नाम्नि, किं०, कुर्वति सृजति, कां श्रियं, किं०, ईप्सितां कामितां, वाञ्छितश्रीविधातरि अस्य नाम्नि पञ्च वर्णाः सुभगाः सौभाग्यवन्तो, व्यभुस्तमां अतिशयेन भान्ति स्मेत्यन्वयः । इवोत्प्रेक्ष्यते–सुधाऽन्धसां देवानां, तरवो देवद्रुमाः,वर्णत्वं एत्य अक्षरतां प्राप्य, गुरौ समागताः । वर्णाः सुरद्रुमाश्च कीदृशाः, औदार्येण स्फारत्वेन वर्णपक्षे, सुरद्रुमपक्षे च औदार्येण दातृत्वेन, वर्याः श्रेष्ठाः । अथवा द्वयोरप्येकोऽर्थ एवात्रेति ॥७४॥

हर्षान्तिमाः श्रीविमलादयो बुधो-
त्तमा उपाध्यायपदे तदैव च ।
संस्थापिताः श्रीतपगच्छनायकैः
सुधीपदे षड् गणयस्तथाऽपरे ॥ ७५ ॥

तदैव तस्मिन् क्षणे, श्रीविजयसेनसूरीणां सूरिपदप्रदानादनु श्रीविमलादयो हर्षान्तिमाः श्रीविमलहर्षाः; किं०, बुधोत्तमाः पण्डितोत्तमाः श्रीविमलहर्षपण्डिताः, श्रीतपगच्छनायकैः उपाध्यायपदे स्थापिताः, च पुनः, अपरे षड् गणयो व्यूढपा-

ण्मासिकयोगा गणिनामधारिणस्तदा गणिपद्मसागरलब्धिसा-
गरप्रमुखाः सुधीपदे पण्डितपदे, स्थापिता इति ॥ ७५ ॥

श्रेष्ठी सुहृष्टो हृदि मूल इत्यथो
निःशेषलोकाय ददौ तदा मुदा ।
एकैककां द्राग् महमुन्दिकामसौ
स्वभावसंपद्वरवर्णिकामिव ॥ ७६ ॥

अथो मूलश्रेष्ठी सुहृष्टः सन् निःशेषलोकाय तदा तत्र
मिलिताय समस्तजनाय, एकैकां महमुन्दिकां गूर्जरदेशप्र-
सिद्धां रूप्यमयीं ददौ दत्तवान्, प्रभावनयेति शेषः। स्वभावसं-
पदः स्वचित्तश्रद्धासंपत्तेः, वर्णिकामिवेत्युत्प्रेक्षा ॥ ७६ ॥

स्वर्णोर्मिकाभिर्वसनैश्च शोभनै-
र्दिव्यैर्दुकूलैश्च तदर्पितैस्तदा ।
बभुस्तमामर्थिजना विकस्वरै-
र्नानापयोजप्रकरैरिवाब्धयः ॥ ७७ ॥

स्वर्णस्य ऊर्मिकाभिर्मुद्रिकाभिः, च पुनः, शोभनैर्वसनैश्चीः-
वरैर्दुकूलादिभिर्दिव्यैश्च, तदर्पितैर्मूलश्रेष्ठ्यर्पितैः, तदाऽर्थिजना
याचकाः, बभुस्तमां अति भ्राजन्ते स्म। दृष्टान्तमाह—यथा विक-
स्वरैर्विनिद्रैः, नानापयोजप्रकरैर्विचित्रसरोरुहव्यूहैः, अब्धयः स-
रांसि, "अब्धिः सरसि सागरे" इत्यनेकार्थत्वादत्राधिकाराद-
र्थप्रतिपत्तिरिति सरोजाधिकारादत्र अब्धयः सरोवराणि
गृह्यन्ते ॥ ७७ ॥

ज्येष्ठाग्रगो मूल इवैष कान्तिमान्
पद्मोत्सवः श्रीगुरुरेष चार्यमा ।

स्थानेऽनयोः सङ्गम एतदस्ति यत्
कल्याणमस्मिन् महसि प्रमोदकृत् ॥ ७८ ॥

एष मूलश्रेष्ठी, किं०, कान्तिमान्, पुनः किं०, ज्येष्ठाग्रगो ज्येष्ठानक्षत्रं एकत्र, अन्यत्र ज्येष्ठा वृद्धाः, तेन ज्येष्ठाग्रगत्वेन मूल इव नक्षत्रविशेष इव ज्ञेयः; च पुनः, पद्मोत्सवः पद्मानां पङ्कजानां एकत्र, अन्यत्र पद्मानां श्रीणां उत्सवो यस्मादिति पद्मोत्सवः, श्रीगुरुरेष अर्यमा सूर्य इव ज्ञेयः; तेन अनयोः मूलसूर्ययोः, सङ्गमे सति यत् कल्याणं अस्मिन् महसि वर्त्तते । अत्र जात्यपेक्षया एकत्वम्, अन्यथा कल्याणानि भूयांसि सन्तीत्यूह्यम्; तत्स्थाने उचितमेव । यतो "मूलार्कः श्रूयते शास्त्रे सर्वकल्याणकारणम्" इति श्रीहेमाचार्यवचनात् मूलार्कयोगमहत्त्वमवधेयम् ॥ ७८ ॥

अस्मिन्ननूचानपतौ पृथौ गुणैः
स्वयं गुरोरोज इयाय संक्रमम् ।
लसद्दशे वृन्दमिव त्विषां द्रुतं
दीपस्य दीपे तमसां प्रणाशकृत् ॥ ७९ ॥

अस्मिन् अनूचानपतौ, किं०, विशाले, कैः, गुणैः सूरिगुणैः, स्वयं यत्नं विनाऽपि, गुरोः ओजो बलं, संक्रमं इयाय संक्रान्तिमाप । दीपस्य त्विषां वृन्दं यथा दीपे, किं०, लसन्ती दशा वर्त्तिर्यस्य तस्मिन्, अनूचाने किं०, लसन्ती दशाऽवस्था यस्य तस्मिन्, ओजः त्विषां वृन्दं च कीदृशं, तमसां पापानां एकत्र, अन्यत्र ध्वान्तानां प्रणाशकृदिति ॥ ७९ ॥

बभार शोभामधिकामिहर्षिराट्-
पदं पदं शस्तमुदां ससंपदां ।
गुरौ कमाजन्मनि वैरिदृग्विषं

भटोद्भटे खड्गलतेव दीप्तिभृत् ॥ ८० ॥

इह क्षमाजन्मनि गुरौ श्रीविजयसेनसूरौ, ऋषिराट्पदं सूरिपदं, किं०, ससम्पदां सश्रीणां शस्तमुदां, पदं स्थानं, अधिकां शोभां बभारेत्यन्वयः । पुनः किं० पदं, वैरिदृशोर्विषमिव विषं, तद्दुःखदायित्वात्; यथा भटोद्भटे महासुभटे, दीप्तिभृत् कान्तिमती, खड्गलता कृपाणवल्लिः, शोभते, साऽपि वैरिदृग्विषमिति तुल्यं विशेषणम् ॥ ८० ॥

जना अनूचानपतिं गुरुं च तं

दृष्ट्वेत्यवोचन् मुदिताः परस्परम् ।

अथास्य गच्छस्य धुरं धरिष्यतः

समाविमौ सद्वृषभाविवानसः ॥ ८१ ॥

तं गुरुं तं चाऽनूचानपतिं दृष्ट्वा परस्परं मुदिताः सन्तो जना इत्यवोचन्नित्यूचुः । उत्तरार्द्धेन तदेवाह—अथाऽस्य तपागच्छस्य धुरं इमौ गुरुशिष्यौ, समौ तुल्यौ, धरिष्यतः, काविव कस्येत्याह—सद्वृषभौ अनसः शकटस्येवेति दृष्टान्तः ॥ ८१ ॥

असावनूचानपतिः पदं श्रिया-

मेषां गुरूणां शुशुभे समीपगः ।

एकालवालस्थितिभाग् नवोद्गमः

संतानशाखी हरिचन्दनेन किम् ? ॥ ८२ ॥

श्रियां पदं स्थानं, असौ अनूचानपतिः श्रीविजयसेनाचार्यः, एषां गुरूणां श्रीहीरविजयसूरीणां, समीपगः पार्श्ववर्त्ती, शुशुभे इत्यन्वयः । किमुत्प्रेक्ष्यते--हरिचन्दनेन कल्पद्रुणा सह एकालवालस्थितिभाग् एकस्थानस्थायी, पुनः, नवोद्गम उद्गच्छन् सन्तानशाखी पञ्चमः कल्पद्रुम इवेति ॥ ८२ ॥

एनं विनेयं युवराजमूर्जितं
दृष्ट्वा प्रहृष्टास्तदमी दमीश्वराः ।
गच्छस्य गुर्वीं दधतां धुरं हि नः
पदावलम्ब्येष बभूव शक्तिमान् ॥ ८३ ॥

एनं विनेयं युवराजं, किं०, ऊर्जितं बलवन्तं, दृष्ट्वा तदिति तस्माद्धेतोः, अमी दमीश्वरा गुरवो हृष्टा इत्यन्वयः । हेतुमाह– यदित्यध्याहार्यम्; यतः कारणात्, गुर्वीं गरीयसीं, गच्छस्य धुरं नोऽस्माकं, दधतां एष शक्तिमान् युवराजः पदावलम्बी बभूव सारणावारणादिगच्छव्यवसायविधायित्वेन विश्रामस्थानीयोऽभूदिति ॥ ८३ ॥

श्रीमाननूचानपतिः कथं दधौ
कलाविलासादनुकूलनेतृताम् ? ।
गच्छश्रिया संवसताऽमुना हठा-
दादायि संपत् परिपन्थिवेश्मतः ॥ ८४ ॥

असौ श्रीमाननूचानपतिः, कलाविलासात् अनुकूलनेतृतामनुकूलनायकत्वं, कथं दधौ ? अपि तु नाभूदनुकूल इति तदेव स्पष्टयति--स्वगच्छश्रिया सह संवसताऽमुनाऽनूचानपतिना, परिपन्थिवेश्मतो वैरिगृहात्, संपत् हठाद्बलात्कारेण, आदायि गृहीतेति हेतोरनुकूलः कथं भवति ? । यदुक्तम्—

" स्वस्त्रीभिरेव सन्तुष्टः परस्त्रीभ्यः पराङ्मुखः ।
शास्त्रेषु गीयते प्राज्ञैरनुकूलः स नायकः " ॥ १ ॥

वाग्भटालङ्कारेऽपि--" नीलीरागोऽनुकूलः स्यादनन्यरमणीरतः " इति लक्षणोऽनुकूल उच्यते, अयं तु तल्लक्षणविलक्षण इति; अत्रानुकूलनेतृताभावशब्दश्लेषेण परवादिसंपद्ग्रहणशक्तिः

सूचिता, अन्यथा तु अनुकूलनेतृत्वमविपरीतस्वामित्वं सर्वसंमत-मस्त्येवेति कथं तदभावकथनमिति ध्येयम् ॥ ८४ ॥

गुणी गणस्यैष पतिः समुल्लसन्

रेजेतमां दक्षिणनेतृभावभाक् ।

भुञ्जन्नसौ स्वां गुरुदत्तसंपदं

प्राप्तां परेषां कमलां हि नारुणत् ॥ ८५ ॥

एष गुणी गुणवान्, गणस्य पतिर्गच्छेशः समुल्लसन् देदीप्यमानः, दक्षिणनेतृभावभाक् दक्षिणनायकत्वं दधत् रेजेत-मामित्यन्वयः । तदेव प्रकटयति-हि यतः कारणात्, असौ स्वां गुरुदत्तसंपदं भुञ्जन् गच्छश्रियं भुञ्जन्, परेषां कमलां प्राप्तां सतीं नाऽरुणत् परश्रियमपि न निषिद्धवान्, स्वीचकारेति दक्षिणत्वं प्रादुश्चकार । यद्वाग्भटः--"दक्षिणश्चान्याचित्तोऽपि यः स्यादविकृतः स्त्रियाम्" इति वचनाद्दक्षिणनायकोऽभूदिति भा-वार्थः ॥ ८५ ॥

अयं विनेयः प्रतिमेव गौरवी

बभौतमां द्राग् गुरुलक्ष्मिसंक्रमात् ।

किमत्र चित्रं सुदृशां सुखं दध-

द्बिम्बेन साम्यं प्रतिबिम्बमेति यत् ? ॥८६॥

अयं विनेयो गुरुलक्ष्मिसंक्रमात् गौरवी प्रतिमेव गुरुप्रति-रूपमिव, बभौतमामित्यन्वयः । अत्र किं चित्रं यत् प्रतिबिम्बं बिम्बेन साम्यं तुलामेति; "बिम्बानुसारि प्रतिबिम्बमेव" इति बालभारतवचनात् । किं० प्रतिबिम्बं, सुदृशां सम्यग्दृशां, सुखं दधत्; पक्षे सुदृशां शोभनचक्षुषां सुखकृदिति ॥ ८६ ॥

असौ नवीनो युवराजचन्द्रमा

गच्छेशमूर्ध्नीह रुचां पदं बभौ ।
सद्यः कलाभिः सकलाभिराश्रितः
सदाऽभवद् यत्तमसां विनाशकृत् ॥ ८७ ॥

असौ युवराजचन्द्रमा नवीनो गच्छेशमूर्ध्नि बभौ, किं०, रुचां पदं ज्योतिर्गृहम् । नवीनत्वमेवाह--यत् कारणात् सकलाभिः कलाभिः सद्य एवाश्रित इति नूतनत्वम्; पुनः, सदा तमसां विनाशकृत् अभवत् । चन्द्रमास्तु सद्यः सकलकलाभृन्न स्यात्, पुनः, सदा तमसां अन्धकाराणां, विनाशकृन्न स्यादिति नूत-नत्वम् ॥ ८७ ॥

द्राग् राजसंपद् युवराजि संक्रमं
चन्द्रस्य मूर्त्तिर्जलधाविवागमत् ।
चित्रं न चापल्यमिताऽस्ति यद्गता
नचापि दोषोदयकृत्कदाऽप्यभूत् ॥ ८८ ॥

अस्मिन् युवराजि द्राग् शीघ्रं, राजसंपत् श्रीहीरविजय-सूरिराज्यश्रीः, जलधौ चन्द्रस्य मूर्त्तिरिव संक्रमं अगमत् सं-क्रान्तेत्यन्वयः । इदं चित्रमस्ति, इदमिति किं, तदेवाह--य-द्गता युवराजि गता, संपत् चापल्यं चपलत्वं, न इताऽस्ति, स्थि-राऽभूदिति; च पुनः, कदापि दोषोदयकृत् नाभूत् गुणाभाववती न जाता, चन्द्रमूर्त्तिस्तु जले संक्रान्ता सती चापल्यमायाति दोषोदयो रात्रेरुदयस्तमपि कुरुते इति चित्रम् ॥ ८८ ॥

विनयनयविराजत्केसरस्तोमरम्ये
कुमतिमतमतङ्गध्वंसधीरेऽतिवीरे ।
श्रितवति शुभशोभां श्रीअनूचानपञ्चा-
नन इह बहु रेजे श्रीतपागच्छकुञ्जः ॥८९॥

इह श्रीअनूचानपञ्चानने आचार्यकेसरिणि, किं० विनयनयावेव विराजन्तौ यौ केसरस्तोमौ स्कन्धजटाकलापौ, ताभ्यां रम्ये, पुनः किं०, कुमतिमतरूपो यो मतङ्गो गजस्तस्य ध्वंसो नाशस्तत्र धीरे धैर्यवति निपुणे वा, अत्र मातङ्गवन्मतङ्गशब्दोऽप्यस्ति । यच्छब्दप्रभेदः--" गजे मतङ्गमातङ्गौ " इति । अत एवाऽतिवीरेऽतिश्रेष्ठेऽतिशूरे वा ईदृशे श्रीअनूचानपञ्चानने शुभशोभां श्रितवति सति शोभमाने सति, श्रीतपागच्छ एव कुञ्जो विविधवृक्षलतागुल्मादिवृतान्तरस्थानविशेषो निकुञ्ज इति बहु रेजे भृशमशोभिष्टेत्यर्थः ॥ ८९ ॥

अस्मिन् सर्गे इन्द्रवंशावंशस्थयोर्द्वयोश्छन्दसोर्मिलनरूपोपजातिकं छन्द इति; उपजातिलक्षणं तु पूर्वमाभिहितमस्ति; सर्गान्त्यवृत्ते तु मालिनीवृत्तं; तल्लक्षणमप्युक्तपूर्वमिति ।

. . . . . . . . . . . . . . . . . . . . . . . .

इतीति भव्यम् ।

इति सकलसुविहितसभासार्वभौमसमानपण्डितमण्डलीमौलिमौलीयमानपण्डितश्रीकमलविजयगणिशिष्यमुख्यपण्डितपुरन्दरप्रख्यपण्डितश्रीविद्याविजयगणिविनेयवाचकश्रीगुणविजयगणिविरचितायां विजयप्रदीपिकाऽभिधानधारिकायां श्रीविजयप्रशस्तिमहाकाव्यटीकायां सप्तमः सर्गोऽर्थतः समर्थितः ।



अर्हम्

# अथाष्टमः सर्गः ।

अथाष्टमः सर्गः समारभ्यते तस्येदमादिकाव्यम्—

प्राप्तप्रतापास्तपगच्छरत्ना-
करैकपीयूषकरा मुनीन्द्राः ।
पूज्या अनूचानयुताः पृथिव्या-
मथो विजह्रुर्जगतां हिताय ॥ १ ॥

अथाचार्यपदप्रदानादनु कियन्ति दिनानि तत्र स्थित्वा ते पूज्या अनूचानयुताः सन्तो विजह्रुर्विहारं चक्रुरित्यन्वयः । ते किं०, प्राप्तः प्रतापो यैस्ते, पुनः किं०, तपगच्छ एव रत्नाकरः समुद्रस्तत्र एकेऽद्वितीयाः पीयूषकराश्चन्द्राः, तत्समुल्लासहेतुत्वादिति । शेषं सुगमम् ॥ १ ॥

आचार्यधुर्येण सहर्षिमुख्ये-
ष्वस्यां क्षमायां विहरत्स्वमीषु ।
शावेन सिंहेष्विव जम्बुकाना-
मासीत् प्रचारो न कुपाक्षिकाणाम् ॥ २ ॥

अमीषु ऋषिमुख्येषु श्रीहीरविजयसूरिषु, आचार्यधुर्येण स्वपट्टधरेण सहाऽस्यां क्षमायां पृथिव्यां, विहरत्सु सत्सु कुपाक्षिकाणां कुतीर्थिकानां, प्रचारो नासीत्, कोऽर्थः वादादिविधित्सयाऽभिमुखागमनरूपः प्रचारो नाभूत्। अत्र दृष्टान्तः--यथा सिंहेषु शावेन बालकेन सह विचरत्सु जम्बुकानां शृगालानां प्रचारो न स्यात् किन्तु तिरोभूय गहनवनादिष्वेवावस्थानं भवति, परं कश्चिद् युद्धाय नोपतिष्ठते तथेति ॥ २ ॥

अथैकदाऽत्रावसरे विहारैः
श्रीगूर्जरत्राऽऽभरणीभवत्सु ।
पूज्येषु सतपुत्रगयौवराज्या-
नुभावतो लब्धघनर्द्धिमुत्सु ॥ ३ ॥
दुर्लोपलुम्पाकमताधिकारी
यो मेघजीत्यस्त्यनवद्यविद्यः ।
दत्तान्ध्यमात्मीयमतं मुमुक्षुः
स्वयं स निर्मोकमिवाहिरासीत् ॥ ४ ॥

अथाऽस्मिन्नवसरे एकदा पूज्येषु श्रीगूर्जरत्राभरणीभवत्सु श्रीगूर्जरदेशवसुधाभूषणेषु जायमानेषु, पुनः, सत्पुत्रगयौवराज्यानुभावतः सुशिष्यप्रदत्ताचार्यपदप्रभावात्, लब्धा घनर्द्धिश्च मुद् हर्षश्च यैस्तेषु विहरत्सु, किमभूदथ तदग्रेतनेन वृत्तेनाह ॥३॥ दुर्लोपं पाप्मभिर्दुस्त्यजं यल्लुम्पाकमतं तस्याऽधिकारी तन्मुख्य इति यो मेघजीतिनामा लुम्पाकाचार्यः, किं०, अनवद्या विद्या यस्यासौ महाविद्यावानस्तीति । स मेघजीनामर्षिः आत्मीयमतं लुङ्कामतं, किं०, दत्तं आन्ध्यं जिनप्रतिमाद्यालोकदृशां अन्धत्वं येनेति तत्, मुमुक्षुर्मोक्तुकामः, आसीत्, कथं, स्वयं स्वयमितिसकलशास्त्रवाचनोद्भूतसन्मतित्वेन न तु परप्रेरणयेति; इव यथा, अहिः सर्पः, निर्मोकं कञ्चुकमिति दृष्टान्तः । युग्मव्याख्या ॥ ४ ॥

उदन्तमत्यन्तनवीनमेनं
प्राप्तं सुधापानमिवर्द्धिहेतुम् ।
अध्वानमानन्दमया अनैषुः

स्वकर्णयोस्तेऽथ सकर्णमुख्याः ॥ ५ ॥

ते सकर्णमुख्याः सूरयः, एनं पूर्वोक्तमुदन्तं मेघजीनामर्षेः स्वमतमोचनस्वरूपनिरूपकं, पुनः, अत्यन्तनवीनं पूर्वमभूतत्वात्; स्वकर्णयोरध्वानं श्रोत्रपथं, अनैषुः नयन्ति स्म, श्रुतवन्त इति। किं०, आनन्दमयाः सन्तः, किमिवेत्याह—सुधापानं प्राप्तमिव, किं०, ऋद्धिहेतुं, उदन्तपक्षे गच्छसमृद्धिमूलं, सुधापानपक्षे शरीरारोग्यबलादिसमृद्धिमूलमिति ॥ ५ ॥

विहारमाचार्यवरेण युक्ताः
सुखं सृजन्तः शमिनामधीशाः ।
प्रोच्चैः प्रमोदं स्म नयन्ति लोकान्
कोकानिवार्का महसां निवासाः ॥६॥

आचार्यवरेण युक्ता विहारं सृजन्तः कुर्वन्तः सन्तः शमिनामधीशा गुरवः लोकान् प्रमोदं नयन्ति स्मेति। दृष्टान्तमाह-कोकांश्चक्रवाकानिव यथा अर्काः सूर्याः; किं०, महसां निवासा आवासाः, गुरुपक्षे महसां उत्सवानां, अन्यत्र तेजसाम्; अथवोभयेषामपि तुल्यं विशेषणमिदम् ॥ ६ ॥

अकब्बरे राज्यसुहृद्वधूनां
वैधव्यदीक्षाविधिदानदक्षे ।
क्षोणीमलङ्कुर्वति सप्रतापे
वर्त्मेव वायोस्तमसां विपक्षे ॥ ७ ॥

अकब्बरे राज्ञि पातिशाहिश्रीमदकब्बरसुरत्राणे, क्षोणीमलङ्कुर्वति सति विजयमानराज्ये सति, किं०, असुहृद्वधूनां वैरिनारीणां, वैधव्यदीक्षाविधिदानं रण्डात्वव्रतरूपं तत्र दक्षे, तद्भर्तृसंहारणात्; तत्कृतिकृतिनि, पुनः, सप्रतापे प्रतापवति ।

दृष्टान्तमाह—यथा वायोर्वर्त्म गगनमिव तमसां विपक्षे ध्वान्तशत्रौ, सूर्ये, सतीति शेषः ॥ ७ ॥

महोत्सवोल्लासविलासहर्म्य-
महम्मदावादपुरं प्रधानम् ।
श्रीपूज्यपादाः पुनरीयिवांसो
मनो मुनीनामिव मैत्र्यभावाः ॥ ८ ॥

अहम्मदावादपुरं, किं०, महोत्सवोल्लासानां विलासहर्म्यं केलीगृहं, पुनः, श्रीपूज्यपादा ईयिवांसः समागताः, मुनीनां मन इव मैत्र्यभावाः साम्याध्यवसाया इति दृष्टान्तः । अर्थतो युग्मव्याख्या ॥ ८ ॥

लुम्पाकपक्षं प्रविमुच्य रुच्य-
चेताः सचेताः प्रसभं प्रचेताः ।
स मेघजीः स्वैर्यतिभिः परीतः
सूरीननूचानयुताननंसीत् ॥ ९ ॥

तत्रागमनादनन्तरं स मेघजीनामर्षिः स्वैर्यतिभिः पण्डितैः सप्तविंशतिसंख्यैः, परीतः सन् लुम्पाकपक्षं लुङ्काख्यमतं, प्रविमुच्य अनूचानयुतान् श्रीविजयसेनसूरिपरिवृतान्, सूरीन् श्रीहीरविजयसूरीन्, अनंसीन्नमति स्मेति । स किं०, रुच्यं चारु चेतो यस्य सः, पुनः किं०, सचेताः सहृदयः, पुनः किं०, प्रचेता प्रहृष्टात्मेति ॥ ९ ॥

लुम्पाकपक्षक्षितिसेकमेघः
श्रीमेघजीस्तैर्मुनिभिर्वृतः स्वैः ।
संस्थापितः प्राथमकल्पिकत्वे

श्रीपूज्यपादैः स महोत्सवेन ॥ १० ॥

लुम्पाकपक्षक्षितिसेके लुङ्काख्यकुमतमेदिनीसेचने, मेघस्तद्वृद्धिकृत्त्वादिति; इदं विशेषणं प्रागवस्थामाश्रित्योक्तम् । तैः स्वैर्निजैर्मुनिभिर्वृतः श्रीमेघजीनामर्षिः महोत्सवेन शाहिश्रीअकब्बरसुलतानजलालदीप्रदत्तातोद्यवादनादिनोत्सवेन श्रीपूज्यैः प्राथमकल्पिकत्वे नवीनशैक्षत्वे संस्थापित इति ॥ १० ॥

लुम्पाकपक्षाधिपतिः सुमेधाः
स मेघजीनामऋषिर्विनीतः ।
पूज्यांह्रिपाथोरुहपर्युपास्ति-
परायणो भृङ्ग इवाऽजनिष्ट ॥ ११ ॥

स मेघजीनामऋषिः, किं०, लुम्पाकपक्षाधिपतिरपि पुनः सुमेधाः धीमान् पुनर्विनीतः सन् भृङ्ग इव भ्रमर इव पूज्यांह्रिपाथोरुहपर्युपास्तौ गुरुचरणकमलसेवने, परायणस्तत्परोऽजनिष्ट जातवानिति महाद्भुतं सर्वेषामिति शेषः ॥ ११ ॥

विहृत्य तस्मात् पुरतो वृतास्तै-
स्तैः साधुभिः साधुधुरन्धरास्ते ।
हंसा इवाब्जैः सर उत्सवौघैः
पूर्णं पुरं पत्तनमाप्तवन्तः ॥ १२ ॥

तस्मात् पुरतो राजनगरात् विहृत्य तैस्तैराचार्योपाध्यायपण्डितप्रधानैः पुनर्नवदीक्षितैस्तैः साधुभिर्वृतास्ते साधुधुरन्धरा गुरवः, क्रमेण पत्तनं पुरं अणहिल्लपाटकनामकं नगरं, किं०, पूर्णं, कैः, उत्सवौघैर्महसमूहैः, अब्जैः कमलैः पूर्णं सरस्तटाकं हंसा इव आप्तवन्तः प्राप्ता इति ॥ १२ ॥

चक्रुश्चतुर्मासकमासमुख्या
अस्मिन् पुरे पत्तननाम्नि पूज्याः ।
तेषामथो पारणके गुरूणां
हृदुत्सुकं वन्दनकोत्सवेऽभूत् ॥ १३ ॥

आसेषु मुख्यास्ते पूज्याः, अस्मिन् पुरे पत्तने, चतुर्मासकं चक्रुरित्यन्वयः। अथ चतुर्मासकपारणके तेषां गुरूणां, हृन्मनः, वन्दनकोत्सवे निजपट्टभृत्पादवन्दनद्वयप्रदानोत्सवे, उत्सुकं अभूदिति ॥ १३ ॥

अष्टभिर्वृत्तैर्वन्दनोत्सवं वर्णयन्ति—

वर्षे नभःपावकभूपसंख्ये
मासे सहस्ये च तिथौ चतुर्थ्याम् ।
सितेतरायां सुखवृद्धिकर्त्र्यां
लग्ने मनोज्ञेऽहनि दोषमुक्ते ॥ १४ ॥

वर्षे, किं०, नभो विन्दुः शून्यं, पावका अग्नयः त्रयः, भूपाः षोडश, एते अङ्का वामगत्या मीलिता यत्र तत्र १६३० प्रमाणे संवत्सरे, पुनर्मासे सहस्ये पौषे मासे, च पुनः, चतुर्थ्यां तिथौ, किं०, सितेतरायां श्यामायां, पुनः किं०, सुखवृद्धिकर्त्र्यां, पुनः, लग्ने राश्युदये मनोज्ञे सति, पुनरहनि दिने, दोषमुक्ते निर्दोषे सति ॥ १४ ॥

स्वजन्मभूजन्मफलाभिलाषा-
दुल्लेखिहल्लेखिनि लेखवन्द्ये ।
नैपुण्यपुण्यात्मनि साधुसाध्वी-
सार्थे समेते परितः प्रभूते ॥ १५ ॥

पुनः, परितः सर्वतः, प्रभूते बहौ, साधुसाध्वीसार्थे समेते मिलिते सति, किं०, स्वजन्म एव भूजन्मा पादपस्तस्य फलाभिलाषात् फलप्राप्तिमनोरथात्, उल्लेखी उत्कृष्टो यो हृल्लेख औत्सुक्यं यस्य तस्मिन्, पुनः किं०, लेखानां देवानां वन्द्ये वन्दनीये, पुनः किं०, नैपुण्यपुण्यात्मनि प्रावीण्यपवित्रात्मके, इति साधुसाध्वीसार्थविशेषणानि ॥ १५ ॥

निःशेषनेपथ्यसनाथकायैः
प्रोत्फुल्लपाथोरुहपेशलास्यैः ।
भूयिष्ठदेशागतभव्यलोक-
सुरैः पुरेऽत्र त्रिदिवायमाने ॥ १६ ॥

पुनः अस्मिन् पुरे पत्तने त्रिदिवायमाने सति, कैरित्याह- भूयिष्ठा बहवो ये देशा मरुस्थलीमालवमेदपाटसौराष्ट्रकच्छ- कुङ्कणादयस्तेभ्य आगता ये भव्यलोकास्त एव सुरा देवास्तैः, स्वर्गसमाने सति, तैः किं०, निःशेषनेपथ्यैः स्वस्वसमस्तवेषैः, सनाथः संयुक्तः कायो येषां तैः, पुनः किं०, प्रोत्फुल्लपाथोरुहाणीव पेशलानि गुरुमुखवीक्षणात् कमनीयानि आस्यानि येषां तैरिति ॥ १६ ॥

सकर्णकर्णोत्सवदानदक्षै-
र्गीतैः सुगान्धर्वगणप्रणीतैः ।
मत्ताप्रमत्तस्वरकोकिलस्य
पुरे श्रियां गच्छति काननस्य ॥ १७ ॥

पुनः, पत्तने पुरे, गान्धर्वगणप्रणीतैर्गायनव्रजोक्तगीतैः, पुनः किं०, सकर्णकर्णोत्सवदक्षैः चतुरनरश्रोत्रोत्सवकारिभिः, काननस्य वनस्य, श्रियं गच्छति वनशोभां श्रयति, किंलक्ष-

णस्य वनस्येत्याह--मत्ता आम्रमञ्जरीरसास्वादादुन्मत्ताः पुनरप्रमत्तस्वराः पुनः काकलीरूपपञ्चमोद्गारकारिध्वनयः, कोकिलाः पिकाः यत्र तस्य वनस्योपमां गच्छति सतीति ॥ १७॥

द्राग् रोदसीरन्ध्रमधिश्रयद्भि-
र्नानाविधाऽऽतोद्यविनोदिनादैः ।
पर्जन्यगर्जारववर्यदेव-
मार्गोपमां गच्छति पत्तनेऽस्मिन् ॥ १८ ॥

पुनः, अस्मिन् पुरे पत्तने, पर्जन्यगर्जारववर्यदेवमार्गोपमां मेघध्वनिमनोज्ञगगनतुलां, गच्छति सति; कैरित्याह--नानाविधातोद्यविनोदिनादैः विचित्रवादित्राह्लादकृच्छब्दैः, किं कुर्वद्भिः, रोदसीरन्ध्रं अधिश्रयद्भिर्नभोभूम्यन्तरालपूरकैरिति ॥ १८ ॥

श्राद्धाम्बुवाहेषु सुवस्त्रवित्त-
स्वर्णादिदानैरतिमानमानैः ।
वर्षत्सु नीरैरिव चार्थिसार्थ-
सारङ्गमोदाय यथेष्टमिष्टैः ॥ १९ ॥

च पुनः, अर्थिसार्थसारङ्गमोदाय याचकचातकप्रमोदाय श्राद्धाम्बुवाहेषु श्रावकजलधरेषु, नीरैः जलैरिव सुवस्त्रवित्तस्वर्णादिदानैः शोभनवसनधनकाञ्चनादिप्रदानैः, किं०, अतिमानमानैः अप्रमाणबहुमानैः, पुनः, इष्टैर्वल्लभैः, यथेष्टं यथारुचि तथा वर्षत्सु सत्स्विति ॥ १९ ॥

संसूत्रितोल्लासविलासलास्य-
कलास्वकुण्ठे कलकण्ठकण्ठे ।
रामाजने मञ्जुलमङ्गलश्री-

स्फीतानि गीतानि च गायतीह ॥ २० ॥

पुनः, इहास्मिन् पुरे, रामाजने नारीगणे, किं०, संसूत्रितोल्लासविलासा निर्मितोत्साहोत्कर्षा या लास्यकला नृत्यकलास्तासु, अकुण्ठे निपुणे, पुनः, कलकण्ठकण्ठे कोकिलध्वनौ, मञ्जुलानि यानि मङ्गलानि धवलध्वनिरूपाणि, तेषां श्रिया स्फीतानि वृद्धिमन्ति, गीतानि गायति सति ॥ २० ॥

संघानघोत्साहलतावितान-

द्रूणामनूचानपुरन्दराणाम् ।

सानन्दनन्द्युत्सवगुच्छगच्छा-

नुज्ञा मुनीन्द्रद्विरदैरदायि ॥ २१ ॥

इति महोत्सवेषु सत्सु, मुनीन्द्रद्विरदैर्मुनिमतङ्गजैः, गुरुभिः अनूचानपुरन्दराणां आचार्येन्द्राणां, किं०, सङ्घस्य श्रमणसङ्घस्य योऽनघोत्साहः स एव लतावितानस्तस्य द्रूणां तरूणां, तदाधारत्वात् ; सानन्दा ये नन्द्युत्सवा नन्दिरूपोत्सवास्तद्रूपा ये गुच्छाः पुष्पस्तबकास्तत्स्थानीया या गच्छानुज्ञा गणसारणावारणाचोदनाप्रतिचोदनाऽऽदेशोपदेशपदप्रदानरूपा, गच्छैश्वर्यसाम्राज्यानुमतिरदायि दत्तेत्यर्थः। अष्टभिरन्त्यक्रियं कुलकं व्याख्यातम् ॥ २१ ॥

ददुर्गणस्यास्य यदाऽनघस्या-

ऽनुज्ञामनूचानवराय पूज्याः ।

तदा प्ररोहावसतां सतां च

चेतस्यभूताममुदां मुदां च ॥ २२ ॥

अनघस्य अस्य गणस्य यदा अनूचानवराय पूज्या गुरुमिश्राः, अनुज्ञां ददुर्दत्तवन्तः तदा किं जातमित्युत्तरार्द्धेनाह-

तदा तत्र क्षणे, असतां सतां च चेतसि क्रमेण असुदां मुदां च प्ररोहौ अभूतां बभूवतुः, इति ॥ २२ ॥

आचार्यधुर्यो महधाम गच्छा-
नुज्ञामुपेत्याऽतिबभौ प्रतापी ।
स्तोमैर्गवां क्लृप्तजगत्प्रकाशो
भर्त्तेव भासां नभसोऽन्तरालम् ॥ २३ ॥

आचार्यधुर्यः गच्छानुज्ञां किं०, महधाम महानां तेजसां धाम शालां, उपेत्य प्राप्य, अतिबभौ भृशमशुभत् , किं०, प्रतापी प्रतापवान् , यथा भासां भर्त्ता भानुः, नभसोऽन्तरालं गगनमध्यं, उपेत्य शोभते, किं०, क्लृप्तो जगति प्रकाशो येन; कैर्गवां स्तोमैः गुरुपक्षे गवां वाचां; रविपक्षे गवां किरणानां स्तोमैर्वृन्दैः, इति ॥ २३ ॥

उक्त्वेत्यमाभ्यां तरणेरिवाहः-
श्रिया च कान्त्या च तवाऽस्तु संगः ।
लक्ष्मीमनुज्ञां च विनेयरत्ने
द्वे अप्यमुष्मिन्निदधे गुरुः स्वे ॥ २४ ॥

अमुष्मिन् विनेयरत्नेऽस्मिन् शिष्योत्तमे, गुरुर्लक्ष्मीं सूरिपदवीरूपां, अनुज्ञां च सर्वकार्यानुमतिप्रदानरूपां, द्वे अपि निदधेऽस्थापयत् , किं०, कृत्वा इति उक्त्वा कथयित्वा इति, किं०, तदाह—आभ्यां गच्छाधिपत्यलक्ष्मीगच्छानुज्ञाभ्यां, अमा सह, तव संगोऽस्तु भूयादिति, काभ्यामिव कस्येत्याह—तरणेः सूर्यस्य, इव यथा, अहःश्रिया वासरलक्ष्म्या, कान्त्या रुचा च, इति भावः ॥ २४ ॥

वर्णाः किमेते लिखिता ललाट-

पट्टेऽस्य वासान् गुरुभिः सृजद्भिः ।
आजन्म जिष्णो रमयेव तेऽस्तु
गच्छश्रिया सार्द्धमविप्रलम्भः ॥ २५ ॥

अस्याचार्यस्य, वासान् सृजद्भिः वासक्षेपं कुर्वद्भिर्गुरुभिः, किं०, एते वर्णा ललाटपट्टे लिखिता इति, एते क इत्याह--हे शिष्योत्तम! ते तव, आजन्म आभवं, गच्छश्रिया सार्द्धं अविप्रलम्भोऽस्तु वियोगो मा भूयादिति, कयेव कस्येत्याह--जिष्णोर्विष्णोः, लक्ष्म्येवेति दृष्टान्तः ॥ २५ ॥

गुरोरनुज्ञामधिगम्य सम्यक्
स्थितं तमागात् सकला गणर्द्धिः ।
वेगादपाचीपवनप्रपञ्चं
वसन्तलीलेव वनस्य मध्यम् ॥ २६ ॥

गुरोरनुज्ञां अधिगम्य प्राप्य, सम्यग् स्थितं तं सूरिं सकला गणर्द्धिर्गच्छसंपत्तिः, आगात् प्राप्तेति, यथा वसन्तलीला अपाचीपवनप्रपञ्चं दाक्षिणानिलविस्तारं, अधिगम्य वनस्य मध्यं काननान्तरालं, वेगादागच्छतीति दृष्टान्तः ॥२६॥

सुधर्मजम्बूप्रभवादिसूरि-
सिंहैर्धृता याऽस्य गणस्य धुर्वी ।
वहन्नयं तां सुमनःसुखाय
स्वर्गाधिपत्यं मघवेव जज्ञे ॥ २७ ॥

याऽस्य गणस्य धुर्वी धूः, सुधर्मजम्बूप्रभवादिसूरिसिंहैः पूर्वं धृतेति तां गणधुरं अयं वहन् मघवेव इन्द्र इव, स्वर्गाधिपत्यं वहन् सुमनःसुखाय सुमनसां पण्डितानां एकत्र,

अन्यत्र च सुमनसां सुराणां, सुखाय जज्ञे जात इति दृष्टा-न्तः ॥ २७ ॥

न्यक्षर्षिभर्त्रा गुरुणाऽमुना च
शिष्येण चानेन नवोदयेन ।
द्वाभ्यां गणोऽसौ शुशुभे वसन्त
इवोल्लसंश्चैत्रिकमाधवाभ्याम् ॥ २८ ॥

न्यक्षर्षिभर्त्रा समस्तसाधुस्वामिना, अमुना गुरुणा च पुन-रनेन नवोदयेन शिष्येणेति अत्र द्वौ चकारौ द्वयोस्तुल्यत्व-सूचकौ द्वाभ्यामेताभ्यां असौ गणः शुशुभे, यथा वसन्तर्त्तुः चैत्रिकमाधवाभ्यां चैत्रवैशाखाभ्यामिव, इति दृष्टान्तः ॥२८॥

अस्मिन्ननूचानपतौ गणस्या-
नुज्ञामुपेते ववृधे विशेषात् ।
श्रीर्दर्शनज्ञानचरित्रमूलं
वेलेव चन्द्रेऽभ्युदयं पयोधेः ॥ २९ ॥

अस्मिन् आचार्यपतौ गणानुज्ञां उपेते प्राप्ते, सति दर्श-नज्ञानचरित्रमूलं दर्शनं सम्यक्त्वं ज्ञानं मतिश्रुताभ्यासरूपं चरित्रं संयमस्तेषां मूलं बीजं श्रीस्तपगच्छसंपत्, ववृधे वृद्धि-मती जाता, पयोधेर्वेलेव चन्द्रेऽभ्युदयं प्राप्ते सति यथा वृद्धि-मती तथेति दृष्टान्तः ॥ २९ ॥

श्रीमत्यनूचान इते गणस्या-
नुज्ञां मनोज्ञामुदयैकमूलम् ।
गच्छोऽयमुल्लासभृदाशु चासीत्
पूर्वाद्रिमंशाविव जीवलोकः ॥ ३० ॥

अस्मिन्नित्यध्याहार्यं अस्मिन् श्रीमति अनूचाने गणस्याऽनुज्ञां किं०, मनोज्ञां पुनः, उदयैकमूलं गच्छाभ्युदयहेतुं, इते प्राप्ते, सति अयं गच्छः उल्लासभृत् आसीत् । यथा पूर्वाद्रिमुदयाचलं, अंशौ सूर्ये, प्राप्ते सति जीवलोको मर्त्यलोक इवेति ॥ ३० ॥

अनुज्ञया साकमथात्र गच्छ-
चिन्तात्मको भार इयाय शिष्ये ।
ज्योत्स्नागमः शीतमरीचिबिम्बे
त्रियामयेवानुगरागमय्या ॥ ३१ ॥

अथात्राऽस्मिन् शिष्ये, अनुज्ञया साकं गच्छचिन्तात्मको भार इयाय आगतवानित्यन्वयः। अनुज्ञया किं०, अनुगानां सेवकानां यो रागस्तन्मय्या यथा शीतमरीचिबिम्बे चन्द्रमण्डले त्रियामया यामिन्या, किं०, अनुगच्छतीत्यनुगः सार्वदिक्को यो रागो रक्तिमा स्नेहः तन्मय्या तत्प्रचुरया, साकं ज्योत्स्नागमः कौमुदीसंगमः, इवेति दृष्टान्तः ॥ ३१ ॥

कृतौ महावीरपरम्परैक-
महारथस्योद्वहनाय धात्रा ।
गुरुर्महौजाश्च विनेय एष
धुरन्धरौ द्वौ वृषभाविवेमौ ॥ ३२ ॥

धात्रा वेधसा, द्वौ धुरन्धरौ गच्छधूर्वहौ, इमौ वृषभाविव कृतौ इमौ कावित्याह--एको गुरुश्च पुनरेष महौजा महाबलवान्, विनेय इति कस्मै उद्वहनाय कस्य महावीरपरम्परामहारथस्य वर्द्धमानजिनशासनशकटस्येति ॥ ३२ ॥

गुरुं च शिष्यं च निरीक्ष्य गच्छ-

चिन्तोद्यतौ सङ्घजनो जहर्ष ।
स्वस्वेषु कार्येषु शुभेषु वामा-
वामाविवात्मीयभुजौ प्रसक्तौ ॥ ३३ ॥

गुरुं च शिष्यं च द्वाविमौ गच्छाचिन्तोद्यतौ निरीक्ष्य सङ्घजनश्चतुर्विधोऽपि सङ्घलोकः, जहर्ष हृष्टः, यथा स्वस्वेषु निजनिजेषु, शुभेषु वर्येषु, कार्येषु वामाऽवामौ सव्याऽपसव्यौ, आत्मीयभुजौ निजबाहू प्रसक्तौ परौ, दृष्ट्वा लोको हर्षवान् भवति तथेति दृष्टान्तः ॥ ३३ ॥

स्वगच्छचिन्तोद्भवभूरिभार-
क्षमं निरीक्ष्यात्मविनेयमेनम् ।
हृदीति दध्यावथ सूरिसंसत्-
सिंहोऽन्यदा हीरगुरुर्गरिष्ठः ॥ ३४ ॥

एनं आत्मविनेयं, स्वगच्छचिन्तोद्भवभूरिभारक्षमं गच्छचिन्तानिर्वाहसमर्थं, निरीक्ष्य अन्यदा सूरिसंसत्सिंहः आचार्यसभाकेसरी, हीरगुरुः श्रीहीरसूरिः, हृदि मनसि, इति वक्ष्यमाणं दध्यौ ध्यातवान् ॥ ३४ ॥

नेत्रे श्रितस्याब्जविलोचनानां
स्यादञ्जनस्येव निजाङ्कमुक्तेः ।
लक्ष्मीरनूचानपतेरमुष्य
देशान् बहून् भूषयतो विहारैः ॥ ३५ ॥

यथा अञ्जनस्य कज्जलस्य, निजाङ्कमुक्तेः स्वास्पदमोचनात् कज्जलकुम्पकात् पृथग् भवतः, अब्जविलोचनानां स्त्रीणां, नेत्रे श्रितस्य लक्ष्मीः स्यात् तथाऽमुष्याऽनूचानपतेरस्याचार्यधुर्यस्य,

निजाङ्कमुक्तेः अस्मदुत्सङ्गास्पदमोचनात्, बहून् देशान् विहारैः भूषयतः सतो लक्ष्मीः स्यादिति ॥ ३५ ॥

ध्यात्वेत्यथो व्याकरणादिविद्या-
विद्याधरीभोगनभोगमानाम् ।
आज्ञामनुज्ञातगणेन्दिराणा-
मेषां विहाराय ददुर्दमीन्द्राः ॥ ३६ ॥

अथेति ध्यात्वा इति मनसि निश्चित्य, एषां, आचार्याणां किं०, अनुज्ञाता गणेन्दिरा गच्छलक्ष्मीः येषां तेषां विहाराय आज्ञां विहारादेशं, दमीन्द्रा गुरवः, ददुर्दत्तवन्त इति। एषां किं०, व्याकरणादिर्या विद्या आदिशब्दात् साहित्यतर्कज्योतिश्छन्दोलङ्कृतिप्रभृतिग्रहः सैव विद्याधरी खेचरी, तस्या भोगे नभोगमानां विद्याधराणामिति ॥ ३६ ॥

आदाय दामेव गुरोर्निदेशं
मूर्ध्नाथ मूर्द्धन्य ऋषीश्वराणाम् ।
क्रमेण सोऽपापमवाप चम्पा-
नेरं पुरं दुर्गमदुर्गमूर्त्तिः ॥ ३७ ॥

स ऋषीश्वराणां मूर्द्धन्यः श्रीआचार्यः, गुरोः श्रीहीरविजयसूरेः, निदेशं विहारादेशं, दामेव मालामिव, मूर्ध्ना आदाय लात्वा, क्रमेण गुरुपार्श्वाच्चलन् चम्पानेरं पुरं दुर्गं, अवाप प्राप्तः, किं० अपापं निष्पापमिति क्रियाविशेषणं नगरविशेषणं वा स किं०, अदुर्गाऽचण्डा मूर्त्तिर्यस्य सः सौम्यमूर्त्तित्वादिति ॥ ३७ ॥

श्रेष्ठीभ्यसभ्यो जयवन्तनामा
तत्रोत्सवैर्दत्तजगत्प्रमोदैः ।

धनान्यपोऽम्भोद इवैष वर्ष

न्नकारयत् प्रौढतमां प्रतिष्ठाम् ॥ ३८ ॥

तत्र चम्पानेरदुर्गे जयवन्तनामा श्रेष्ठी किं०, इभ्येषु धनिषु, सभ्यो मुख्य इति, दत्तजगत्प्रमोदैः जगत्कृताह्लादैः, उत्सवैः प्रौढतमां प्रतिष्ठां अकारयत् आचार्यधुर्यद्वारेतिशेषः किं०, कुर्वन् वर्षन् कानि धनानि वित्तानि, अपः पानीयानि, अम्भोदो मेघ इवेति दृष्टान्तः ॥ ३८ ॥

आचार्यवर्याः पुरि तत्र शुभ्रे

त्रयोदशाह्वेऽह्नि च मासि राधे ।

अब्देऽथ दृक्पावकभूपसंख्ये

कृत्वा प्रतिष्ठां विदधुर्विहारम् ॥ ३९ ॥

तत्र पुरि नगरे, मासि राधे वैशाखे मासे, पुनः, शुभ्रे त्रयोदशीतिथौ पुनः अब्दे किं०, दृक्पावकभूपानां द्व्यङ्कत्र्यङ्कषोडशाङ्कानां क्रमेण वामगतिविन्यस्तानां १६३२ इति संख्या यत्र तत्राब्दे वर्षे प्रतिष्ठां कृत्वा विहारं विदधुश्चक्रिरे ते सूरय इति शेषः ॥ ३९ ॥

क्ष्मां पावयन्तः पदपद्मपांसु-

पूरैरनूचानशिरोवतंसाः ।

क्रमादलंचक्रुरलङ्कृताब्धि

श्रीपूरितं सूरतिबन्दिरं ते ॥ ४० ॥

क्रमात् अनूचानशिरोवतंसा आचार्यशीर्षशेखराः, पदपद्मपांसुपूरैः चरणकमलरेणुगणैः, क्ष्मां भूमिं, पावयन्तः पवित्रीकुर्वन्तः चलन्त इति यावत्, अलङ्कृतो विभूषितोऽब्धिः समुद्रो

येन तत् तदुपकण्ठवर्त्तित्वादिति; पुनः, श्रीपूरितं सूरतिबन्दिरं तेऽलञ्चक्रुः प्राप्ता इति ॥ ४० ॥

पौरैरथास्मिन्नगरे प्रवेशो-
त्सवा अतुच्छा विहिता यथेच्छम् ।
ज्येष्ठस्थितिं ते गुरवोऽथ तस्थु-
स्तत्रैव धर्मा इव मूर्त्तिमन्तः ॥ ४१ ॥

अथाऽस्मिन्नगरे पौरैर्नगरमहाजनैः, प्रवेशोत्सवाः यथेच्छं यथारुचि, तथा विहिता इति तत्रैव नगरे सूरतिबन्दिरे ते गुरवोऽथ ज्येष्ठस्थितिं चतुर्मासीं तस्थुः इवोत्प्रेक्ष्यते मूर्त्तिमन्तो धर्मा इव शरीरिणः साधुधर्मा इति ॥ ४१ ॥

अथ तत्र किं जातमित्याह—

श्रीभूषणो नाम दिगम्बरेश-
स्तेषां गुरूणां कमलोत्सवानाम् ।
तत्राथ शोभामसहिष्णुरुष्ण-
भासामिवोलूकयुवा बभूव ॥ ४२ ॥

अथ चतुर्मासकानन्तरं तत्रैव तस्थुषां तेषां गुरूणां उष्णभासां सूर्याणामिव कमलोत्सवानां गुरुपक्षे कमलाया लक्ष्म्याः उत्सवो येभ्यस्तेषां सूर्यपक्षे कमलानां कजानां उत्सव इति । शोभां श्रियं, असहिष्णुः अक्षमिता, क इत्याह--श्रीभूषणो नाम्ना दिगम्बरेशो दिक्पटाचार्यः, इति क इव बभूवेति प्राह--उलूकयुवा घूक इवेति ॥ ४२ ॥

तेषां प्रभूणां प्रतिभाप्रकर्ष-
प्रद्योतनोद्द्योतिमुखाम्बुजानाम् ।

संघाशिषा मञ्जुलमङ्गलाली-
मूलेन सज्जीकृतसाहसानाम् ॥ ४३ ॥
श्रीमिश्रचिन्तामणिमुख्यभट्ट-
सभ्येषु पौरेषु च सत्सु सत्सु ।
वादे सहानेन दिगम्बरेण
जयोऽभवल्लोकमुदब्धिचन्द्रः ॥ ४४ ॥

तेषां प्रभूणां गुरूणां, किं०, प्रतिभाप्रकर्षप्रद्योतनोद्द्योति-मुखाम्बुजानां प्रज्ञोत्कर्षादित्योद्द्योतवद्वदनकमलानां, पुनः किं०, सज्जीकृतं साहसं सत्त्वं यैस्तेषां, कया, संघाशिषा चतुर्विधसङ्घ-संबन्धिमङ्गलशंसनेन, किं०, मञ्जुलमङ्गलालीमूलेन कमनी-यकल्याणश्रेणिकारणेनेति ॥ ४३ ॥ पुनः केषु, पौरेषु नागरेषु, किं०, सत्सु पण्डितेषु साधुषु वा, किं०, श्रीमिश्रचिन्तामणि-नाम्ना मुख्यो भट्टः सभ्यो येषु तेषु श्रीमिश्रचिन्ताम-णिमुख्यभट्टसभ्येषु, सत्सु भवत्सु, अनेन दिगम्बरेण सह, वादे जायमाने सति, जयोऽभवद् बभूव, किं०, लोकमुदब्धौ जनप्रमोदपयोधौ चन्द्रस्तद्वृद्धिकारित्वादिति युग्मव्याख्ये-यम् ॥ ४४ ॥

दृष्ट्वेनमेनं सरसीजपाणिं
पद्मोत्सवं द्रागुदयं प्रपन्नम् ।
श्रीभूषणो कैरविणीसमूह-
इवाभवद् मुद्रितवक्त्रकोशः ॥ ४५ ॥

एनं इनं स्वामिनं सूर्यं वा, उदयं प्रपन्नं दृष्ट्वा, किं०, सर-सीजवत् पाणी यस्य तं, पक्षे सरसीजं पाणौ यस्य तं; पुनः

किं०, पद्माया रमायाः, पक्षे पद्मानां कमलानां उत्सवो यस्मात् तं, श्रीभूषणो दिक्पटः, कैरविणीसमूह इव मुद्रितो वक्त्रकोशो मुखकुड्मलं यस्य सः, अभवद् जातवानिति ॥ ४५ ॥

शास्त्रज्ञविज्ञद्विजभूरिभट्टै-
र्यत्तद् वदन् पर्षदि भूषितायाम् ।
श्रीभूषणः दिग्वसनस्तदानीं
हास्यास्पदं बाल इवाजनिष्ट ॥ ४६ ॥

"शासनसामर्थ्येन तु सन्त्राणबलेन वाऽनवद्येन ।
युक्तं यत्तच्छास्त्रं तच्चैतत् सर्वविद्वचनम्" ॥ १ ॥

इत्युक्तेः शास्त्राणि सर्वज्ञवचनानि जानन्तीति शास्त्रज्ञाः जैनपण्डिताः, पुनर्विज्ञा द्विजाः पञ्चकाव्यादिदक्षविप्राः, पुनः, भूरिभट्टास्तार्किकास्तैर्भूषितायां पर्षदि यत्तद् अपसिद्धान्तरूपं, वदन् तदानीं श्रीभूषणो दिग्वसनोऽबालोऽपि बाल इव मूर्ख इव, हास्यास्पदं अजनिष्ट जातः, सर्वेषां सभ्यानामिति शेषः ॥ ४६ ॥

अस्मिन्ननूचानवितानशक्रे
जयाङ्किताङ्के सुमनोमनोज्ञे ।
श्रीभूषणस्य स्मयतुङ्गशैलः
समन्ततः स्राक् कणशो बभूव ॥ ४७ ॥

अस्मिन् अनूचानवितानशक्रे आचार्यवृन्देन्द्रे, किं०, जयाङ्किताङ्के गुरुपक्षे जयेन वादिविजयरूपेण, पक्षे जयेन जयदत्तेनेन्द्रपुत्रेण अङ्कितोऽलङ्कृतः अङ्क उत्सङ्गो यस्य तस्मिन् जयवति जाते सति, पुनः किं०, सुमनोभिः पण्डितैः, पक्षे देवैर्मनोज्ञे मनोहरे, श्रीभूषणस्य प्रतिवादिनः, स्मयतुङ्गशैलः

गर्वोत्तुङ्गगिरिः, स्राक् शीघ्रं, कणशः शतखण्डशः, बभूवेति-
भावः ॥ ४७ ॥

दुर्वादिदर्पज्वरशान्तिवैद्यैः
कुर्वन्ननूचानवरैर्विवादम् ।
श्रीभूषणाशावसनोऽजनिष्टा-
नर्थाभिधश्चात्ममतार्थनामा ॥ ४८ ॥

अनूचानवरैः, किं०, दुर्वादिदर्प एव ज्वरो रोगस्तस्य शान्तौ शमने वैद्यैः, विवादं कुर्वन् श्रीभूषणाशावसनः श्रीभूषणनामा आशावसनो दिगम्बरः, किंलक्षणोऽभूदित्याह--अनर्था निरर्थिका अभिधा संज्ञा यस्य सः, श्रीभूषणपदेऽश्रीभूषणोऽभूत्, पुनः, आत्ममतार्थं स्वमतार्थतुल्यं नाम यस्य सः दिगम्बरमतभृत्त्वेन दिगम्बरो नग्नोऽभूदिति भावार्थः ॥ ४८ ॥

चतुर्दिगुच्चैश्चतुरस्रिकायां
वव्रे जयश्रीः सतताऽवियोगा ।
श्रीभूषणाहंकृतिदारुदाह-
दीप्तप्रतापानलसाक्षिकं तैः ॥ ४९ ॥

तैः सूरिभिः, तत्र जयश्रीः वव्रे इत्यन्वयः । किं०, सततं अवियोगा सदा संयोगवतीत्यर्थः, कस्यां, चतुर्दिश एवोच्चैरत्युच्चा या चतुरस्रिका मङ्गलकलसाङ्किता लोके 'चउरी' इति प्रसिद्धा तस्यां चतुर्दिगुच्चैश्चतुरस्रिकायां, पुनः कथमित्याह--श्रीभूषणस्य अहङ्कृतिरहङ्कारः स एव दारुदाहः काष्ठज्वालनं तेन दीप्तो यः प्रतापानलः तेजःपावकस्तस्य साक्षिकम्, यतो लोकेऽग्निं विना कन्यावरणं न स्यादिति ॥ ४९ ॥

स्वर्लोकभूलोकभुजङ्गलोक-

विलासिनीगीतविनीतगीतः ।
अयं जयश्रीकरपीडनाह्वो
महो महांस्तत्र पुरे प्रजातः ॥ ५० ॥

स्वर्लोको अमर्त्यलोकः भूलोको मर्त्यलोकः भुजङ्गलोकः पाताललोकः तेषां विलासिनीभिः स्त्रीभिः गीतानि गानगोचरीकृतानि विनीतानि विनयगर्भितानि गीतानि गुणावदातरूपाणि यस्य सः, जयश्रीकरपीडनाह्वः जयलक्ष्मीकरग्रहाख्यः, अयं उक्तलक्षणः, महः किं०, महान् तत्र पुरे, प्रजातोऽभूत् ॥ ५० ॥

विचित्रवादित्रपवित्रपात्र-
विस्तारिशब्दैर्बधिरीकृताध्वा ।
भूयस्तमानन्दनिदानदान-
प्रह्वाखिलश्रावकदत्तमानः ॥ ५१ ॥
सद्यो नवोढां जयकन्यकां तां
कान्तामनूचानवरो वरास्याम् ।
कुलाङ्गनागीतमनोज्ञगीतो
लात्वा निजोपाश्रयमाजगाम ॥ ५२ ॥

विचित्राणि नानाप्रकाराणि यानि वादित्राणि भेरीमृदङ्गवीणावेणुप्रमुखाणि पुनः पवित्राणि च यानि पात्राणि राजनर्त्तकरूपाणि तेषां शब्दैः बधिरीकृतः अध्वा मार्गो यस्य सः, पुनः किं०, भूयस्तमो अतिघनो य आनन्दो मोदः तन्निदानं कारणं यद्दानं तत्र प्रह्वैः आसक्तैः अखिलैः सर्वैः श्रावकैः दत्तं मानं पूजालक्षणं यस्य सः ॥५१॥ एवंविधः कः किं च कृतवा-

नित्याह-सोऽनूचानवरः श्रीमदाचार्यवर्यः, तां जयकन्यकां, किं०, नवोढां नवपरिणीतां, पुनः किं०, कान्तां अभीष्टां, सर्वेषामिति शेषः । पुनः किं०, वरास्यां रम्यमुखीं, लात्वा किंलक्षणः सन्, कुलाङ्गनागीतमनोज्ञगीतः सन् कुलस्त्रीगीतध्वनिपूर्वकमिति, निजोपाश्रयं स्वं स्थानं, आजगाम आगतवानिति युग्मव्याख्या ॥ ५२ ॥

देशात् प्रभुः कुङ्कणदेशधात्री-
लताविलासैककलावसन्तः ।
दुर्वादिवृन्दद्रुममत्तदन्ता-
बलो बलाढ्यो ववलेऽथ तस्मात् ॥ ५३ ॥

अथ तस्माद् देशात्, स प्रभुर्ववले पश्चाद् वलितो गूर्जरत्रां प्रतीत्यन्वयः। किं०, कुङ्कणदेशस्य या धात्री पृथ्वी सैव लता वल्ली तस्या विलासैककलायां वसन्तः तच्छोभासंपादकत्वात्, पुनः किं०, दुर्वादिवृन्दान्येव द्रुमास्तरवस्तेषु मत्तदन्तावलः प्रभिन्नगजस्तद्भञ्जकत्वात्, अत एव बलाढ्यः श्रुतबलादिपरिपूर्ण इति ॥ ५३ ॥

शस्तैः समस्तां सुखयन् धरित्रीं
गोभिः पयोवाह इव स्वकीयैः ।
श्रीपत्तनं पत्तननाम तुङ्ग
द्रङ्गं क्रमात् प्रावृषि सोऽधितष्ठौ ॥ ५४ ॥

क्रमात् स गुरुः, ततो देशाद् विहरन् कालान्तरेण स्वकीयैर्गोभिर्वाग्भिः, पयोवाह इव गोभिर्जलैः, धरित्रीं सुखयन्, गोभिः किं०, शस्तैः प्रशस्तैः, गोशब्दस्य पुंस्त्रीलिङ्गत्वादिदं पुंविशेषणम्,

पत्तनं नाम तुङ्गं द्रङ्गं, किं०, श्रियः पत्तनमिव श्रीनगरमिति, प्रावृषि वर्षाचतुर्मासके, अधितष्ठौ स्थित इति ॥ ५४ ॥

इतश्च रङ्गत्तरतुङ्गगाङ्ग-
तरङ्गतुल्याऽतुलकीर्त्तिकीर्त्त्या ।
शुभ्रीकृताशेषककुप्प्रपञ्चः
पूर्वर्षिपन्थाम्बुधिपूर्णिमेन्दुः ॥ ५५ ॥

सौभाग्यभूर्हीरगुरुर्गरीयः-
श्रीभ्राजि गन्धारपुरे वरेण्ये ।
तस्थौ जगल्लोकमनःप्रदत्त-
हर्षासु वर्षासु सुखाब्धिमीनः ॥ ५६ ॥

इतश्चेति अधिकारान्तरे, रङ्गत्तराश्च तुङ्गाश्च ते गाङ्गतरङ्गा-गङ्गोर्मयस्तैस्तुल्यस्तत्तुल्यः, पुनरतुलोऽनुपमः कीर्त्तिविस्तारो यस्याः "कीर्त्तिर्यशसि विस्तारे" इति श्रीहेमसूरिवचनात्, तया रङ्गत्तरतुङ्गगाङ्गतरङ्गतुल्यातुलकीर्त्तिकीर्त्त्या; शुभ्रीकृतो धवलितः अशेषककुप्प्रपञ्चो निःशेषदिगाभोगो येन सः, पुनः, पूर्वर्षिप-न्थाम्बुधिपूर्णिमेन्दुः प्राचीनमुनिमार्गार्णवपूर्णचन्द्र इति, पथवत् पन्थशब्दोऽप्यस्तीति ध्येयम् ॥५५॥ ईदृक् कः किं च विहितवा-नित्याह-पुनः सौभाग्यभूः सुभगत्वगेहं, हीरगुरुः श्रीहीरविजय-सूरिः, गरीयःश्रीभ्राजि महीयोलक्ष्मीशालिनि, पुनः, वरेण्ये श्रेष्ठे, गन्धारपुरे बन्दिरे, तस्थौ, कासु, वर्षासु, किंलक्षणासु, जगल्लो-कमनसां प्रदत्तो हर्षो याभिस्तासु, गुरुः किं०, सुखाब्धौ सौ-ख्यसमुद्रे मीनस्तत्र मग्नत्वादिति युग्मव्याख्या ॥ ५६ ॥

साम्प्रतं काव्यचतुष्टयेन सर्गमुपसंहरति—

सति सुरतरौ धाम्नीवाऽऽर्त्तिर्न दौःस्थ्यसमुद्भवा

वसति सति भीः सौपर्णेये न पन्नगभूरिव ।
अभवदसुखं सत्यासन्नं न हीरगुरौ गुरौ
जलधिसविधे श्रीगन्धारे पुरे परमोदये ॥ ५७ ॥

इव यथा, धाम्नि गेहे, सुरतरौ कल्पपादपे सति, दौःस्थ्यसमुद्भवा दारिद्र्यजाता, अर्त्तिः पीडा, न स्यात्; तथा सौपर्णेये गरुडे, वसति सति, इव यथा, पन्नगभूः भीः सर्पोद्भवा भीतिः, न स्यात्; तथा जलधेः समीपं यत्र तत्र जलधिसविधे समुद्रान्तिकवर्त्तित्वात् श्रीगन्धारे पुरे, पुनः किं०, परः प्रकृष्टः मायालक्ष्म्या उदयो वाहनादीनां क्षेमेणाऽऽगमनाद् यत्र, अथवा परमः प्रकृष्ट उदयो यत्र तत्र, हीरगुरौ किं०, गुरौ महति सति चतुर्मासीमासीने सति असुखं आसन्नं नाभवत् सातमेव जातमिति ॥ ५७ ॥

अथानूचानान् वर्णयति—

तपति तपने याऽम्भोजानां सरस्यतलार्णसि
प्रणयिनि मृगीनेत्राणां या निशान्तिकवर्त्तिनि ।
अजनि जनितामन्दानन्दा सदा रतिरङ्गिनां
स्थितवति सुखं साऽनूचाने पुरोत्तमपत्तने ॥ ५८ ॥

तपने भानौ, तपति सति, सरसि तटाके, किं०, अतलार्णसि अगाधजले, या अम्भोजानां भवति; पुनर्मृगीनेत्राणां स्त्रीणां, या निशान्तिकवर्त्तिनि निशायां अन्तिकवर्त्तिनि, अथवाऽनिशं नित्यं अन्तिकवर्त्तिनि समीपस्थायिनि सति, प्रणयिनि भर्त्तरि भवति, सा रतिः प्रीतिः, सदा निरन्तरं, पुरोत्तमपत्तने अनूचाने श्रीविजयसेनसूरौ स्थितवति सति, सुखमिति क्रियाविशेषणं, अजनि जाता, केषां, अङ्गिनां तत्रत्यसङ्घजनानां,

रतिः किं०, जनिताऽमन्दानन्दा निर्मितानल्पाह्लादेति ॥ ५८ ॥

सलिलललिते तापव्यापो दिवीव घनोदये

वनभुवि हरौ लीलाशीले स्थितिः करिणामिव ।

इह पुरि सुधीप्रीतिश्रीवाङ्मयाम्बुधिकुम्भजे

न हि सति महानूचानेन्द्रे कुपाक्षिकभीरभूत् ॥५९॥

इव यथा, दिवि आकाशे, सलिलललिते जलापूर्णे, घनोदये मेघोदये सति, तापव्यापो न स्यात्; पुनः, यथा वनभुवि काननावनौ, हरौ सिंहे, लीलाशीले क्रीडाशालिनि सति, करिणां हस्तिनां, स्थितिर्न स्यात्; तथा इह पुरि पत्तननगरे, महानूचानेन्द्रे श्रीमदाचार्ये सति, किं०, सुधीनां पण्डितानां प्रीतिश्रीर्यस्माद् एवंविधो यो वाङ्मयाम्बुधिः सिद्धान्तसमुद्रस्तत्र कुम्भजेऽगस्त्ये, कुपाक्षिकभीः कुमतिलोकभीतिः, नाऽभूत् ॥५९॥

गगनसदने नक्षत्राणामिवामलरोचिषां

शरदि सुहृदि प्राप्तायां क्ष्मातलान्तरपामिव ।

सुकृतिकृतिदृग्व्यापारश्रीविलासविधायिना-

मजनि महिमाऽनूचानानां भृशं पुरि पत्तने ॥६०॥

इव यथा, शरदि प्राप्तायां शरत्काले जाते सति, गगनसदने व्योमाङ्गणे, अमलरोचिषां निर्मलत्विषां, नक्षत्राणां महिमा स्यात्; पुनः शरदि किं०, सुहृदि मित्रानुकारिण्यां, लोकानामाह्लाददायित्वादिति प्राप्तायां, क्ष्मातलान्तर्भूमध्ये, अपां पानीयानां, इव यथा, महिमा स्यात्; तथा पत्तने पुरि नगरे, अनूचानानां श्रीआचार्याणां, किं०, सुकृतिषु पुण्यात्मसु कृतिषु च पण्डितेषु दृग्व्यापारेण निरीक्षणरूपेण श्रीविलासविधायिनः कमलोल्लासकारिणस्तेषां, महिमा माहात्म्यं, अजनि ॥ ६० ॥

अत्र सर्गे इन्द्रवज्रोपेन्द्रवज्रयोः पादोद्भवोपजातिनामकं छन्दः, तल्लक्षणं तु प्रागभिहितम् । अन्त्ये वृत्तचतुष्टये हरिणीच्छन्दः, तल्लक्षणमपि पूर्वं प्रतिपादितमिति ।

. . . . . . . . . . . . . . . . . . . . . . . . . . .

इतीति कण्ठ्यम् ।

इति सकलसुविहितसभासार्वभौमसमानपण्डितमण्डलीमौलिमौलीयमानपण्डितश्रीकमलविजयगणिसुशिष्यमुख्यपण्डितपुरन्दरप्रख्यपण्डितश्रीविद्याविजयगणिविनेयवाचकगुणविजयगणिविरचितायां विजयप्रदीपिकाभिधानधारिकायां सुखावबोधिकायां श्रीविजयप्रशस्तिमहाकाव्यटीकायां अष्टमः सर्गोऽर्थतः समर्थितः ।



अर्हम्

# अथ नवमः सर्गः ।



अथ नवमः सर्गः समारभ्यते, अयं सर्गः श्रीअकब्बरपातिशाहिश्रीहीरविजयसूरिचरितरूपः, तेनाऽऽदावेकादशभिर्वृत्तैः सामान्येन पातशाहिश्रीमदकब्बरं कविर्वर्णयति—

इतश्च तीव्रातपतीव्रदीधिति-
प्रभप्रतापानलदीप्तदिग्मुखः ।
अकब्बरः शत्रुनितम्बिनीदृशामनञ्जनीकारकृती विराजते ॥ १ ॥

इतश्चेत्यस्मिन्नवसरे, अकब्बरो नाम्ना पातशाहिः, विरा-

जत इत्यन्वयः । किं०, तीव्रः खर आतपो यस्याऽसौ तीव्रदीधितिः सूर्यस्तत्प्रभो यः प्रतापानलस्तेन दीप्तं भासितं दिग्मुखं येन सः, पुनः किं०, शत्रुनितम्बिनीदृशां वैरिनारीनयनानां, अनञ्जनीकारे कज्जलवत्त्वाभावकरणे कृती दक्षस्तद्भर्तॄणां व्यापादकत्वादिति ॥ १ ॥

चतुर्दिशां राज्यमरातिभूभुजां
यशश्चयोल्लासिविधौ विधुन्तुदः ।
फतेपुरे स्फूर्तिमति स्थितः स्थिर-
स्थितिर्दिवीवोष्णरुचिर्बिभर्ति यः ॥ २ ॥

यः पातिशाहिः, चतुर्दिशां राज्यं बिभर्तीत्यन्वयः । किं०, अरातिभूभुजां वैरिनृपाणां, यशश्चयोल्लासिविधौ कीर्त्तिवितानचन्द्रमसि, विधुन्तुदो राहुस्तद्ग्रासकृत्त्वात्, पुनः किं०, स्थितः, कस्मिन्, फतेपुरे लोके 'सीकरी' इति प्रसिद्धे, किं०, स्फूर्त्तिमति देदीप्यमाने, यः किं०, स्थिरा स्वाधीनत्वेन निश्चला स्थितिर्यस्य सः, यथा दिवि गगने, उष्णरुचिः सूर्यः, अपरेषां चन्द्राङ्गारकादीनां ग्रहाणां दीप्त्यभावाच्चतुर्दिशां राज्यं बिभर्तीति दृष्टान्तः ॥ २ ॥

वलक्षपक्षद्वयराजहंसभृद्
यदीयसेना सुरवाहिनी नवा ।
महाबलोत्सर्पितुरङ्गमोर्मिभाग्
विगाहते स्माऽखिलदिग्मुखानि या ॥ ३ ॥

वलक्षं धवलं पक्षद्वयं येषां ते वलक्षपक्षद्वयास्ते राजहंसाः कलहंसा नृपोत्तमाश्च तान् बिभर्तीति वलक्षपक्षद्वयराजहंसभृत्, यस्याऽकब्बरस्य सेना चमूर्यदीयसेना, नवा

सुरवाहिनी गङ्गा जातेति योगः । नवीनत्वे हेतुमाह—या सेना सुरवाहिनी अखिलदिग्मुखानि विगाहते स्म, सा गङ्गा त्वेक-दिग्मुखमवगाहते इयं तु चतुर्दिग्मुखानीति नवीनत्वे हेतुः; या किं०, महाबलाश्च ते उत्सर्पिणश्च अथवा महाबलवद् वायुवत् उत्सर्पिणो धावन्तो ये तुरङ्गमा अश्वा एवोर्मयः कल्लो-लास्तान् भजतीति महाबलोत्सर्पितुरङ्गमोर्मिभाक् वायुवेगाश्व-कल्लोलवतीति, गङ्गापक्षे महाबलेन वायुना उत्सर्पिण-इतस्ततो व्रजन्तः पुनः तुरङ्गमाः शीघ्रङ्गमा ये ऊर्मयस्तान् भजतीति भावार्थः ॥ ३ ॥

स्वःप्रेतयादःस्वपतिस्मयक्षयः
कृतोऽमुना दिग्विजयं वितन्वता ।
बलोद्धतं येन यशस्विना रजो
न्यधायि यद्दिग्दयिताऽलकेषु यत् ॥ ४ ॥

अमुनाऽकब्बरेण, दिग्विजयं वितन्वता दिग्विजयका-रिणा, स्वःप्रेतयादःस्वपतीनां अत्र पतिशब्दः प्रत्येकं चतुर्णां पुरः प्रयोज्यः, तेन स्वःपतिप्रेतपतियादःपतिस्वपतीनामिन्द्र-यमवरुणकुबेराणां स्मयक्षयो गर्वध्वंसः कृतः । कथं ज्ञात-मित्युत्तरार्धेनाह—यत्कारणात् , येन यशःस्विना कीर्ति-शालिनाऽकब्बरेण, बलोद्धतं बलेन कटकेनोद्धतं, रजो यद्दिग्-दयिता येषां दिशः पूर्वदक्षिणपश्चिमोत्तरास्ता एव दयिताः स्त्रियस्तासां अलकेषु केशेषु, न्यधायि क्षिप्तमिति । येन हि यत्कामिनीकुन्तलेषु धूलिर्दत्ता तेन तद्भर्तृगर्वापहारः सुतरां कृत इति निर्गलितार्थः ॥ ४ ॥

समं समा दिग्महिला रजस्वला
यदीयसैन्ये वसुधासु सर्पति ।

पतिं युवानं यमवाप्य भोगिनं

जयं प्रसूताः सुतमङ्कशायिनम् ॥ ५ ॥

यदीयसैन्ये यत्कटके, वसुधासु पृथ्वीषु, सर्पति चलति सति, समं समकालं, समाः सर्वाः, दिग्महिला रजस्वलाः पांसुमत्यः स्त्रीधर्मवत्यश्च जाता इति योगः । ततः किं जातमित्याह—यं भोगिनं पतिं भर्तारं, अवाप्य अङ्कशायिनं उत्सङ्गस्थायिनं, जयं वैरिजयरूपं, सुतं प्रसूता जनयांचक्रुरिति ॥ ५ ॥

न पेशलं कौशलमस्य सैन्यजं

वयं विधातुं विषयं गिरामलम् ।

विरोधिपाथोनिधिमेखलाभुजां

यदाऽऽददे द्रागसतीं जयश्रियम् ॥ ६ ॥

अस्याऽकब्बरस्य, सैन्यजं कटकोद्भवं, कौशलं नैपुण्यं, किं०, पेशलं मनोज्ञं, गिरां विषयं विधातुं वागगोचरीकर्तुं वक्तुमिति यावत्, वयं नाऽलं न समर्थाः, स्म इति शेषः । तत्कारणमेवाऽऽविष्कुरुते—यत्कारणात्, विरोधिपाथोनिधिमेखलाभुजां वैरिणां राज्ञां, असतीं अविद्यमानां, जयश्रियं जयलक्ष्मीं, आददेऽग्रहीत् ॥ ६ ॥

स्वस्मिन्नसद् येन भयं वितीर्यते

विरोधिनां येन जयो न सन्नपि ।

इत्युग्रचिन्ताचकितात्मनां जहु-

र्दृशो निमेषांस्त्रिदिवौकसां किमु ? ॥ ७ ॥

येनाऽकब्बरेण स्वस्मिन् असत् आत्मन्यविद्यमानं, भयं विरोधिनां वैरिणां, वितीर्यते दीयते इत्यन्वयः । पुनः, येन सन्नपि

विद्यमानोऽपि, जयो न वितीर्यते इति द्वितीयोऽन्वयः । किम्वित्युत्प्रेक्ष्यते, इत्युग्रचिन्तया चकितात्मनां आकुलीभूतानां, त्रिदिवौकसां देवानां, दृशो नेत्राणि, निमेषान् जहुस्त्यजन्ति स्मेति ॥ ७ ॥

तुरङ्गलालापटलैः सुधोज्ज्वलै-
मदैर्गजानां शितिभिश्च भूरिभिः ।
नभःसरित्सूर्यसुतासमागमा-
दिवाऽभवत् तीर्थमदःपताकिनी ॥ ८ ॥

तुरङ्गाणां अश्वानां लालापटलैः किं०, सुधोज्ज्वलैः पीयूषप्रभैर्धवलैरिति, पुनः गजानां मदैः किं०, शितिभिः श्यामैः, नभःसरित्सूर्यसुतयोर्धवलाधवलयोर्गङ्गायमुनयोः समागमात् तुरङ्गलालारूपा गङ्गा गजमदरूपा यमुना तयोः संयोगात्; अदःपताकिनी अस्याऽकब्बरस्य पताकिनी सेना, तीर्थमेवाऽभवत्; यतः "गङ्गायमुनयोर्योगे महातीर्थमुदाहृतम्" इति पुराणवचनात् ॥ ८ ॥

यशो यदीयं कुमुदेन्दुसुन्दरं
जगुस्तमामित्यहिराजयोषितः ।
धरन् धरां नः पतिखेदमुल्वणं
जहार यः क्ष्माभरभारसंभवम् ॥ ९ ॥

यस्याऽकब्बरस्य संबन्धि यदीयं, यशः किं०, कुमुदेन्दुसुन्दरं कैरवकैरवबन्धुबन्धुरं, इति कारणात् अहिराजयोषितः शेषनागनार्यः, जगुस्तमां गायन्ति स्मेत्यन्वयः । इतीति कुत इत्याह-यः शाहिः, धरां भूमिं, धरन् सन् नोऽस्माकं, पतिखेदं भर्तृश्रमं, किं०, क्ष्माया भरेणाऽतिशयेन यो भारस्तत्संभवं, जहार

हृतवान् ॥ ९ ॥

पुरेषु शून्येषु यदीयविद्विषां
भृशोच्चसौधाग्रतृणाङ्कुरासितः ।
महोदरो द्राक् पिदधद् विधुं मृगो
न्यहन् स्वभर्तुस्तमसो भवं भयम् ॥ १० ॥

यदीयविद्विषां यस्याऽकब्बरस्य वैरिणां, शून्येषु पुरेषु भृशोच्चानि यानि सौधाग्राणि तेषु ये तृणाङ्कुराः, षट्प्ररोहास्तेषां आसितः प्रापणात्, मृगो मृगलाञ्छनलाञ्छनीभूतो महोदरः सन्, विधुं चन्द्रं, पिदधत् आच्छादयन्, स्वभर्तुश्चन्द्रस्य, तमसो भवं राहुजं, भयं न्यहन् हन्ति स्मेति ॥ १० ॥

अभूदगारातिकृतान्तपाशभृ-
द्धनाधिपेभ्योऽपि हि यो बली बहु ।
दधुर्दिशां भारममी यमुद्भटं
बिभर्ति चैष स्वयमेक एव तम् ॥ ११ ॥

योऽकब्बरः, अगाऽरातिः इन्द्रः कृतान्तो यमः पाशभृद् वरुणः धनाधिपः धनदः एभ्योऽपि, बहु अतिशयेन, बली बलवान् अभूदित्यन्वयः। बलवत्त्वे हेतुमाह—यस्मादित्यध्याहार्यम्, यं उद्भटमुत्कटं, चतुर्दिशां भारं अमी चत्वारोऽपि लोकपालाः, दधुर्धरन्ति स्म, तं दिशां भारं, एष शाहिः, एक एव स्वयमात्मना बिभर्तीति भावः ॥ ११ ॥

अथैकदा सोऽवनिजानिचन्द्रमा
नमन्नृपश्रेणिनिषेवितक्रमः ।
परत्रसंपत्सुकृतस्य वर्त्मनो-

ऽभवत् परीक्षासु विचक्षणेक्षणः ॥ १२ ॥

अथेत्यधुना, सोऽवनिजानिचन्द्रमा अकब्बरो राजेन्दुः, किं०, नमन्नृपश्रेणिभिर्निषेवितौ क्रमौ यस्य सः, एकदा कदाचिदेकस्मिन् दिने, परत्र परलोके संपद् यस्मादेवंविधं सुकृतं पुण्यं यस्मिन् तस्य, वर्त्मनो मार्गस्य, परीक्षासु विचक्षणं प्रवीणं ईक्षणं ज्ञानलोचनं यस्य सः, पारलौकिकपुण्यमार्गपरीक्षायां परीक्षकोऽभूदिति भावार्थः ॥ १२ ॥

श्रीमान् हमाऊतनयोऽरिपार्थिव-

प्रियाश्रुपूरैरभिषिक्तविक्रमः ।

स दर्शनानामतिदर्शनीयदृग्

जनान् समस्तान् मतिमानमीमिलत् ॥१३॥

सः श्रीमान् हमाऊतनयोऽकब्बरः, किं०, अरिपार्थिवप्रियाश्रूणां वैरिराजनारीनयननीराणां पूरैः, अभिषिक्तो विक्रमः पराक्रमो यस्य सः, स मतिमान् पुनः, अतिदर्शनीयदृग् धर्मप्रियत्वात् अतिदर्शनीयं विलोकनार्हं दृग् दर्शनं यस्य सः, दर्शनानां जनान् इत्यत्र धर्मधर्मिणोरभेदोपचाराद् बौद्धादीनां पञ्चानां दर्शनानां दर्शनिनः समस्तान् अमीमिलत्, आदौ पञ्चदर्शनजनान् संमील्य धर्माधर्मपरीक्षां कृतवानिति ॥ १३ ॥

अमीष्वसौ स्वस्वमतार्थवादिषु

प्रियं न पन्थानमपश्यदात्मनः ।

मणीमिवोच्चावचकेरषु सद्रुचिं

रजस्तृणाश्मच्छगणादिपङ्क्तिषु ॥ १४ ॥

असौ शाहिः, स्वस्वमतार्थवादिषु निजनिजमताभिमतभाव-

भाषणपरेषु, अमीषु दर्शनिषु परीक्षितेषु सत्सु, आत्मनः प्रियं पन्थानं नाऽपश्यत् । दृष्टान्तमाह–रजस्तृणाऽश्मच्छगणादीनां पङ्क्यो येषु तेषु, उच्चाऽवकरेषु मौढसंकरेषु, सद्रुचिं स्फुरत्कान्तिं, मणीमिव रत्नमिवेति, अत्र मणिवद् मणीशब्दोऽप्यस्तीति ध्येयम् ॥ १४ ॥

तदा मुदा तत्पदपद्मषट्पदो-

ऽतिमेतखानः शुभगीरदोऽवदत् ।

इहाऽस्ति शस्ताकृतिराप्तवाग् व्रती

महामतिर्हीर इति व्रतिप्रभुः ॥ १५ ॥

तदा शाहिना परीक्षितेषु सर्वेष्वपि पाखण्डिषु तथाविधं द्वेधाऽपि मनोज्ञं मुनिमपश्यता पृष्टः सन् अतिमेतखाननामा गूर्जरत्रासत्कः श्रीगुरून् दृष्टपूर्वी महामुद्गलः, किं०, तत्पदपद्मयोस्तस्य शाहेश्चरणकमलयोः षट्पदो रोलम्बः, पुनः किं०, शुभगीर्वरवचाः, अदो वक्ष्यमाणम्, अवददित्यन्वयः । इह जगति, हीर इति पदैकदेशे पदसमुदायोपचाराद् हीरो हीरविजयसूरिरिति, व्रतिप्रभुर्मुनीन्द्रः, किं०, शस्ताकृतिः रुचिराकारधारित्वात्, पुनः, आप्तवाक् सत्यभाषित्वात्, पुनः, महामतिः शास्त्रपारगत्वात्, अस्ति वर्तत इति ॥ १५ ॥

स एव देवाऽम्बुजबन्धुवच्छुभा-

ऽशुभाध्वनोस्त्वत्प्रिययोः प्रकाशकः ।

स चाधुना क्वेत्युदितेऽथ शाहिना

स शाहिमाह स्म पुनः पटिष्ठवाक् ॥ १६ ॥

स एव नाऽन्य इति अत्रैवकारोऽन्ययोगव्यवच्छेदकः, हे देव राजेन्द्र! अम्बुजबन्धुवत् सूर्य इव, त्वत्प्रिययोः परीक्षां

कर्तुमिष्टयोः, शुभाशुभाऽध्वनोः सत्यासत्यमार्गयोः, प्रकाशको-ऽस्तीत्यन्वयः । अधुना इदानीं, स हीरगुरुः क्वाऽस्तीति शाहिना श्रीअकब्बरेण, उदिते सति, पुनः, सोऽतिमेतखानः, किं०, पटिष्ठवाक् प्रगल्भवचाः सन्, आह स्माऽभाषतेति ॥ १६ ॥

यदाह स्म तदाह—

पयोजिनीं हंस इवाऽच्छपक्षभाक्
स गूर्जरत्रामधुनाऽधितिष्ठति ।
निशम्य तद्वाचमदम्भजृम्भितां
मुदं दधौ शाहिरहार्यधर्मधीः ॥ १७ ॥

पयोजिनीं हंस इव स गुरुः, गूर्जरत्रामधुनाऽधितिष्ठति अधुना गूर्जरदेशे स्थितोऽस्तीति । हंसः स च कीदृशः, अच्छपक्षभाक् हंसपक्षेऽच्छौ पक्षौ छदौ, गुरुपक्षे मातृपितृलक्षणौ पक्षौ भजतीति सः, अथ तद्वाचं किं०, अदम्भजृम्भितां नास्ति दम्भजृम्भितं कैतवविलसितं यस्यां तां निष्कपटां, निशम्य शाहिः किं०, अहार्या धर्मे धीर्यस्य सः, मुदं दधौ हर्षितवानित्यर्थः ॥ १७ ॥

वितीर्य पत्रं फुरमानसंज्ञकं
समानमाह्वानकृते कृती गुरोः ।
घनादरेणाऽऽत्मजनान् स मेवडा-
भिधानथ स्म प्रहिणोति भूपतिः ॥ १८ ॥

अथ स भूपतिरकब्बरपातिशाहिः, समानं सबहुमानं, गुरोराह्वानकृते आकारणाय, फुरमानसंज्ञं पत्रं वितीर्य दत्त्वा, घनादरेण बह्वाग्रहेण, मेवडाभिधान् आत्मजनान् स्वाङ्गावलगकसेवकान्, प्रहिणोति स्म प्रैषीत् प्रत्यकमिपुरस्थं श्रीशाहि-

बखानाख्यं नृपमुख्यम्, अथ सोऽपि ज्ञातोदन्तः श्रीगुरून् गन्धारबन्दिरे स्थितान् मत्वा तान् शाहिसेवकान् गुरुपार्श्वे प्राहिणोदिति शेषः ॥ १८ ॥

जातावतारा जगतां हिताय ते
मुनीश्वराः कल्पितकल्पपादपाः ।
हवं नरेशस्य निशम्य सादरं
तदाऽभवंस्तत्र विहर्तुमुत्सुकाः ॥ १९ ॥

तदा तच्छाहिफुरमानं वाचयित्वा, ते मुनीश्वरा गुरवः, किं०, जगतां हिताय जातावताराः, पुनः, कल्पिते कल्पपादपाः नरेशस्याऽकब्बरस्य, हवं आह्वानं, निशम्याऽऽकर्ण्य, तत्र विहर्तुं उत्सुका अभवन्, गन्धारबन्दिराच्चतुर्मासकपारणके इति शेषः ॥ १९ ॥

अथ काव्यकलापकेन फतेपुरागमनं वर्णयति—

पदे पदे प्रौढमहोत्सवोत्सुकै-
र्जनैः प्रदत्ताद्भुतमानसंपदः ।
पदे पदे स्वस्तिकमुक्तमौक्तिकै-
र्वधूजनैर्मण्डितमङ्गलालयः ॥ २० ॥

पदे पदे सत्वरसंमुखागतै-
र्धराधिपैः सूत्रितसुन्दरादराः ।
पदे पदे प्राप्तघनार्थसंचयैः
सदर्थिभिर्गीतमनोज्ञगीतयः ॥ २१ ॥

रजोभिरंह्युच्छलितैर्भुवस्तलं

विभूषयन्तो द्युसदामपि प्रियैः ।
महाव्रतिप्रीतिकलैर्जलैर्नभः-
सरित्प्रवाहा इव विश्वपावनाः ॥ २२ ॥

सदा समुल्लासभृतः सुपर्वभि-
स्तापं हरन्तो जगतां गुरूत्तमाः ।
क्रमादलञ्चक्रुरभङ्गवैभव
फतेपुरश्रीत्रिपुरारिमस्तकम् ॥ २३ ॥

अथ क्रमाद् गन्धारबन्दिराद् मार्गशीर्षासितसप्तम्यां पुष्पार्कयोगे विंशे रवियोगे राजयोगे च सति शुभे मुहूर्ते प्रशस्तशकुननिमित्तसञ्जातसद्विक्रमा गुरूत्तमाः किं०, पदे पदे स्थाने स्थाने वा पादन्यासरूपे पदे पदे वा, प्रौढमहोत्सवोत्सुकैर्महामहोत्सवकरणपरायणैः, जनैर्लोकैः, प्रदत्ताद्भुतमानसंपदः कृतबहुमानश्रियः, पुनः किं०, पदे पदे स्वस्तिकेषु मुक्तानि मौक्तिकानि यैस्तैः, वधूजनैर्नारीगणैः, मण्डिता मङ्गलालिर्येषां ते ॥२०॥ पुनः किं०, पदे पदे सत्वरं शीघ्रं संमुखागतैरभिमुखागतैः, धराधिपैर्नरेन्द्रैः, सूत्रितः कृतः सुन्दर आदरो येषां ते, पुनः किं०, पदे पदे प्राप्तो घनो महान् अर्थसंचयो धनसमूहो येस्तैः, सदर्थिभिर्गान्धर्वभट्टप्रभृतिभिरर्थिभिर्याचकैः, गीता मनोज्ञा गीतिः कीर्त्तिरूपा येषां ते ॥ २१ ॥ पुनः किं कुर्वन्तः, विभूषयन्तः, किं०, भुवस्तलं पृथ्वीतलं, कैः, अंह्र्युच्छलितैश्चरणोत्थै रजोभिः, किं०, द्युसदामपि देवानामपि, प्रियैः, पुनः किं०, विश्वपावनाः, क इवेत्याह—नभःसरित्प्रवाहा गङ्गाप्रवाहा इव जगत्पावित्र्यकारकाः, कैः, जलैः, किं०, द्युसदामपि प्रियैरिदं तुल्यं विशेषणम्, पुनः किं०, महाव्रतिनो महादेवस्य प्रीतेः

कला येभ्यस्तैः, रजःपक्षे महाव्रतिनां महामुनीनां प्रीतिकला येभ्यस्तैः ॥२२॥ पुनः किं० गुरूत्तमाः गङ्गाप्रवाहाश्च, सुपर्वभिः समुल्लासभृतः गुरुपक्षे सुपर्वभिः शोभनोत्सवैः, गङ्गाप्रवाहपक्षे सुपर्वभिर्देवैः, पुनः, तापं संतापं, हरन्तो जगतां जगद्वर्तिजनानां, क्रमेण गूर्जरदेशाद् मरुस्थलीदेशमध्ये भूत्वा विहरन्तः सन्तः, अभङ्गवैभवं फतेपुरश्रीत्रिपुरारेरीश्वरस्य मस्तकमलश्चक्रुरिति चतुर्णां व्याख्येति ॥ २३ ॥

त्रिभिः प्रवेशोत्सवं वर्णयति—

अथाङ्कहव्याशनभूपवत्सरे
त्रयोदशीवासर इन्दुवर्जिते ।
शुक्रे च मासे त्रिजगन्मनःसुख-
प्रदे प्रभाते त्रिदशेशमन्त्रिणि ॥ २४ ॥

दधत्सु शृङ्गारिसुहासिनीजन-
प्रणीतगीतैरतिमेदुरां मुदम् ।
ददत्सु दानं धनकाञ्चनाऽम्बरो-
र्मिकातुरङ्गद्विपमुख्यवस्तुनः ॥ २५ ॥

दुकूलदिव्याम्बररत्नकाञ्चना-
द्यलङ्कृतिस्तोममनोज्ञमूर्त्तिषु ।
जनेषु कुर्वत्सु महोत्सवान् बहून्
पुरे प्रवेशं विदधुर्दमीश्वराः ॥ २६ ॥

अथ दमीश्वरा गुरवः फतेपुरपुरे प्रवेशं विदधुरित्यन्वयः । कस्मिन्, अङ्का नव, हव्याशना अग्नयस्त्रयः, भूपा राजानः षोडश, एतेऽङ्का वामतो गत्या मीलिता यत्र

तत्र अङ्कहव्याशनभूपवत्सरे १६३९ वर्षे पुनः, त्रयोदशीवासरे किं०, इन्दुवर्जिते श्यामायां त्रयोदश्यामिति, पुनर्मासे, किं०, शुक्रे ज्येष्ठाख्ये, पुनः, प्रभाते प्रातर्वेलायां प्रथमयामे, पुनः, त्रिदशेशमन्त्रिणि गुरुवारे ॥ २४ ॥ पुनः, बहून् महोत्सवान् जनेषु कुर्वत्सु, जनेषु किं कुर्वत्सु, दधत्सु बिभ्रत्सु, कां, अतिमेदुरां मुदं हर्षं, कैरित्याह—शृङ्गारिसुहासिनीजनप्रणीतगीतैः शृङ्गारी शृङ्गारवान् यः सुहासिनीजनः सधववधूजनस्तेन प्रणीतानि यानि गीतानि तैः, पुनर्जनेषु किं०, दानं ददत्सु, कस्येत्याह—धनकाञ्चनाम्बरोर्मिकातुरङ्गद्विपमुख्यवस्तुनः, अत्र धनकाञ्चनाम्बरादिभ्यो द्विपदानं सर्वोत्तममभूतपूर्वत्वात् तत्तु मेडताद्रङ्गवासिना सा०—सदारङ्गाभिधानेन श्राद्धेन दत्तमिति॥२५॥ पुनर्जनेषु कीदृशेषु, दुकूलदिव्याम्बररत्नकाञ्चनाद्यलङ्कृतीनां पट्टकूलप्रवरवस्त्रमणिसुवर्णप्रमुखालङ्काराणां स्तोमेन समूहेन मनोज्ञा मूर्तयोऽङ्गानि येषां तेषु लोकेषु मिलितेषु, साडम्बरं श्रीगुरवः सीकरीद्रङ्गे प्रवेशं चक्रुरिति । इति त्रयाणां व्याख्या ॥ २६ ॥

विपक्षसंपत्तटिनीपयोधिना
नयाम्बुजोल्लाससहस्ररश्मिना ।
विधाय पूर्वं मिलनं महीभुजा
प्रतिश्रये नः प्रतिगन्तुमर्हति ॥ २७ ॥

समर्थनिर्ग्रन्थगृहस्थसार्थसत्-
परिच्छदोपासितपादपङ्कजाः ।
विचार्य चित्तान्तरिति व्रतीश्वरा
अकब्बरोर्वीश्वरसौधमभ्यगुः ॥ २८ ॥

महीभुजाऽकब्बरशाहिना, किं०, विपक्षसंपत्तटिनीपयोधिना वैरिलक्ष्मीनदीसमुद्रेण, पुनः किं०, नयाम्बुजोल्लाससहस्ररश्मिना न्यायनलिनविकासनसूर्येण सह सार्द्धं, पूर्वं प्राग्, मिलनं विधाय ततः पश्चान्नोऽस्माकं, प्रतिश्रये वसतौ, गन्तुमर्हतीति गमनं योग्यतामेतीति भावः ॥ २७ ॥ इति विचिन्त्य किं चक्रुस्तदग्रेतनवृत्तेनाह– इति चित्तान्तर्मनसि, विचार्य व्रतीश्वरा गुरवः, किं०, समर्था द्विधाऽपि श्रुतशरीरबलेन संपन्ना ये निर्ग्रन्था अधिकारात् समीपवर्त्तिनः सैद्धान्तिकशिरोमणिवाचकश्रीविमलहर्षगणिसकलाष्टावधानशतावधानाद्यनेकराजरञ्जनकलाकुमुदिनीचन्द्रवाचकश्रीशान्तिचन्द्रगणिपण्डितसहजसागरगणिपण्डितसिंहविमलगणिवक्तृत्वकवित्वकलाश्रीहेमाचार्यानुकारिप्रस्तुतकाव्यकारिपण्डितहेमविजयगणिवैयाकरणचूडामणिपण्डितलाभविजयगणिश्रीगुरुप्रधानधनविजयगणिप्रमुखाः साधवः, पुनर्गृहस्थाः श्रावका ये साधुश्रीथानसिङ्घसा०– मानसिंघसा०– कल्याणप्रमुखास्तेषां ये सार्थाः समूहास्तेषां सन् श्रेष्ठो विद्यमानो वा यः परिच्छदः परिवारस्तेन उपासितं सेवितं पादपङ्कजं येषां ते समर्थनिर्ग्रन्थगृहस्थसार्थसत्परिच्छदोपासितपादपङ्कजाः, श्रीहीरविजयसूरिपादा अकब्बरोर्वीश्वरसौधं शाहिसौधं, अभ्यगुः प्राप्तवन्त इति । इदमर्थतो युग्मम् ॥ २८ ॥

इमं समायान्तमदभ्रविभ्रमं
त्रयोदशर्षिप्रमुखैर्वृतं गुरुम् ।
अकब्बरः प्रेक्ष्य मुदं दधौतमां
शिखीव पाथोमुचमुन्नतं दिवि ॥ २९ ॥

इमं गुरुं किं०, अदभ्रविभ्रमं भूरिशोभं, पुनः किं०, त्रयोदश ये केचिदुक्ताः केचिच्चाऽनुक्ता ऋषिप्रमुखा मुनिमुख्याः “ प्रमुखं

प्रथमे मुख्ये" इति वचनात् तैस्त्रयोदशर्षिप्रमुखैः, वृतं परिकरितं, समायान्तं प्रेक्ष्य अकब्बरः शाहिः, मुदं दधौतमां अतिहर्षितवान्। दृष्टान्तमाह—यथा पाथोमुचं मेघं, दिव्याकाशे, उन्नतं प्रेक्ष्य शिखी मयूर इवेति ॥ २९ ॥

नृपोऽभिगच्छन् सुमनोमनोरमो
भाति स्म साक्षादिव वासवस्तदा ।
विधाय सुस्वागतमागतोचितं
मुदाऽनमस्यच्च गुरोः पदद्वयीम् ॥ ३० ॥

तदा गुरून् प्रति अभिगच्छन् संमुखं व्रजन्, नृपोऽकब्बरशाहिः, भाति स्मेत्यन्वयः । इवोत्प्रेक्ष्यते—साक्षाद्वासवः शक्र इव, किं०, सुमनोमनोरमः, नृपपक्षे सुमनसा शोभनचित्तेन मनोरमः, अथवा सुमनोभिः प्राज्ञैर्मनोरमस्तत्परिवृतत्वात्; शक्रपक्षे सुमनोभिः सुरैर्मनोरम इति, आगतोचितं सुस्वागतमित्यादिप्रश्नं विधाय, गुरोः श्रीहीरविजयसूरेः, पदद्वयीं मुदाऽनमस्यत् प्राणमत् ॥ ३० ॥

शाहेर्नमतो गुरुः किं बभाणेत्याह—

अजय्यचेतोजतमोभवान्तकृद्
वृषाङ्कवैकुण्ठविरञ्चिसन्निभः ।
नृपाय कल्याणलतापयोमुचा
तदाऽभ्यनन्दत् सुकृताशिषा गुरुः ॥ ३१ ॥

गुरुः किं०, अजय्योऽजेयो यश्चेतोजः स्मरस्तथा तमः पापं भवश्च संसारस्तेषां चेतोजतमोभवानां अन्तकृद्विनाशकारी, अत एव वृषाङ्कवैकुण्ठविरञ्चिसंनिभः हरहरिहिरण्यगर्भतुल्य-

स्तथाहि—चेतोजान्तकृत्त्वेन वृषाङ्कः; तमसो गुणविशेषस्य राहोर्वा अन्तकृत्त्वेन वैकुण्ठो विष्णुः, भवान्तकृत्त्वेन विरञ्चितुल्यश्चेतिः ईदृग्गुरुस्तदा तन्नमनावसरे, नृपायाऽकब्बराय, कल्याणलता-पयोमुचा मङ्गलवल्लिजलधरेण, सुकृताशिषा धर्मलाभरूपाशीर्वा-देन, अभ्यनन्दत् तोषयामासेत्यर्थः ॥ ३१ ॥

त्रयोऽप्यथ स्वात्मभुवो भुवोमिल-
ल्ललाटपट्टाः सुखिताखिलप्रजाः ।
तदेरिताः क्ष्मापतिना गुरूत्तमान्
हिमोष्णवर्षासमया इवाऽनमन् ॥ ३२ ॥

अथ त्रयोऽपि स्वात्मभुवः निजनन्दनाः शेखूजीपाहडी-दानीआरनामानः कुमाराः, किं०, भुवः पृथ्व्या मिलन् ललाट-पट्टो येषां ते, पुनः किं०, सुखिताः सुखीकृता अखिलाः प्रजा लोका यैस्ते, पुनः किं०, क्ष्मापतिनाऽकब्बरेण, ईरिताः सन्तः, गुरूत्तमान्, हिमोष्णवर्षासमयाः शीतकालग्रीष्मकालवर्षाकाला-इव, किं०, सुखिता अखिलप्रजाः स्वस्वगुणैर्यैस्ते, त्रयोऽपि अन-मन् प्रणताः, इवेत्युत्प्रेक्षा ॥ ३२ ॥

त्रयोऽपि शेखूप्रमुखा नृपाङ्गजा-
स्त्रिलोकलोका इव पुण्यवृत्तयः ।
तदा गुरोर्दर्शनतोऽतिशायिनीं
मुदं समीयुर्वसुधासुधाञ्जनात् ॥ ३३ ॥

तदा तत्र क्षणे, गुरोर्दर्शनतः, किं०, वसुधाया भूमे-रुपचारात्तद्वासिनो जनस्य सुधाञ्जनादमृताञ्जनभूतात्, ते शे-खूप्रमुखा नृपाङ्गजाः शाहिसूनवस्त्रयोऽपि, इवोत्प्रेक्ष्यते—त्रिलो-कलोकाः स्वर्गमर्त्यपाताला इव, पुण्यवृत्तयः पवित्राचाराः,

अतिशायिनीं मुदं समीयुर्महाहर्षुला जाता इति ॥ ३३ ॥

तदा च तेषां क्षितिपात्मजन्मनां
गुरुस्त्रयाणामपि पुण्यतेजसाम् ।
वृषाशिषं द्राग् व्यतरद् हुतिं हवि-
र्भुजां द्विजन्मेव महःप्रदायिनीम् ॥ ३४ ॥

तदा तेषां क्षितिपात्मजन्मनां पातिशाहिपुत्राणां, त्रयाणामपि, किं०, पुण्यतेजसां पवित्ररुचां, तदा गुरुर्वृषाशिषं धर्मलाभं, व्यतरद् दत्तवान् । दृष्टान्तमाह—यथा द्विजन्मा ब्राह्मणः, हविर्भुजां वह्नीनां, हुतिं किं०, महःप्रदायिनीं तेजःप्रदायिनीं, वृषाशिषं किं०, महप्रदायिनीं उत्सवप्रदायिनीं, वितरति ॥ ३४ ॥

चरित्रमाहारविहारसंलया-
श्रयोपवासासनपानगोचरम् ।
अथ स्वयं प्रेषितपूरुषाननाद्
निशम्य सूरेर्मुमुदे महीपतिः ॥ ३५ ॥

अथ स्वयं प्रेषिताः पूर्वं ये मेवडाभिधाना गुरूणामाकारणाय प्रेषितास्तेषामाननाद् मुखात्, सूरेश्चरित्रं वृत्तं, किं०, आहारविहारसंलयाश्रयोपवासासनपानगोचरं आहारो नित्यैकभक्तरूपः, विहारः सूर्योदये सत्येव पादचाररूपः, संलयस्त्रियामायास्तृतीये यामे निद्राकरणरूपः, आश्रयो याचितवसतिवसनरूपः, उपवासा एकस्मिन् मासि जघन्यतः षडुपवासकरणरूपाः, आसनं मासाष्टके भूमावेवोपवेशनरूपं, पानं तप्तस्यैव पानीयस्येति गोचरं एतद्विषयं, गुरुवृत्तं निशम्य, महीपतिः शाहिः, मुमुदे हर्षमधात् ॥ ३५ ॥

अथैकतः संयमिलोकनायकौ

स्थितौ व्यभातामभितः प्रकाशकौ ।

विधेर्वशात् संगमितौ क्षमाधरौ

सुरारिजिच्छैलहिमालयाविव ॥ ३६ ॥

अथैकतो विजने सभामण्डपदेशे, संयमिलोकनायकौ संयमिनायकलोकनायकौ गुरुभूपौ, स्थितौ पीठोपविष्टौ, पुनः, अभितः सर्वतः, प्रकाशकौ व्यभातां भातः स्मेति । इवोत्प्रेक्ष्येते—विधेर्वशाद् दैववशात्, सुरारिजिच्छैलहिमालयौ संगमितौ मेरुहिमाचलौ, किं०, मिलितौ; किं०, क्षमाधरौ एकत्र क्षमाश्रमणत्वात् क्षमा क्षान्तिः, अन्यत्र क्षमा पृथ्वी पृथिवीपतित्वादिति ॥३६॥

विशारदव्रातवृतस्य धर्मिणो

गुरोः पुरःस्थः स्थिरदृक् स्थिरेश्वरः ।

अपृच्छदच्छं परमात्मनः प्रभोः

स्वरूपमास्तिक्यसमं सविस्तरम् ॥ ३७ ॥

स्थिरा पृथिवी तस्या ईश्वरः स्थिरेश्वरो राजाऽकब्बरशाहिः, किं०, स्थिरदृक् निश्चलदृष्टिः, पुनर्गुरोः पुरःस्थः, गुरोः किं०, विशारदव्रातवृतस्य पण्डितपटलपरिकरितस्य, पुनः, धर्मिणो यतिधर्मधारिणः, परमात्मनः प्रभोः परमेश्वरस्य, स्वरूपं अपृच्छत् अच्छं निर्मलमिति, क्रियाविशेषणं वा, पुनः किं०, सविस्तरं, क्रियाविशेषणं वा; पुनः कथं आस्तिक्येन श्रद्धया तुल्यमित्यास्तिक्यसमम् ॥ ३७ ॥

पुरातनाचार्यवरैर्निरूपितं

न्यरूपि पूज्यैस्तदशेषमुत्तमम् ।

पिबन् श्रुतिभ्यां तदतुष्यदुर्वरा-

पतिश्च वीणाक्वणितं फणीव सः ॥ ३८ ॥

तत्परमात्मनः स्वरूपं, किं०, अशेषं समस्तं, पुनः, उत्तम-मुत्कृष्टं, यथा पुरातनाचार्यवरैः प्राचीनानूचानेन्द्रैः श्रीसिद्धसेनदिवाकरकलिकालसर्वज्ञबिरुदधारकश्रीहेमाचार्यादिभिः श्री-विक्रमार्कश्रीकुमारपालादीनां पुरो निरूपितं तथा तैरपि पूज्यै-र्न्यरूपि प्रोक्तमिति, तत्स्वरूपं श्रुतिभ्यां कर्णाभ्यां, पिबन् अत्यादरेण शृण्वन्, उर्वरापतिः शाहिः, अतुष्यत् तुतोष । दृष्टान्त-मत्राह—यथा वीणाक्वणितं वल्लकीनादं, शृण्वन् फणी भुजङ्ग-इवेति ॥ ३८ ॥

निशम्य सम्यक् प्रविचार्य चात्मना

यथास्थितं तन्मुदमाप भूपतिः ।

मनःसुखामुक्तिमवाप्य धीमतां

न कस्य हर्षः खलु जायतेतमाम् ? ॥३९॥

भूपतिस्तद् यथास्थितं गुरूदितं, निशम्य श्रुत्वा, च पुनः, आत्मना स्वयं, प्रविचार्य मुदमाप हर्षं प्राप्तवान्, खलु निश्चितं, धीमतां पण्डितानां, उक्तिं वाणीं, कीदृशीं, मनःसुखां चेतःसौ-ख्यकारिणीं, अवाप्य कस्य सकर्णस्य पुंसो हर्षो न जायते-तमां न भवतितराम्, अपि तु सर्वस्याऽपि जायते इति ॥३९॥

अभूद् निजे धामनि वाङ्मयं पुरा

द्विधाऽऽत्म जैनं च यदैश्वरं च यत् ।

गुरोस्तदुर्वीपतिराश्वदर्शयद्

वदन् वरीयो विनयाञ्चितं वचः ॥ ४० ॥

निजे धामनि शाहेः सद्मनि, पुरा पूर्वं, यद् वाङ्मयं शास्त्रं, किं०, जैनं जिनागमरूपमङ्गोपाङ्गमूलसूत्रादि, च पुनः, ऐश्वरं यत् शिवशासनसंबन्धि भागवतभारतपुराणरामायणादि, इति द्विधात्म द्विप्रकारकं नागपुरीयतपापक्षीयपद्मसुन्दरश्वेताम्बरसत्कं, अभूत् तत् उर्वीपतिः शाहिः, गुरोरदर्शयत् गुरोः पुरः प्राभृतीकृतवान्, पुनर्विनयाश्चितं वचो वदन् यूयं पुस्तकमिदं गृह्णीतेति वाक्यं ब्रुवन्, आशु शीघ्रं, तदा दर्शयामासेति भावः ॥ ४० ॥

विदन्नदस्तद्गुरुराददे च ना-
धुनैतदादानमकीर्तिकारि नः ।
नृपो विशेषाद् मुमुदे निरीहतां
निरीक्ष्य सूरेरतिशायिनीमिमाम् ॥४१॥

अधुनेदानीम्, एतदादानं पुस्तकग्रहणमपि, नोऽस्माकं, अकीर्तिकारि राढाकृद् नेति, अदो विदन् इति जानन्, गुरुस्तद् नाऽऽददे न गृहीतवान्, ततः कारणादिमां अतिशायिनीं निरीहतां पुस्तकस्यापि मुक्तिरूपां निःस्पृहतां, निरीक्ष्य नृपो विशेषाद् मुमुदेऽतिमुदितोऽभूद्; अहो ! एते निःस्पृहा यदि पुस्तकमपि न गृह्णन्ति तदा मया दीयमानममानधनकाञ्चनकाश्यपीप्रमुखं कथं गृह्णन्तीति मुन्निदानम् ॥ ४१ ॥

आगृह्य भूयोऽपि ददौ नृपस्तदा
तद्भारतीगेहमिवापरं परम् ।
अकब्बरीयाभिधया च कोशगं
तत्पुस्तकं सर्वमचीकरद् गुरुः ॥ ४२ ॥

तदा तस्मिन् पुस्तके गुरुणाऽगृहीते सति, भूयो-

ऽपि पुनरपि, आगृह्य निर्बन्धं विधाय, नृपस्तद्भारतीगेहमिव अपरं सरस्वतीगृहमिव, परं प्रकृष्टं केवलं वा, ददौ दत्तवान्, गुरुर्निरीहः सन् यच्चकार तदुत्तरार्धेनाह—गुरुस्तत्पुस्तकं सर्वं द्विप्रकारमपि, अकब्बरीयाभिधया अकब्बरशाहिनाम्ना, कोशगं भाण्डागारगतं, अचीकरत् कारयामास, आगराख्ये नगरे भाण्डागारे स्थापितवानिति शेषः ॥ ४२ ॥

नृपेण दत्त्वा बहुमानमानम-
न्महीमहेन्द्रव्रजसेवितांह्रिणा ।
गुरुर्विसृष्टो निरगात् तदोकसः
पयोधराभ्रादिव घर्मदीधितिः ॥ ४३ ॥

गुरुर्नृपेण बहुमानं दत्त्वा विसृष्टोऽनुज्ञातः सन्, तदोकसस्तद्गृहाद्, निरगादित्यन्वयः । नृपेण किं०, आनमन्महीमहेन्द्रव्रजसेवितांह्रिणा प्रणमद्भूपालजालजुष्टचरणेन । दृष्टान्तमाह—इव यथा, पयोधराभ्राद् मेघवार्दलाद्, घर्मदीधितिः सूर्य इवेति ॥ ४३ ॥

विलोक्य मेने नृपगोपुरे पुरः
समेतमेतं गुरुमास्तिकैरिति ।
किमन्तिमार्हज्जनिराशितोऽद्य दु-
र्ग्रहोऽवरूढः खलु भस्मनामकः ॥ ४४ ॥

नृपगोपुरे राजद्वारप्रतोल्यां, एतं गुरुं पुरः समेतं विलोक्य आस्तिकैरिति मेने इत्यचिन्ति । तदेवाह—खलु इति निश्चयार्थे, अद्य किं अन्तिमार्हज्जनिराशितः श्रीमहावीरजन्मराशेः, भस्मनामको दुर्ग्रहः अवरूढ इति उत्तीर्णो मेने ॥ ४४ ॥

धराधिपाज्ञागतभूरितूरसत्-

स्वनैर्भवद्भिर्बधिरीकृताम्बरे ।

ददद्भिरर्थिप्रकरेभ्य ईप्सितां

श्रियं महेभ्यैरतिचारुचत्वरे ॥ ४५ ॥

महोत्सवे गायनगीतगौरवे

प्रभूतपद्माढयमलञ्चकार तम् ।

विमानमानर्द्धिमुपाश्रयं गुरुः

स मानसौका इव मानसं सरः ॥ ४६ ॥

धराधिपस्य अकब्बरस्याऽऽज्ञया आगतानि भूरीणि यानि तूराणि वादित्राणि तेषां सत्स्वनैः शोभनध्वानैः, बधिरीकृतमम्बरमाकाशं यस्मिन् तस्मिन्, महोत्सवे जायमाने सतीतिशेषः । पुनर्महोत्सवे कीदृशे, अर्थिप्रकरेभ्यो याचकव्रजेभ्यः, ईप्सितां वाञ्छितां, श्रियं ददद्भिर्महेभ्यैरतिचारूणि मनोहराणि चत्वराणि यत्र तत्र ॥ ४५ ॥ पुनर्महोत्सवे किं०, गायनगीतानां गौरवं यत्र तत्र, गुरुस्तमुपाश्रयं अलञ्चकार, किं०, प्रभूतपद्माढ्यं भूरिशोभाढ्यं, अन्यत्र भूरिपङ्कजाढ्यं, पुनः, विमानमाना स्वर्भवनप्रमाणा ऋद्धिर्यत्र तं, दृष्टान्तमाह—मानसौका राजहंस इव, मानसाख्यं सर इवेति यथा । इति युग्मव्याख्या ॥ ४६ ॥

दिनान्युषित्वा कतिचित् फतेपुरे

प्रजाप्रभुप्रेमपयोनिधौ विधुः ।

स आगराख्ये नगरे गरीयसि

क्रमाच्चतुर्मासकमासितो गुरुः ॥ ४७ ॥

स गुरुः फतेपुरे कतिचिद् दिनानि उषित्वा स्थित्वा, ततो योजनत्रिकान्तरिते आगराख्ये नगरे शाहिसाम्राज्यराजधानीरूपे, पुनः, गरीयसि महति, चतुर्मासकं आसितः स्थितः, गुरुः किं०, प्रजाप्रभुरकब्बरस्तत्प्रेमपयोनिधौ विधुश्चन्द्रस्तदुल्लासवृद्धिकारित्वादिति ॥ ४७ ॥

निरन्तरं श्रीगुरुवाज्रिणो व्यधात्

प्रशंसनं शाहिरिति स्वपर्षदि ।

क्रियासु वाक्येषु च तुल्यमीदृशं

न चान्यमद्राक्षमहं मुनिं क्वचित् ॥ ४८ ॥

श्रीगुरुवज्रिणः सूरीन्द्रस्य, शाहिः स्वपर्षदि इति प्रशंसां व्यधात्, इति कथं तदेवोत्तरार्धेनाह—क्रियासु धर्मकर्त्तव्यरूपासु, वाक्येषु सत्यभाषणरूपेषु, तुल्यं ईदृशं अन्यं मुनिं व्रतिनं, अहं नाऽद्राक्षं नाऽपश्यमिति ॥ ४८ ॥

अथो गुरूणां पुरि तत्र तस्थुषां

निशम्य शाहिर्महिमानमद्भुतम् ।

दधद् मुदं पर्युषणादिनाऽभय-

प्रदेशनाख्यान् पटहानवीवदत् ॥ ४९ ॥

तत्र पुरि आगराख्ये, तस्थुषां तेषां गुरूणां, अद्भुतं महिमानं निशम्य मुदं दधत् शाहिः पर्युषणादिनाऽभयप्रदेशनाख्यान् संवत्सरपर्वसम्बन्धिवासरामारिप्रवर्त्तकान् पटहान् अवीवदत् सेवकैर्वादयामास, पर्युषणापर्वसत्कामष्टाहिकां यावज्जीवामारिं कारयामासेति भावार्थः ॥ ४९ ॥

विधाय शौरीपुरपुर्यथो यदू-
द्वहस्य यात्रामतिमात्रसंघभृत् ।
जिनप्रतिष्ठां प्रचकार पारणे
पुरेऽथ तत्रैव पवित्रदृग् गुरुः ॥ ५० ॥

अथो गुरुः, किं०, अतिमात्रसंघभृद् भूरितरसंघसंयुतः सन्, चतुर्मासकपारणे जाते सति शौर्यपुरे कुशावर्त्तदेशस्थे श्रीनेमिजन्मभूमौ यदूद्वहस्य नेमेः, यात्रां विधाय, पुनस्तत्राऽऽगत्य जिनप्रतिष्ठां श्रीचिंतामणिपार्श्वनाथप्रतिष्ठां, कृतवान् ॥ ५० ॥

उपेयिवांसोऽथ पुनः फतेपुरं
गुरुप्रबर्हाः स्वपरिच्छदान्विताः ।
तमो हरन्तः सुरराजदिक्शिलो-
च्चयोच्चमूर्धानमिवाब्जबन्धवः ॥ ५१ ॥

अथोग्रसेनपुरात् पुनः गुरुप्रबर्हा गुरुमुख्याः, स्वपरिच्छदेन पूर्वोक्तपण्डितपरिकरेणाऽन्विताः, अब्जबन्धवः सूर्या इव तमो हरन्तः तमः पापं ध्वान्तं चेति हरन्तो दूरीकुर्वन्तः सन्तः, सुरराजदिक्शिलोच्चयोच्चमूर्धानं पूर्वपर्वतशृङ्गमिव, फतेपुरं शाहिनाऽलङ्कृतं सीकरीतिनामकं नगरं उपेयिवांसः प्राप्ता इति ॥ ५१ ॥

निशम्य सूरिं पुनरागतं पुरे
फतेपुरे द्राग् मिलनोत्सुकोऽच्छदृग् ।
बभूव भूपः सुकृताभिलाषुको
गुरुर्गरिष्ठोऽप्यजनिष्ट तन्मनाः ॥ ५२ ॥

पुनः फतेपुरे पुरे, सूरिं श्रीहीरसूरिं, आगतं निशम्य भूपः किं०, सुकृताभिलाषुकः पुण्यार्थी, पुनः किं०, अच्छदृक् निर्मलमतिः, गुरोर्मिलनोत्सुको बभूव गरिष्ठो गुरुरपि तन्मनास्तन्मिलनोत्सुकः, अजनिष्ट जात इति ॥ ५२ ॥

अथ प्रभूतप्रातिभाढ्यपण्डित-

व्रतिव्रजालङ्कृतसंनिधिः सुधीः ।

अगच्छदत्यच्छमनाः स गच्छराड्

धराधिभूधाम निकामवामदृक् ॥ ५३ ॥

अथ शाहिनाऽऽकारितः सन् स गच्छराट्, किं०, प्रभूतप्रतिभाढ्या महामतिमन्तो ये पण्डिता व्रतिनो गीतार्थमुनयस्तेषां व्रजेनाऽलङ्कृतो भूषितः संनिधिः समीपं यस्य सः, एतावताऽन्यान् मुनीनुपाश्रये संस्थाप्य केवलं कोविदैरेव परिवृतः, पुनः किं०, अत्यच्छमनाः प्रसन्नचेताः, पुनः किं०, निकामं प्रकामं वामा मनोज्ञा दृग् यस्य चित्तोत्साहेन हसितनयन इति, धराधिभूधाम राजेन्द्रगृहं, अगच्छद् गतवानिति ॥ ५३ ॥

जनाक्षिनीलोत्पलपङ्क्तिकान्तिकृद्

दयोदधेः वृद्धिकरः कलानिधिः ।

सूरेण राज्ञा ददृशे प्रमोदकृत्

स सप्ततिश्चन्द्र इवर्षिभिर्युतः ॥ ५४ ॥

जनाक्षिनीलोत्पलपङ्क्तिकान्तिकृद् लोकनयनकुवलयश्रेणिशोभाकरः तद्विस्मेरताकरणात्, पुनः, दयोदधेः कृपासमुद्रस्य, वृद्धिकरः तदुल्लासित्वात्, पुनः, कलानिधिरिति प्रतीतं चन्द्र इव, स गुरुः, सूरेण सूर्येण, गुरुपक्षे सुभटेन राज्ञाऽनेन शाहिना, चन्द्रपक्षे सूरेण ग्रहेण ददृशे, किं०, सप्तभिः ऋषिभिः

युतस्तदानीं स्थानकसप्तकस्य सद्भावात्, चन्द्रपक्षेऽपि सप्तर्षिभिर्युतः इति, प्रमोदकृदिति विशेषणं सूर्यस्य चन्द्रमित्रत्वेन न्याय्यमिति "चन्द्रस्याऽर्कबुधौ मित्रे" इति ज्योतिःशास्त्रवचनात् ॥५४॥

सदस्सदुल्लासविलासकोविदै-
र्वचोभिराचार्यसभाशिरोमणेः ।
गुरोर्मुदं प्रापदपापदृग् नृपः
प्रसेनजित्सूनुरिवान्तिमाऽर्हतः ॥ ५५ ॥

नृपः शाहिः, किं०, अपापदृक् निष्पापमतिः निष्पापनेत्रो वा, आचार्यसभाशिरोमणेः सूरिपर्षच्चूडामणेः, गुरोर्वचोभिः सदसोऽर्थाद् राजसभायाः सदुल्लासः शोभनोल्लासस्तद्विलासे कोविदैः निपुणैः, मुदं प्रापत् । कः कस्येवेत्याह—अन्तिमार्हतो महावीरस्य, वचोभिः प्रसेनजित्सूनुः श्रेणिक इव, इति दृष्टान्तोत्प्रेक्षे ॥ ५५ ॥

गुरोर्गिराऽथावनिजानिरब्जिनी-
प्रियप्रमाहःफुरमानपत्रकम् ।
समस्तजीवाभयदायि तत्क्षणा-
दलीलिखत् स्वाखिलमण्डलेष्वऽपि ॥ ५६ ॥

अथ गुरोर्गिरा अवनिजानिः शाहिः, अब्जनीप्रियप्रमाहःफुरमानपत्रकं द्वादशदिवसानां फुरमानपत्रं, किं०, समस्तजीवाभयदायि सर्वजन्तुभयनिवृत्तिकारि, तत्क्षणाद् गुरुवाक्याकर्णनादनन्तरमेव, अलीलिखद् लेखयामास । केष्वित्याह—स्वाखिलमण्डलेष्वऽपि निजाज्ञावर्तिषु सकलेष्वपि देशेषु, मेवडाख्यकिङ्करैः प्रतिदेशं प्रैषीच्चापिशब्दादिति गम्यम् ॥ ५६ ॥

अमूमुचद् गुप्तिगृहाच्च बन्दिनो

विहङ्गवृन्दं दृढपञ्जरात् पुनः ।
निशानिबद्धान् मधुपानिवाऽम्बुजो-
दरादुदारोऽम्बुजिनीजनिः स्फुरन् ॥ ५७ ॥

च पुनः, गुप्तिगृहात् कारागारात्, बन्दिनो नियन्त्रितनरान्, अमूमुचत् शाहिरिति, गुरुगिरेति गम्यम्; पुनः, दृढपञ्जराद् विहङ्गवृन्दं अमूमुचत्। दृष्टान्तमाह—इव यथा, अम्बुजोदरात् पद्ममध्यात्, निशानिबद्धान् रात्रिबद्धान्, मधुपान् भृङ्गान्, अम्बुजिनीजनिरिव रविर्यथेति ॥ ५७ ॥

मदाधिपत्यं भुवि यावदस्त्यदो
न हन्ति कोऽप्यत्र झषादिदेहिनः ।
वदन्निति क्षोणिपतिः पुरो गुरो-
रुपप्रदानेऽकृत डाबरं सरः ॥ ५८ ॥

भुवि भूमौ, अदो मदाधिपत्यमेतद् मत्साम्राज्यं, यावदस्ति वर्तते, तावदत्र कोऽपि झषादिदेहिनो मीनमकरशिशुमारकूर्मकुलीरादिप्राणिनो जलचरविशेषान्, न हन्ति इति क्षोणिपतिरकब्बरः, गुरोः पुरो वदन् डाबरं नाम सरोवरं सीकरीसमीपस्थं योजनत्रयीप्रमाणं नैकलक्षजालजालपतन्मत्स्यसंहारसंजायमानामानधनागममपि, उपप्रदानेऽकृत ढौकनीकृतवानित्यर्थः ॥ ५८ ॥

नभोंऽशुनेवातिविभासुरं जगत्
सदाऽमुना श्रीगुरुणेति जल्पता ।
अतिप्रभूताद्भुतमानदानत-
स्तदाऽयमुच्चैः सदकारि भूभुजा ॥ ५९ ॥

अंशुना सूर्येण, नभ इव, अमुना श्रीगुरुणा, जगद् विश्वं, अतिविभासुरं कृतमिति शेषः, इति जल्पता भूभुजा अति प्रभूतमतिशयेन बहु पुनरद्भुतमाश्चर्यकारि यन्मानं तस्य दानतः, तदा तत्र क्षणे, अयं गुरुः, उच्चैः सदकारि सच्चक्रे ॥ ५९ ॥

अथो चतुर्मासकमुल्लसत्सुखे
फतेपुरे दत्तजयोत्सवे गुरुः ।
निरस्तमन्युर्गणभृद् महाव्रती
हरः शिवाया मनसीव तस्थिवान् ॥ ६० ॥

अथो गुरुः उल्लसत्सुखे दीप्तिमत्साते, फतेपुरे, पुनः किं०, दत्तो जयोत्सवोऽकब्बरशाहेः श्रीगुरोश्च येन तस्मिन्, शिवायाः पार्वत्याः, मनसि किं०, दत्तजयोत्सवे दत्तो जयायास्तत्सख्या-उत्सवो येन तत्र, हर इव, किं०, निरस्तो गुरुपक्षे मन्युः क्रोधो येन, हरपक्षे मन्युर्यागो येन, स हि मखध्वंसीति श्रुतेः; पुनः किं०, गुरुपक्षे गणं गच्छं बिभर्तीति, हरपक्षे "प्रमथाः पार्षदा गणाः" तान् बिभर्तीति गणभृत्, पुनः किं०, महाव्रती गुरुश्च हरश्चेति प्रतीतं, चतुर्मासकं तत्र तस्थिवान् स्थित इति ॥ ६० ॥

अथ छन्दःपरावृत्त्या सर्गमुपसंहरति—

अरिधरणिपतिस्त्रीदृग्जलासारधारा-
निकरकरणवर्षोत्कर्षखड्गाग्रधारे ।
लसति सति हुमाऊनन्दने राज्ञि तत्र
स्थितिमकृत कृतर्द्धि ज्यायसीं सूरिराजः ॥ ६१ ॥

तत्र सीकरीनगरे, हुमाऊनन्दने राज्ञि शाहिश्रीमदकब्बरे, लसति सति, किं०, अरिधरणिपतिस्त्रीणां वैरिराजयो-

षितां यो दृग्जलासारधारानिकरो नयननीरवेगवद्वर्षणधारासमूहस्तत्करणे तदुत्पादने वर्षोत्कर्ष इव वर्षाकालप्रकर्ष इव खड्गाग्रधारा यस्य तस्मिन् अरिधरणिपतिस्त्रीदृग्जलासारधारानिकरकरणवर्षोत्कर्षखड्गाग्रधारे, सूरिराजः ज्यायसीं ज्येष्ठस्थितिं, किं०, कृता ऋद्धिः यशःसमृद्धिरूपा यया तां, अकृत अकरोत् ॥ ६१ ॥

कमलकुवलयानां कोकघूकाङ्गनाना-
महिममहसि पूर्वे पर्वते प्रापुषीव ।
स्थितवति पुरि तस्यामोजसां धाम्नि सूरि-
द्युसदि सदसतां द्राग् भूत्यभूती अभूताम् ॥ ६२ ॥

ओजसां बलानां तेजसां वा, धाम्नि गेहे, सूरिद्युसदि सूरिदेवे, तस्यां पुरि सीकरीनाम्न्यां, स्थितवति सति, सदसतां हिताऽहितजनानां, भूत्यभूती संपदाऽऽपदे, यथाक्रमं अभूतां बभूवतुरित्यन्वयः । दृष्टान्तेन द्रढयति—पूर्वे पर्वते उदयाचले, अहिममहसि सूर्ये, प्रापुषि सति यथा कमलकुवलयानां पङ्कजोत्पलानां, भूत्यभूती स्यातां—कमलानां स्मेरतारूपा श्रीः, कुवलयानां च म्लानिरूपाऽश्रीः; पुनः कोकघूकाङ्गनानां यथा भूत्यभूती स्यातां—कोकाङ्गनानां चक्रवाकस्त्रीणां तद्वल्लभसंगमादिष्टापत्तिरूपा श्रीः, घूकाङ्गनानां चाऽन्धत्वाऽऽगमादनिष्टापत्तिरूपाऽश्रीश्चेति ॥ ६२ ॥

कारुण्याम्भोनिधिमधि पतञ्चित्तवृत्त्यण्डजेन
स्फूर्जन्नीतिस्मितनयनयाऽऽश्लिष्टवक्षःस्थलेन ।
नित्यं नीतो हृदयपदवीं श्रीहमाऊसुतेन
द्रङ्गे तत्र स्थितिमधिगतो हीरसूरिः श्रिये वः ॥ ६३ ॥

श्रीहमाऊसुतेन अकब्बरशाहिना, किं०, कारुण्याम्भोनिधिं करुणारसार्णवं, अधि लक्षीकृत्य, पतच्चित्तवृत्तिरेव अण्डजो मत्स्यो यस्य तेन दयोदधिनिमग्नमनोमीनेनेत्यर्थः; पुनः किं०, स्फूर्जन्नीतिस्मितनयनया चञ्चन्न्यायप्रवृत्तिकामिन्या आश्लिष्टमालिङ्गितं वक्षःस्थलं यस्य तेन, हृदयपदवीं नीतो मनसि स्थापितः, हीरसूरिस्तत्र द्रङ्गे फतेपुरे, स्थितिमधिगतश्चतुर्मासीमासीनः, वो युष्माकं, श्रिये संपदे, स्तादिति शेषः ॥६३॥

अत्र सर्गे भूम्ना वंशस्थं नाम च्छन्दः "जतौ तु वंशस्थमुदीरितं जरौ" इति लक्षणात् ; कुत्राऽप्युपजातिरपि । अन्त्ये वृत्तत्रये द्वे वृत्ते मालिनीच्छन्दसा, तल्लक्षणं तूक्तपूर्वम् ; तृतीयं तु मन्दाक्रान्तावृत्तम्, तल्लक्षणं यथा—मन्दाक्रान्ता जलधिषडगैर्म्भौ नतो ताद् गुरू चेत्" इति ।

. . . . . . . . . . . . . . . . . . . . . . . . .

इतीति सर्वं सुगमम् ।

इति सुविहितसभासार्वभौमसमानसकलपण्डितमण्डलीमौलिमौलीयमानपण्डितश्रीकमलविजयगणिसुशिष्यमुख्यपण्डितपुरन्दरप्रख्यपण्डितश्रीविद्याविजयगणिविनेयवाचकगुणविजयगणिविरचितायां विजयप्रदीपिकाभिधानधारिकायां सुखावबोधिकायां श्रीविजयप्रशस्तिमहाकाव्यटीकायां नवमः सर्गोऽर्थतः समर्थितः ।



अर्हम्

# अथ दशमः सर्गः ।

अथ दशमः सर्गः प्रारभ्यते—

आचार्यवर्यो विजहार पत्तना-

दन्यत्र धात्रीषु पवित्रपद्धतिः ।

भृङ्गा इवामोदनिमग्नमानसा-

स्तिष्ठन्ति नैकत्र चरित्रिणो यतः ॥ १ ॥

आचार्यवर्योऽष्टमसर्गव्यावर्णितस्वरूपोऽनूचानमुख्यः श्रीविजयसेनसूरिः, किं०, पवित्रा पद्धतिः संयमप्रवृत्तिरूपा यस्य सः, पत्तनाद् नगराद् अन्यत्र धात्रीषु गूर्जरत्रादेश एवान्यग्रामनगरावनीषु, विजहार विहृतवान्; यतः कारणात्, चरित्रिणो भृङ्गा इव, किं०, आमोदे निमग्नं मानसं येषां ते, चरित्रिणः किं०, आमोदनिमग्नमानसा हर्षमग्नमानसाः, भृङ्गाः किं०, आमोदे गन्धे मग्नं मनो येषां ते; एकत्र स्थाने, न तिष्ठन्तीति ॥१॥

वक्षोजवेदर्तुसुधांशुसंमिते

वर्षे सुखोत्कर्षिणि हर्षवर्षिणि ।

लोकेहितायाऽर्क इव प्रतापभृत्

सूरिः स एतः पुनरेव पत्तने ॥ २ ॥

वक्षोजौ स्तनौ द्वौ, वेदा ऋग्यजुःसामाऽथर्वणाख्याश्चत्वारः, ऋतवो हिमशिशिरवसन्तग्रीष्मवर्षाशरत्संज्ञकाः षट्, सुधांशुश्चन्द्रमा एकः, तेनैतैरङ्कैर्वामगतिविन्यस्तैः संमिते वर्षे

१६४२इतिसंख्ये संवत्सरे, किं०, सुखस्योत्कर्षो यस्मिन् तस्मिन् सुखोत्कर्षिणि, पुनः, हर्षवर्षिणि प्रमोददायिनि, लोकेहिताय लोकानामीहिताय वाञ्छितपूरणाय, अथवा लोके लोकविषये, हिताया‍ऽऽनुकूल्याय, स सूरिराचार्यः, पुनः चतुर्मासकद्वयादनन्तरं, तृतीयं चतुर्मासकं कर्तुकामः पत्तने नगरे, पुनरेतः प्राप्तः, किं०, अर्क इव प्रतापभृत् तेजस्वित्वात् ॥ २ ॥

दुष्पाक्षिकोलूकसहस्ररश्मिभिः
श्रीसागरैर्वाचकधर्मसागरैः ।
क्लृप्तस्य शास्त्रस्य हरेरिव श्वभिः
सूरेर्विवादः सममौष्ट्रिकैरभूत् ॥ ३ ॥

वाचकधर्मसागरैः, किं०, दुष्पाक्षिकाः कुपाक्षिका एव उलूका घूकास्तेषु सहस्ररश्मिभिः, पुनः, शास्त्रादिश्रियः सागरैः, **क्लृप्तस्य शास्त्रस्य प्रवचनपरीक्षाभिधानस्य**, विवादः सूरेः श्रीविजयसेनस्य, औष्ट्रिकैः खरतरैः, सममभूत् । कैः सह कस्येवेत्याह—हरेः सिंहस्य, इव यथा, श्वभिः श्वानैरिति दृष्टान्त उत्प्रेक्षा वा ॥३॥

ततो विवादे किं जातमित्याह—

पार्षद्यहृद्ये सदसि क्षमेशितु-
र्वेदत्रियामारमणैर्दिनैर्महान् ।
श्रीस्मेरराजीवदृगेककार्मणं
तत्राऽप्यनूचानपतेरभूज्जयः ॥ ४ ॥

क्षमेशितुर्भूपस्य, सदसि, किं०, पार्षद्यैः सभ्यैर्हृद्ये रम्ये, अत्र सदःशब्दस्य स्त्रीक्लीबलिङ्गत्वाद् विशेषणमिदमदुष्टमिति, दिनैः किं०, वेदाश्चत्वारः, त्रियामारमणश्चन्द्रश्चैकः, ततो वामगतिमीलितैर्वेदचन्द्राङ्कैश्चतुर्दशभिः, दिनैर्विवादं कुर्वतो-

ऽनूचानपतेः श्रीविजयसेनसूरीन्दोः, तत्र पत्तने नगरे, जयो वादिविजयरूपः, किं०, श्रीः शोभा सैव स्मेरराजीवदृक् कामिनी तस्याः कार्मणं शोभाया एकहेतुर्वादे जयोऽभूदिति ॥४॥

वत्साभिधस्याऽथ नृपाधिकारिणः
कल्याणराजापरनामधारिणः ।
कक्षां प्रविष्टैः सुमहानहम्मदा-
वादे विवादः पुनरौष्ट्रिकैः कृतः ॥ ५ ॥

अथ वत्साख्यस्य नृपाधिकारिणः, किं०, कल्याणराजेत्यपरनाम्नः, कक्षां प्रविष्टैस्तद्गृह्यीभूय, औष्ट्रिकैः खरतरैः, पुनरहम्मदावादे नगरे, सुमहान् विवादः कृत इति ॥ ५ ॥

अथ तत्रापि यज्जातं, तत् त्रिभिर्वृत्तैः प्राह—

तेषामनूचानवितानवज्रिणां
धाम्ना महिम्ना च वचोऽतिशायिना ।
स्फीतस्फुरद्वाङ्मयवित्तिवित्तमैः
शिष्योत्तमैः सत्तमशक्तिशालिभिः ॥ ६ ॥

श्रीखानखानासदसि प्रबुद्धधी-
विप्रोम्बरामुख्यजनैर्विराजिनि ।
तद्वाङ्मयव्यक्तविचारिवाचन-
व्यक्तैः सभाविस्मयकारिवाग्भरैः ॥ ७ ॥

कल्याणराजस्य तथौष्ट्रिकाध्वभृ-
त्संघस्य निर्मूलमहारि विभ्रमः ।
चन्द्रस्य तारानिकरस्य चाऽभितो

ध्वान्तं हरद्भिः किरणै रवेरिव ॥ ८ ॥

अनूचानवितानवज्रिणां आचार्यव्रजवज्रपाणीनां, तेषां धाम्ना तेजसा, च पुनः, वचोऽतिशायिना वचनागोचरेण, महिम्ना माहात्म्येन, शिष्योत्तमैर्विनेयमुख्यैः, किं०, स्फीतानि च स्फुरन्ति च यानि वाङ्मयानि शास्त्राणि तेषां या वित्तिर्विचारणा ज्ञानमिति तत्र वित्तमैश्चतुरतरैः, अत एव सत्तमशक्तिशालिभिः अतिश्रेष्ठशास्त्रादिसामर्थ्यधारिभिः ॥६॥ पुनः केत्याह—श्रीखानखानाख्यमहाराजेन्द्रसदसि, किं०, प्रबुद्धधियो ये महाप्राज्ञा विप्रास्तार्किकभट्टाः पुनर्ये च उम्बरा राजविशेषाः सामन्तादिस्थानीयास्तन्मुख्यजनैस्तत्प्रमुखानेकराजलोकनागरलोकैः,विराजिनि भ्राजमाने, पुनः, शिष्यैस्तस्य वाङ्मयस्य प्रवचनपरीक्षाख्यस्य व्यक्तं स्फुटं यद् विचारि विचारवद् वाचनं तत्र व्यक्तैर्निपुणैः, अत एव सभाविस्मयकारिवाग्भरैः पर्षदाश्चर्यकृद्वाक्यप्रकर्षैः ॥ ७ ॥ ईदृग्विधैस्तैः शिष्यैर्यत्कृतं तदाह—तस्य कल्याणराजस्य तथा औष्ट्रिकाऽध्वभृत्संघस्य च खरतरसंबन्धिपक्षस्य च, निर्मूलमिति क्रियाविशेषणं समूलं, विभ्रमोऽहारि हत इति । चन्द्रस्य तारानिकरस्य च रवेः किरणैः, किं०, ध्वान्तं हरद्भिः सद्भिरिव यथेति दृष्टान्तः । इति काव्यत्रयीव्याख्या ॥८॥

अथ खरतरान् विजित्य श्राद्धैर्हृष्टैर्यत् कृतं तदाह—

श्रीखानखानार्पितवाद्यवादनै-

र्वाचालतानीतसमस्तदिग्मुखैः ।

शास्त्रं प्रति स्थानमनीयताऽखिल-

श्राद्धैस्तदुत्साहकृदुत्सवोत्सुकैः ॥ ९ ॥

श्रीखानखानार्पितैर्वादित्रध्वनिभिर्वाचालतां मुखरत्वं नीतानि समस्तानि दिग्मुखानि यैस्तैः, श्राद्धैस्तच्छास्त्रं स्था-

नं प्रति अनीयत आनीतं, श्राद्धैः किं०, उत्साहकारी य उत्सव-स्तत्रोत्सुकैः ॥ ९ ॥

एषा जयोक्तिर्जिनशासनास्थिति-
स्मेरेक्षणाभालमणीविशेषकः ।
पृथ्वी पृथिव्यां प्रथिमानमासदत्
तैलस्य बिन्दुः पयसीव तत्क्षणात् ॥ १० ॥

एषा वर्णिता, जयोक्तिर्विजयवाग्, किं०, जिनशासनस्थि-तिरेव स्मेरेक्षणा स्त्री तद्भाले मणीविशेषको रत्नतिलकं, स्त्री-लिङ्गवाच्यस्य शब्दस्य पुंलिङ्गवाच्यं विशेषक इति विशेषण-मदुष्टं 'लिङ्गभेदं तु मेनिरे' इति वचनात्; पुनर्जयोक्तिः किं०, पृ-थ्वी विस्तीर्णा, अत एव पृथिव्यां प्रथिमानं विस्तारभावं आ-सदत्, यथा तैलस्य बिन्दुः पयसि वारिणीति दृष्टान्तः ॥१०॥

सर्वोऽपि संघो जिनशासनोन्नते-
रुक्त्याऽनया प्रीतिमवाप निर्भरम् ।
अप्रीतिमुच्चैश्च कुपाक्षिकव्रजः
कोकश्च घूकश्च रवेरिवोदये ॥ ११ ॥

जिनशासनोन्नतेरनया उक्त्या सर्वोऽपि संघस्तपाग-च्छसत्कः, प्रीतिमवाप प्राप्तवान्, च पुनः, कुपाक्षिकव्रजः कुती-र्थिकनिकरः, अप्रीतिमवाप, यथा रवेरुदये सति, कोकघूकौ चक्रवाकोलूकौ, प्रीतिमप्रीतिं च क्रमेण प्राप्नुत इति दृष्टान्त-द्वयम् ॥ ११ ॥

मत्वाऽनयोक्त्याऽत्यमलामहम्मदा-
वादं पुरीं द्राक् शरदेव दीर्घिकाम् ।

आसीद् वलक्षद्विजवत् सुपक्षभाक्
पद्मोदयेच्छुर्गुरुरेतुमुत्सुकः ॥ १२ ॥

शरदा शरत्कालेन, दीर्घिकां वापीमिव, अनया जयोक्त्या वादजयवाचा, अमलां विशदां, अहम्मदावादं पुरीं मत्वा गुरुर्विजयसेनसूरिः, वलक्षद्विजवत् कलहंस इव, किं०, सुपक्षभाक् शोभनच्छदभृत्, गुरुपक्षे सुपक्षो धर्मपक्षस्तद्वानिति, पुनः किं०, पद्मोदयेच्छुः हंसपक्षे पद्मानां पङ्कजानां, गुरुपक्षे पद्मायाः लक्ष्म्या उदयाभिलाषी इति, एतुं आगन्तुं, उत्सुकोऽभूदिति ॥ १२ ॥

क्ष्मां पावयन् पादपयोजपांसुभि-
र्गाङ्गः प्रवाहोऽद्भिरिवर्षिशेखरः ।
प्राप क्रमेण प्रमना अहम्मदा-
वादं पुरं हर्ष इवर्षिमानसम् ॥ १३ ॥

ऋषिशेखरः सूरिः, पादपयोजपांसुभिश्चरणकमलरेणुभिः, अद्भिः पानीयैः, गाङ्गः प्रवाह इव क्ष्मां पृथ्वीं, पावयन् क्रमेण प्रमना हृष्टमानसः सन्, अहम्मदावादं पुरं प्राप, ऋषिमानसं सर्वदा शान्तरसपूर्णत्वाद् हर्षः प्रमोद इवेति दृष्टान्तो वोत्प्रेक्षा वा ॥ १३ ॥

श्रीसूरिसूरस्य समागमोल्लस-
न्नेत्रास्यपद्मा भृशमास्तिका अथ ।
साफल्यमिच्छन्तमुपार्जितश्रिय-
श्चक्रुः प्रवेशोत्सवसूत्रणामिति ॥ १४ ॥

अथ आस्तिकास्तत्रत्याः श्राद्धलोकाः, किं०, श्रीसूरि-

सूरस्य गुरुसूर्यस्य, समागमेन उल्लसन्ति नेत्रास्यपद्मानि नयनाननलिनानि येषां ते, उपार्जितायाः श्रियो लक्ष्म्याः, साफल्यं इच्छन्तः सन्तः, प्रवेशोत्सवस्य सूत्रणां निष्पत्तिं, इति वक्ष्यमाणस्वरूपां, चक्रुरिति ॥ १४ ॥

अथ सप्तदशभिर्वृत्तैः प्रवेशोत्सवं वर्णयति—

श्रीखानखानावनिजानिवज्रिणा
दत्ताऽतिमत्तद्विरदैः पुरस्सरैः ।
सिक्ता धरित्री पतता मदाम्भसा
कस्तूरिकाकर्दमसंचयेन किम् ? ॥ १५ ॥

श्रीखानखानाख्येन अवनिजानिवज्रिणा राजेन्द्रेण, तदा तदाधिपत्यशालिना, दत्ताऽतिमत्तैर्द्विरदैर्गजैः, पुरस्सरैरग्रेसरैः, पतता मदाम्भसा मदवारिणा, धरित्री भूः, सिक्ता । किमित्युत्प्रेक्ष्यते—कस्तूरिकाकर्दमसंचयेन मृगमदपङ्कपानीयेनेवेति ॥ १५ ॥

वर्त्माऽभवद् मत्तविहस्तहस्तिनां
घण्टाटणत्काररवैर्मनोहरम् ।
कासारकूलं तपनोदयादिव
त्यक्तप्रमीलार्जुनवाजिकूजितैः ॥ १६ ॥

मत्ता अत एव ये विहस्ता व्याकुला हस्तिनो मदव्यग्रगजेन्द्रास्तेषां, घण्टाटणत्काररवैः नगरवर्त्म मनोहरं अभवत् । इव यथा, तपनोदयात् सूर्योदयात्, त्यक्तप्रमीला गतनिद्रा ये अर्जुनवाजिनो धवलविहङ्गमाः "वाजी हये खगे" इत्यनेकार्थत्वात्, अर्जुनवाजिनो राजहंसास्तेषां कूजितैः शब्दितैर्जाग्रद्राजहंसरुतैः, कासारकूलं तटाकतटं, यथा मनोहरं भवति तथेति ॥१६॥

धत्ते स्म धात्री पुरि तत्र दन्तिनां
सिन्दूरपूरैर्निपतद्भिरिन्दिराम् ।
स्वाहाऽशनानां पदवीव नूतन-
प्रद्योतनस्योस्रभरैरिवोषसि ॥ १७ ॥

तत्र पुरि दन्तिनां सिन्दूरपूरैर्निपतद्भिः सद्भिः, धात्री भूमिः, इन्दिरां श्रियं, धत्ते स्माऽधात्; यथा उषसि प्रभाते, नूतनप्रद्योतनस्य उद्यद्भानोः, उस्रभरैः किरणगणैः, स्वाहाशनानां पदवी गगनमिवेति दृष्टान्तः ॥ १७ ॥

शृङ्गारिभृङ्गारमनोज्ञमस्तका-
अग्रे व्रजन्त्यो व्यभुरब्जलोचनाः ।
किं संचरन्त्यो भुजगेश्वरस्त्रियः
कुम्भं सुधायाः प्रविधाय मूर्धनि ? ॥ १८ ॥

तदा अग्रे गुरोः पुरः, व्रजन्त्योऽब्जलोचनाः स्त्रियः, व्यभुः शोभन्ते स्म । किं०, शृङ्गारी शृङ्गारवान् यो भृङ्गारः पूर्णकुम्भस्तेन मनोज्ञं मस्तकं यासां ताः, किं०, भुजगेश्वरस्त्रियो नागेन्द्रनार्यः, सुधायाः कुम्भं मूर्धनि प्रविधाय संचरन्त्यः सन्ति, किमित्युत्प्रेक्षा ॥ १८ ॥

सौवर्णरालाभरणा विरेजिरे
श्राद्धास्तदा तत्र करीन्द्रकुम्भगाः ।
आगाद् गजस्थस्त्रिदिवाद् विवन्दिषू-
रूपैरनेकैरिव नाकिनायकः ॥ १९ ॥

तदा तत्र पुरे, श्राद्धाः किं०, सौवर्णानि सुवर्णसंबन्धीनि

रात्नानि रत्नसंबन्धीनि आभरणानि येषां ते, पुनः किं०, करीन्द्रकुम्भगा हस्तिशीर्षस्थाः, विरेजिरे रेजुः । इवोत्प्रेक्ष्यते—नाकिनायकः शक्रः, किं०, गजस्थः, पुन किं०, विवन्दिषुर्गुरुवन्दनेच्छुः सन् , त्रिदिवात् स्वर्गात्, अनेकै रूपैरागात् आगत इति ॥ १९ ॥

पर्याणवर्यास्तुरगाः पुरो व्यभु-
भूंयिष्ठभूर्याभरणा असादिनः ।
खिन्ना इवोत्तेरुरमी भ्रमिश्रमा-
च्चन्द्रार्यमस्यन्दनगा नभस्तलात् ॥ २० ॥

पुनस्तत्र पर्याणैर्वर्याः सपर्याणाः, पुनः किं०, भूयिष्ठानि भूर्याभरणानि स्वर्णाभरणानि येषां ते "भूरि सुवर्णे" इति, पुनः किं०, असादिनः अश्ववाररहितास्तुरगाः, पुरोऽग्रतः, व्यभुर्भान्ति स्म । इवोत्प्रेक्ष्यते—नभस्तलाच्चन्द्रार्यमस्यन्दनगाश्चन्द्रसूर्यरथसत्कास्तुरगाः, भ्रमिश्रमात् खिन्ना इव, उत्तेरुरुत्तीर्णा इति ॥ २० ॥

निःस्वानभेरीमुखभूरितूरभू-
स्वानैश्च गन्धर्वरवैश्च गीतजैः ।
कोलाहलैश्चातुललोकसम्भवै-
रेजे तदा शब्दमयीव रोदसी ॥ २१ ॥

तदा रोदसी द्यावाभूरूपा, शब्दमयीव रेजे इत्यन्वयः। कैरित्याह—निःस्वानभेरीप्रमुखबहुतूर्योत्थस्वानैः, पुनः, गीतजैः गान्धर्वरवैः गायनध्वनिभिः, च पुनः, अतुललोकजैः कोलाहलैः, शब्दमयी द्यौर्भूमिश्च तदा जातेति ॥ २१ ॥

मुक्ताफलस्वर्णमणीविभूषणै-

दिव्यैर्दुकूलैर्वसनैश्च शोभनाः ।
एणीदृशो गीतसृजस्तदा व्यभु-
र्नत्यै गुरोरप्सरसः किमागताः ? ॥ २२ ॥

मुक्ताफलस्वर्णमणीविभूषणैर्मौक्तिककनकरत्नाभरणैः, च पुनः, दिव्यैर्दुकूलवसनैः पट्टकूलपरिधानैः, शोभना रम्याः, गीतसृजो गानकारिण्यः, एणीदृशः स्त्रियः, व्यभुः शोभन्ते स्म, तदोत्सवे गुरोर्नत्यै नमनाय, किं०, अप्सरसः स्वर्गाङ्गना-आगता इति ॥ २२ ॥

श्राद्धैर्ददद्भिर्धनमर्थिनां तदा
यद्भालतोऽलोपि लिपिः सदर्थिता ।
स्वःसन्मणीगोद्रुमुखाग्रतोऽपि यत्
तैस्तत्प्रभृत्यत्र न जातमर्थिभिः ॥ २३ ॥

तदा श्राद्धैर्जनैः, अर्थिनां याचकानां, धनं ददद्भिः यद्भालतः सदर्थिता लिपिः विद्यमानाऽर्थित्वलिपिः, अलोपि लुप्ता । उत्तरार्धेन तद्धेतुमेव व्यञ्जयति—स्वःसन्मणीगोद्रुमुखाणामपि सुरमणिसुरगवीसुरतरुप्रमुखाणामपि, अग्रतः पुरः, तैरर्थिभिः, तत्प्रभृति तद्दिनात्, यदिति यस्मात् कारणात्, अर्थिभिर्याचनाकृद्भिः, न जातं, अर्थिभिः पुनरर्थिभिर्न बभूवे इति भावः ॥ २३ ॥

रेजुर्ध्वजाः पुष्कलवर्णपेशला
उत्तम्भिता हट्टगृहाट्टवर्त्मसु ।
किं केतवोऽमी युगपत्कुपाक्षिका-
हङ्काराधिकारकृते समुद्गताः ? ॥ २४ ॥

पुष्कलैर्बहुभिर्वर्णैः पेशला रम्याः, पुनर्हट्टगृहाऽट्टवर्त्मसु उत्तम्भिता ऊर्ध्वीकृताः, ध्वजा रेजुर्व्यभुः । किमित्युत्प्रेक्ष्यते—केतवो धूमग्रहविशेषाः, अमी युगपत् समकालं, कुपाक्षिकाहङ्कारधिक्कारकृते समुद्गता उदिता इवेति ॥ २४ ॥

मुक्ताफलैस्तत्र परस्पराहति-
स्त्रीस्तोमहारात् पतितैर्मही बभौ ।
कर्तुं स्वयं स्वस्तिकपङ्क्तिमागता
किं ताम्रपर्णीतटिनी स्वमौक्तिकैः ? ॥२५॥

तत्र पुरे, परस्परं आहतिः संघट्टो यासां ताः परस्पराहतयो याः स्त्रियस्तासां यः स्तोमो व्रजस्तद्धारादित्यत्र जात्यपेक्षया एकत्वम्; तेन हारेभ्यो निपतितैर्मुक्ताफलैः, मही भूः, बभौ; किं ताम्रपर्णीतटिनी मुक्ताफलनदी, स्वमौक्तिकैः स्वस्तिकपङ्क्तिं कर्तुं स्वयमागतेति ॥ २५ ॥

वक्रभ्रुवस्तत्र गवाक्षसंगता
लाजान् गुरोर्मूर्ध्नि वरानवाकिरन् ।
वर्षन्त्यमूरप्सरसः परस्परा-
हंपूर्विकोत्का इव मौक्तिकोत्करैः ॥ २६ ॥

तत्र गवाक्षसंगता वातायनस्थिताः, वक्रभ्रुवो नार्यः, गुरोर्मूर्ध्नि वरान् लाजान् अक्षताक्षतान्, अवाकिरन् क्षेपयामासुः । इवोत्प्रेक्ष्यते—परस्परमन्योन्यं अहंपूर्वमहंपूर्वमितिरूपाऽहंपूर्विका तया उत्का उत्सुकाः परस्पराहंपूर्विकोत्का इव, अमूः अप्सरसः, मौक्तिकोत्करैर्मुक्ताफलपटलैः, वर्षन्ति ॥ २६ ॥

वध्वो बभुस्तत्र विलोललोचनैः

सेहं गुरोर्दर्शनवृत्तवृत्तयः ।
नीलोत्पलैः फुल्लतमैरिवाप्सरः-
श्रेण्योऽर्चयन्त्यः पथि संस्थिता इमाः ॥ २७ ॥

तत्र विलोललोचनैश्चपलनेत्रैः, वध्वो नार्यः, बभुः; किं०, गुरोर्दर्शने वृत्ता प्रवृत्ता वृत्तिश्चित्तवृत्तिर्यासां ताः, कथं, सेहं सस्पृहं यथा स्यात् तथेति गुरुदर्शनाभिलाषित्वाद्, द्विधाऽपि चपलेक्षणाः स्त्रियो भान्ति स्मेति। इवोत्प्रेक्ष्यते—इमा अप्सरःश्रेण्यः नीलोत्पलैः, किं०, फुल्लतमैः स्मेरतरैः कुवलयैरर्चयन्त्यः पथि संस्थितास्तस्थुरिव ॥ २७ ॥

हृष्टाननैः सूरिसमागमाज्जनै-
राभात् पुरं तद्वरवेषकल्पनैः ।
पाथोजिनीप्राणपतेरिवोदयात्
सद्यः प्रफुल्लैः सरसीरुहैः सरः ॥ २८ ॥

सूरिसमागमाद् गुर्वागमात्, जनैः किं०, हृष्टाननैः हर्षितमुखैः, अत एव पुनर्जनैः किं०, वरवेषकल्पनैः श्रेष्ठनेपथ्यरचनैः, तत् पुरं नगरं, आभात् भाति स्म। इवेति यथा वा, उत्प्रेक्ष्यते वा। पाथोजिनीप्राणपतेः सूर्यस्य, उदयात् प्रफुल्लैर्निर्निद्रैः, सरसीरुहैः कमलैः, सरः कासार इवेति दृष्टान्तोत्प्रेक्षे ॥ २८ ॥

चामीकरं द्राक् क्रियमाणमर्थिसा-
दालोक्य लोकाङ्गगतं च पुष्कलम् ।
ध्यातं तदेत्यन्यपुरागतैर्जनै-
र्दृङ्गेऽत्र किं वर्षति काञ्चनो घनः ? ॥२९॥

तदा चामीकरं कनकं, अर्थिसाद् याचकाधीनं क्रियमाणं

याचकानां दीयमानं, आलोक्य, च पुनः, लोकाङ्गगतं व्यवहारिनरनारीशरीरप्राप्तं च, पुष्कलं पूर्णं, आलोक्य, तदाऽन्यपुरागतैर्जनैरन्यस्थानीयैरागन्तुकैः लोकैः, इति ध्यातमित्यचिन्ति । तदेवाह—किं अत्र द्रङ्गे राजनगरे, काञ्चनो घनो हेममयो मेघः, वर्षतीति ॥ २९ ॥

गेहे गवाक्षेऽध्वनि चत्वरे तदा
तस्थुर्गुरोर्दर्शनमिच्छवो जनाः ।
शीते प्रभाते कपयो दिदृक्षवः
सूर्यं द्रुमोर्वीधरमेदिनीष्विव ॥ ३० ॥

तदा गुरोर्दर्शनमिच्छवो जना गुरुं द्रष्टुकामा लोकाः, गेहे गवाक्षे अध्वनि वर्त्मनि, चत्वरे वर्त्मचतुष्करूपे, तस्थुः, यथा शीते हिमसमये सति, प्रभाते प्रातर्वेलायां, सूर्यं दिदृक्षवः कपयो वानराः, द्रुमोर्वीधरमेदिनीषु भूरुहभूधरभूमिषु, तिष्ठन्तीति दृष्टान्तः ॥ ३० ॥

भूयानभूत् तत्र पुरे कुपाक्षिक-
व्रातैककाकारिदिवाकरोदयः ।
एवं प्रवेशोत्सव एष लोकदृग्-
वल्ल्यालिचञ्चन्मलयाचलानिलः ॥ ३१ ॥

तत्र पुरे एवमिति व्यावर्णितप्रकारः, एष प्रवेशोत्सवो गुरुप्रवेशमहः, भूयान् महीयान्, अभूदित्यन्वयः । किं०, कुपाक्षिकव्राताः कुतीर्थिसार्था एव काकारयो घूकास्तेषु दिवाकरोदयः सूर्योदयतुल्यः, तेषामन्धत्वरूपदुःखापादनात्, पुनः किं०, लोकदृग्वल्ल्यालिचञ्चन्मलयाचलानिलः लोकदृश एव वल्ल्यालयो लतापङ्क्तयः तासां तासु वा चञ्चन्मलयाचलानिलः लसन्

दाक्षिणात्यो वात इवेति, लोकदृग्लतानां लास्यकारित्वात् ॥ ३१ ॥

साडम्बरं मौक्तिकमञ्जुजालकं
नानावितानैः कृतवर्यविभ्रमम् ।
साश्चर्यचर्यं बहुबद्धकुट्टिमं
धर्माभिधक्षोणिपतेरिवाश्रमम् ॥ ३२ ॥
कामप्रमोदं सुमनोमनोरमं
शश्वद् वृषानन्दनिदानमुन्नतम् ।
रम्यं सुधर्मानुजमागताः क्रमात्
पूज्या अलञ्चक्रुरुपाश्रयं वरम् ॥ ३३ ॥

सहाऽऽडम्बरेण शृङ्गारलक्षणेन वर्तते यस्तं, पुनः किं०, मौक्तिकैर्मञ्जूनि जालकानि यत्र तं, पुनः किं०, नानावितानैर्विचित्रचन्द्रोदयैः कृता वर्या विभ्रमाः शोभा यत्र तं, पुनः किं०, सह आश्चर्यचर्यया वर्तते यस्तं, पुनः किं०, बहुबद्धं कुट्टिमं यत्र तम् । इवोत्प्रेक्ष्यते—धर्माभिधक्षोणिपतेः सुकृतभूभर्तुः, आश्रमं स्थानमिति ॥३२॥ पुनः किं०, सुधर्मायाः शक्रसभाया अनुजं लघुभ्रातरं, तत्तुल्यत्वात् । सुधर्मानुजत्वमेव विशेषणत्रयेण व्यञ्जयति—कामेति । कामं प्रमोदो यत्र, पक्षे कामस्य स्मरस्य प्रमोदो यत्र तं; पुनः किं०, सुमनोभिः पण्डितैः, पक्षे सुमनोभिः सुरैः मनोरमं; पुनः किं०, वृषस्य धर्मस्य आनन्दस्य च हर्षस्य निदानं बीजं, पक्षे वृषानन्दस्य इन्द्राह्लादस्य निदानं, पुनः, उन्नतमुत्तुङ्गं, भूमिचतुष्कसद्भावात् ; अत एव रम्यम्, क्रमाद् नगरमध्यमागताः सन्तः पूज्या उपाश्रयमलञ्चक्रुः । इति युग्मव्याख्या ॥ ३३ ॥

अग्रे गुरोश्चक्रुरदभ्रविभ्रमाः
पीठे भुवोऽङ्के घुसृणार्णसारुणे ।
मुक्ताक्षतैः स्वस्तिकपङ्क्तिमङ्गना
रूपश्रिया निर्जितनिर्जराङ्गनाः ॥ ३४ ॥

गुरोरग्रे अङ्गनाः, किं०, अदभ्रा बहवो विभ्रमा भ्रूविलासाः षोडशशृङ्गाररूपशोभा वा यासां ताः, पुनः किं०, रूपश्रिया निर्जिता निर्जराङ्गनाः सुराङ्गना याभिस्ताः, पीठे पादपीठपट्टिसादौ, पुनः, भुवोऽङ्के भूत्सङ्गे, किं०, घुसृणाऽर्णसाऽरुणे कुङ्कुमपानीयेनाऽरुणे पाटले विहिते सति, मुक्ताक्षतैः स्वस्तिकपङ्क्तिं चक्रुः ॥ ३४ ॥

पुष्पैः प्रभूतैस्तपनीयजन्मभि-
र्वर्धापयन्ति स्म गुरुं मृगीदृशः ।
फुल्लैः प्रफुल्लैरिव चारुचाम्पकै-
र्ऋतुत्वब्जनेत्राः स्मरराजमागतम् ॥ ३५ ॥

प्रभूतैः बहुभिः, तपनीयजन्मभिः सौवर्णैः, पुष्पैः गुरुं मृगीदृशो वर्धापयन्ति स्मेत्यन्वयः । उत्प्रेक्षामाह—इवोत्प्रेक्ष्यते—चारुचाम्पकैः चञ्चच्चम्पकसंबन्धिभिः, फुल्लैः पुष्पैः, किं०, प्रफुल्लैः, स्मेरैः, ऋतुश्रिय आगतं स्मरराजं कामभूपं, वर्धापयन्ति स्मेति । पुष्पवाचकफुल्लशब्दोऽपि लिङ्गानुशासनविवरणगतोऽस्तीति ध्येयम् ॥ ३५ ॥

आनर्च चामीकररूप्यनाणकैः
संघस्तदा श्रीगुरुराजमादरात् ।
लब्धप्रसादः स्मितरम्यमालती-

पुष्पैः वसन्तेशमिव द्रुमोत्करः ॥ ३६ ॥

तदा संघ आदरात् श्रीगुरुराजं चामीकररूप्यनाणकै-रानर्चेत्यन्वयः । यथा द्रुमोत्करस्तरुनिकरः, किं०, लब्धः प्रसादो विभूतिप्राप्तिरूपो येन सः, स्मितरम्यमालतीपुष्पै-र्विकसितजात्यजातीकुसुमैः, वसन्तेशं स्वस्वामिनं, पूजयतीति दृष्टान्तः ॥ ३६ ॥

श्रेयःफलश्रीफलरूप्यनाणकैः

श्राद्धा व्यधुः कीर्तिकरीः प्रभावनाः ।

वृष्टीः पयोदा इव पुण्यजीवना-

स्तोयैर्जगत्प्रीतिलतामहोदयैः ॥ ३७ ॥

श्रीफला नालिकेराः, रूप्यनाणकानि प्रतीतानि, तैः, किं०, श्रेयसां मङ्गलानां धर्माणां वा फलैः, श्राद्धाः कीर्तिकरीः प्रभावना व्यधुश्चक्रुः, इव यथा, पयोदा मेघाः, तोयैः जलैः, किं०, जगत्प्रीतिरेव लता तस्या महोदयोद्गमो येभ्यस्तैः, वृष्टीः किं०, पुण्यं जीवनं यासु ताः, प्रभावनाः किं०, पुण्यस्य जीवनं यासु ताः, कुर्वन्तीति दृष्टान्तः ॥ ३७ ॥

पूजाः प्रमोदात् प्रतिचैत्यमर्हतां

श्राद्धैः क्रियन्ते स्म तदाऽतिबन्धुराः ।

संपत्तयो द्राक् प्रतिकाननं सुखो-

ल्लासैरपाचीपवनैरिवाभितः ॥ ३८ ॥

तदा श्राद्धैः प्रतिचैत्यमर्हतां पूजाः क्रियन्ते स्म, यथाऽ-पाचीपवनैर्दक्षिणाशावातैः, किं०, सुखोल्लासैः सौख्योल्ला-सिभिः, प्रतिकाननं वनं वनं प्रति, संपत्तयः कुसुमादिरूपाः, क्रियन्तेऽभितः सर्वत इति ॥ ३८ ॥

श्राद्धा व्यधुः प्रत्यहमुन्नतोन्नतं
सङ्घेषु वात्सल्यमतुच्छमुत्सुकाः ।
प्राज्यप्रजाप्रीतिपरैरपांभरैः
पाथोधराश्चातकपोतकेष्विव ॥ ३९ ॥

प्रत्यहं निरन्तरं, संघेषु वात्सल्यं, किं०, उन्नतोन्नतं द्रव्यतोऽपि भावतोऽपि च, श्राद्धा व्यधुः । दृष्टान्तमाह–इव यथा, पाथोधरा जलदाः, अपांभरैः जलप्राग्भारैः, किं०, प्राज्या याः प्रजा लोकास्तत्प्रीतिकरणे तत्परैः, चातकपोतकेषु बप्पीहबालकेष्विति ॥ ३९ ॥

कुर्वत्सु हृत्प्रीतिमखण्डितान्तरां
धर्मेष्वमीषु प्रसभं भवत्स्विति ।
तत्र प्रतापः सुगुरोरभूत्तमां
घर्मस्य घस्रेषु तमोरिपोरिव ॥ ४० ॥

अखण्डितान्तरां निरन्तरां, हृत्प्रीतिं कुर्वत्सु अमीषु उक्तलक्षणेषु, धर्मेषु पुण्यकृत्येषु, इति प्रसभं अहंपूर्विकया हठेनैव, भवत्सु जायमानेषु सत्सु, तत्र नगरे, सुगुरोः प्रतापोऽभूत्तमाम् । दृष्टान्तो यथा–घर्मस्य ग्रीष्मस्य, घस्रेषु दिवसेषु, तमोरिपोः सूर्यस्य, इवेति ॥ ४० ॥

गच्छत्स्वतुच्छोत्सवशालिषु प्रति-
स्थानं गुरोर्द्राग् महिमा दिनेष्वभूत् ।
पुण्यैकपाथोनिधिवृद्धिदायिनः
पक्षस्य शुक्लस्य निशापतेरिव ॥ ४१ ॥

दिनेषु किं०, अतुच्छाः पूर्णा ये उत्सवास्तच्छालिषु,

गच्छत्सु सत्सु, गुरोर्महिमा प्रतिस्थानमभूद्, गीयमान इति शेषः । यथा निशापतेश्चन्द्रस्य, किं०, पुण्यैकपाथोनिधिवृद्धिदायिनः सुकृतसिन्धुवृद्धिकर्तुः, शुक्लस्य पक्षस्य दिनेषु गच्छत्सु तेजोमहत्त्वरूपो महिमा भवेत् ॥ ४१ ॥

अत्यर्थमानन्दिमना मनस्विराट्
श्रीखानखानाऽवनिजानिकुञ्जरः ।
जज्ञे गुरोर्दर्शनमिच्छुरुत्सुको
ज्योत्स्नाप्रियः शीतरुचेरिवाऽन्यदा ॥ ४२ ॥

श्रीखानखानाख्योऽवनिजानिकुञ्जरः राजेन्द्रगजेन्द्रः, किं०, अत्यर्थं आनन्दिमना मुदितचेताः सन्, पुनः किं०, मनस्विराट् सहृदयमुख्यः, अन्यदा उत्सुकः सन् गुरोर्दर्शनमिच्छुः जज्ञे जात इति । दृष्टान्तमाह—यथा शीतरुचेः शशिनः, ज्योत्स्नाप्रियश्चकोर इति ॥ ४२ ॥

आकारितः श्रीगुरुरादरस्पृशा
श्रीखानखानाऽवनिजानिना ययौ ।
सौधं तदीयं बहुमानमञ्जुलं
वित्तेशितेव स्फटिकावनीधरम् ॥ ४३ ॥

आदरस्पृशा भक्तिमता, श्रीखानखानावनिजानिना बहुमानमञ्जुलं यथा स्यात् तथा, आकारित आहूतः सन्, श्रीगुरुस्तदीयं सौधं ययौ, वित्तेशिता धनद इव, स्फटिकावनीधरं कैलासम्, इति दृष्टान्तोत्प्रेक्षे ॥ ४३ ॥

तद्धाम्नि लेभे सुमनोभिरावृतः
सद्दक्षजाते स महत्त्वमद्भुतम् ।

उच्चैः पदं राजनिकेतने गुरुः

प्राप्नोति यत् तद् नहि विस्मयावहम् ॥४४॥

तद्धाम्नि तद्गेहे, स गुरुर्महत्त्वं माहात्म्यं, लेभे लब्धवान्, स किं०, सुमनोभिः पण्डितैरावृतः, अन्यत्र सुमनोभिर्देवैः, तद्धाम्नि किं०, सद्विद्यमानं साधु वा दक्षजातं विद्वद्वृन्दं यत्र तत्र। अमुमेवार्थं श्लेषद्वारा समर्थयति--राजनिकेतने गुरुर्यदुच्चैः पदं प्राप्नोति तद्विस्मयावहं नहि; यतो गुरुर्बृहस्पतिः, राज्ञः शशाङ्कस्य निकेतने कर्कलग्ने, किं०, सद्दक्षजाते सत्यो दक्षजाता दाक्षायिण्यो यत्र तत्र, गतः सन् उच्चत्वं यत् प्राप्नोति न तच्चित्रमिति ॥ ४४ ॥

धर्मस्य मार्गोऽभिदधेऽथ सूरिणा

शुद्धो धराधीशमनोमनोहरः ।

सर्वाऽपि संसद् मुमुदे निशम्य तं

कामं मयूरीव पयोदगर्जितम् ॥ ४५ ॥

अथ तत्र गतेन सूरिणा धर्ममार्गोऽभिदधे उक्तः, किं०, शुद्धः सर्वज्ञोक्तः, पुनः किं०, धराधीशमनोमनोहरो राजेन्द्रचेतःप्रियः, सर्वाऽपि संसत् सभा, तं धर्ममार्गं, निशम्य मुमुदे । पयोदगर्जितं मेघध्वनिं, श्रुत्वा यथा मयूरीति दृष्टान्तः ॥ ४५ ॥

अस्वप्नशाखीव मरौ निरन्तर-

च्छायो महानन्दफलप्रदः सदा ।

पन्थाः प्रशस्तोऽत्र समस्तशस्तकृत्

स्वामिन्नसौ वः परमेश्वरास्तिकृत् ॥ ४६ ॥

हे स्वामिन् गुरो! असौ वो युष्माकं, पन्थाः, किं०, अत्र

कलौ, प्रशस्तः प्रकर्षेण श्लाघ्यो वर्त्तत इति, किं०, समस्तश-स्तकृत् सर्वमङ्गलकारी, पुनः, परमेश्वराप्तिकृद् जगदीशप्रापकः सिद्धिस्थानार्पक इति, पक्षे भावप्रधानत्वाद् निर्देशस्य परमे-श्वरशब्देन परमेश्वरत्वं प्रकृष्टधनित्वं तस्य आप्तिकृत् । दृष्टान्तो-ऽत्र यथा--मरौ मरुस्थलीदेशे, अस्वप्नशाखी कल्पवृक्षः, किं०, निरन्तरं छाया शोभाऽनातपो वा यस्य सः, पुनः, महानन्दो मोक्षः, महानानन्दो वा तद्रूपं फलं प्रददातीति यः सः ॥४६॥

राज्ञाऽमुनैवं विनुतः प्रतिश्रयं
प्राप्तस्तदा ख्यातिमवाप भूयसीम् ।
किं चित्रमत्रात्मनिवासगो गुरु-
र्माहात्म्यमाप्नोति गिरामगोचरम् ? ॥ ४७ ॥

अमुना राज्ञा खानखानाभिधानेन, एवं विनुतः सन्, प्रति-श्रयं प्राप्तस्तदा ख्यातिं भूयसीमवाप प्राप्तवान्, अत्र किं चित्रम्?, यदात्मनिवासगः स्वभवनस्थो गुरुर्माहात्म्यं किं०, गिरामगोचरं वचनाविषयं, आप्नोति; स्वक्षेत्रगो हि गुरुर्महा-बली इति ज्योतिर्विदां मतमिति युग्मव्याख्येति ॥ ४७ ॥

श्रीमन्महावीरपरंपरादिवि
प्रद्योतनोद्द्योत इव प्रभास्वरः ।
तिष्ठन् पुरे तत्र पवित्रदृग्गुरु-
श्चक्रे चतुर्मासकपूर्त्तिमर्त्तिभित् ॥ ४८ ॥

प्रद्योतनोद्द्योत इव सूर्यालोक इव, प्रभास्वरोऽतिभासुरः, कस्यामित्याह—श्रीमन्महावीरस्य परम्परादिवि वंशाकाशे, पुनः किं०, पवित्रदृक् पुण्यदर्शनः, गुरुस्तत्र पुरे राजनगरे, तिष्ठन् चतुर्मासकपूर्त्तिं चक्रे, किं०, आर्तिभित् पीडापहारीति ॥४८॥

इतश्च—

श्रीराजदेशावनिवामलोचना-

भालस्थलस्थूलललामलक्ष्मिकृत् ।

आसीदिलादुर्गपुरी वरीयसी

भोगावतीवाऽतुलभोगिभासुरा ॥ ४९ ॥

इतश्चेत्यव्ययपदेनाथ भाविनो गुरुपट्टधरस्य श्रीविजयदेवसूरेश्चरितं प्रपञ्चयति—इलादुर्गपुरी आसीदित्यन्वयः । किं०, वरीयसी वरिष्ठा, पुनः किं०, श्रिया स्वर्गखण्डस्पर्धिन्या विचित्रचित्रारामकामकेलिवनानेककेलीवनवापीकूपतटाकतटिनीगिरिवरतरुवरतरुणतरतरुणीरामणीयकेन निखिललोकलोचनाह्लादवर्धिन्या युक्तो राजदेशनामा यो देशस्तस्याऽवनिवामलोचनाया भूभामिन्या भालस्थले स्थूलां पीनां ललामलक्ष्मिं तिलकलक्ष्मीं करोतीति श्रीराजदेशावनिवामलोचनाभालस्थलस्थूलललामलक्ष्मिकृत् , लक्ष्मीवल्लक्ष्मिशब्दः शब्दप्रभेदनामकोशगतोऽवसेय इति । इवोत्प्रेक्ष्यते—भोगावतीव नागपुरीव, किं०, अतुलभोगिभिर्बहुप्रधानलोकैः, पक्षेऽतुलभोगिभिर्भूरिभुजङ्गैर्भासुरा दीप्तेति॥४९॥

तत्राऽभवत् सभ्यमहेभ्यमण्डनः

श्रेष्ठी स्थिराख्यः स्थिरधीः शुभाऽध्वनि ।

स्फूर्जत्प्रभः पुण्यजनेषु विश्रुतः

श्रीदोऽलकायामिव संपदां पदम् ॥ ५० ॥

तत्रेलादुर्गे, स्थिराख्यः श्रेष्ठी अभवदित्यन्वयः । किं०, सभ्येषु सभाऽऽस्तारेषु पुनर्महेभ्येषु महाधनिषु मण्डनोऽलङ्कारः, तद्भूषणत्वात् , पुनः किं०, स्थिरधीर्निश्चलमतिः,

केत्याह--शुभाऽध्वनि पुण्यमार्गे, इव यथा, अलकायां श्रीदः कुबेर इव, किं०, संपदां श्रीणां पदं, इदं विशेषणं द्वयोस्तुल्यं; पुनः किं०, स्फूर्जत्प्रभो लसत्कान्तिः, पक्षे स्फूर्जन्ती प्रभा अलकानगरी यस्य "पुरी प्रभा" इति नाममालायां भणनात्, पुनः किं०, पुण्यजनेषु धर्मिलोकेषु विश्रुतः, पक्षे पुण्यजनेषु यक्षेषु विश्रुत इति ॥ ५० ॥

लक्ष्मीर्मुरारेरिव काममुत्प्रदा
स्वामिप्रसादा गिरिजेव धूर्जटेः ।
रूपाइसंज्ञाऽजनि तस्य गेहिनी
सौभाग्यभाग्यादिगुणौघशालिनी ॥ ५१ ॥

तस्य श्रेष्ठिनः, रूपाइसंज्ञा गेहिनी गृहिणी, अजनि जातेत्यन्वयः। कस्य केवेत्याह--मुरारेर्विष्णोः, लक्ष्मीरिव, किं०, कामं अत्यर्थं मुत्प्रदा हर्षदा सर्वेषामपि, लक्ष्मीपक्षे कामस्य स्वपुत्रस्य मुत्प्रदा, पुनः, धूर्जटेर्महादेवस्य, गिरिजा पार्वतीव, किं०, स्वामिनो भर्तुः प्रसादो यस्याः सा, पार्वतीपक्षे स्वामिनि स्वपुत्रकार्तिकेये प्रसादो यस्याः सा, पुनः किं०, सौभाग्यभाग्यादिगुणौघेन शालिनीति ॥ ५१ ॥

सिंहेन सिंहेव समुद्यतौजसा
नित्यात्मरूपेण सदाऽवियोगिना ।
सार्धं स्वभर्त्रा रममाणयाऽनया
बभ्रेऽथ गर्भो वनभूविभूषणः ॥ ५२ ॥

अनया रूपाइनाम्न्या, स्वभर्त्रा सार्धं रममाणया सिंह्या सिंहिकया इव, सिंहेन केसरिणा, किं०, समुद्यतं सोद्यममोजो बलं यस्य तेन, पतिपक्षे सोद्यमं ओजो धातुतेजो यस्य

तेन, पुनः किं०, नित्यमात्मरूपेण स्वतुल्येनेति, पुनः सदाऽवि-योगिना वियोगवर्जितेन, गर्भो बभ्रे धृतः, किं०, वनभूविभूषणः पुत्रपक्षे वनभुवो गेहभूमेः, सिंहपक्षे वनभुवः काननभूमेर्विभूषणः "वनं गेहे काननेऽपि" इत्यनेकार्थत्वादिति ॥ ५२ ॥

अथ त्रिभिर्वृत्तैर्गुरुजन्मवर्षमासग्रहाद्याह—

वर्षे चतुष्पावकपार्थिवे त्रयो-
दश्यां दशाश्वद्युतिदीप्रदिग्भृति ।
लग्ने वृषे वासरराजवासरे
मासे सहस्ये विधिभे विधौ सति ॥ ५३ ॥

इन्दौ विलग्ने युवतौ च वाक्पतौ
माहेयदैत्यार्चितयोरलौ सतोः ।
राशौ झषाख्ये च तथा विधुन्तुदे
चापे बुधक्रोडसहस्ररश्मिषु ॥ ५४ ॥

प्राचीव बिम्बं तरणेस्तमोपहं
राकेव चन्द्रं कुमुदुन्नतिप्रदम् ।
आमोदमूलं सुषुवेऽथ सा सुतं
पुत्रीव जह्नोस्तपनीयपङ्कजम् ॥ ५५ ॥

वर्षे, किं०, चत्वारः, पावकास्त्रयश्च, पार्थिवाः षोडश च, एतेऽङ्का यस्मिंस्तस्मिंश्चतुष्पावकपार्थिवे वामगतिमीलिते १६३४ वर्षे इति, पुनस्त्रयोदश्यां तिथौ, किं०, दशाश्वश्चन्द्रस्तस्य द्युत्या कान्त्या दीप्रां दिशं बिभर्तीति तत्र, पुनः, लग्ने वृषे वृषनाम्नि लग्ने वहमाने सति, पुनः, वासरराजस्य वासरे रविवारे सति, पुनः, सहस्ये पोषै मासे सति, पुनः, विधिभे रोहिणीनामके

नक्षत्रे, विधौ चन्द्रे सति ॥ ५३ ॥ अथ ग्रहसंस्थितिमाह—विलग्ने मूर्तिस्थाने वृषलग्नरूपे प्रथमे भवने, इन्दौ चन्द्रे सति, च पुनः, वाक्पतौ बृहस्पतौ, युवतौ कन्यायां पञ्चमे भवने सति, पुनः, माहेयो मङ्गलः, दैत्यार्चितश्च शुक्रस्तयोर्माहेयदैत्यार्चितयोर्भौमशुक्रयोः, अलौ वृश्चिके सप्तमे भवने स्थितयोः, पुनः, झषाख्ये मीनराशावेकादशे भवने, विधुन्तुदे राहौ सति, पुनश्चापे धनुषि अष्टमे भवने, बुधक्रोडसहस्ररश्मिषु ज्ञशनिसूर्येषु सत्स्विति ॥ ५४ ॥ ग्रहस्थितिकुण्डली यथा—

| | | |
|---|---|---|
| ३<br>४ | २ चं. | १<br>१२ रा. |
| ५ | श्रीः | ११ |
| ६.के.बृ.<br>७ श. | ८<br>शु. मं. | ९ १०<br>श.र.बु. |

अथ सा रूपाइनाम्नी, सुतं सुषुवे सूते स्मेत्यन्वयः । केवेत्याह—प्राची यथा तरणेर्बिम्बम्, किं०, तमोपहं, पुत्रपक्षे पापापहं, रविबिम्बपक्षे तमोऽपहं ध्वान्तापहं, राकेव पूर्णिमेव, चन्द्रं, किं०, कुमुदुन्नतिप्रदं पुत्रपक्षे कोः पृथिव्याः मुदुन्नतिप्रदं हर्षोन्नतिदायिनं, चन्द्रपक्षे कुमुदां कैरवाणामुन्नतिप्रदं 'कुमुदं च कुमुच्च' इति शब्दप्रभेदे, जह्नोः पुत्री गङ्गेव, तपनीयपङ्कजं स्वर्णकमलं, किं०, आमोदमूलं, सुतपक्षे आमोदस्य हर्षस्य, कमलपक्षे आमोदस्य गन्धस्य मूलं "आमोदो गन्धहर्षयोः" इत्यनेकार्थत्वादिति । इति त्रयाणां व्याख्या ॥५५॥

कृत्वा महोत्साहमयं महोत्सवं
तस्याऽभिधानं तनुजन्मनस्तदा ।

चक्रे पितृभ्यां दिवसेऽतिशोभने
वासेति नित्यं सुहृदां मुदां पदम् ॥ ५६ ॥

महान् य उत्साहश्चित्तोत्कर्षलक्षणस्तन्मयं तत्प्रधानं चित्तोत्साहानुसारिणं, महोत्सवं कृत्वा तस्य तनुजन्मनः सूनोः, अतिशोभने दिवसे पितृभ्यां वासाख्य इत्यभिधानं चक्रे, किं०, सुहृदां मित्राणां, मुदां पदं हर्षस्थानमिति ॥ ५६ ॥

उज्झन् वयः शैशवमुन्मना अयं
प्राज्ञः कुमारः प्रपठन्नशाठ्यधीः ।
प्राप्नोति वृद्धिं पितृनेत्रकैरवो-
ल्लासी शशीवाशितिपक्षगः क्रमात् ॥ ५७ ॥

अयं वासाख्यकुमारः, शैशवं वय उज्झन् बाल्यमतिक्रामन्, पुनः किं०, उन्मनाः सन् प्रपठन्, पुनः, अशाठ्यधीर्निर्मायमतिः, पुनः, अशितिपक्षगः शशीव शुक्लपक्षगतचन्द्र इव, किं०, पितृनेत्रकैरवोल्लासी जनकजननीनयनकुमुदोल्लासकृत्, क्रमादनुक्रमेण, वृद्धिं प्राप्नोतीति ॥ ५७ ॥

तातेऽन्यदा सद्विधिना समाधिना
स्वःकामिनीनामतिथित्वमीयुषि ।
वैराग्यवान् वासणकः कुमारराड्
रूपाइसंज्ञां निजगाद मातरम् ॥ ५८ ॥

अन्यदा ताते स्थिराख्ये श्रेष्ठिनि, सद्विधिनाऽनशनादिना, पुनः समाधिना मनोवाक्तनुस्वास्थ्यरूपेण, स्वःकामिनीनां देवाङ्गनानां, अतिथित्वमीयुषि स्वर्गं गते सति, वासाकः कुमारराट्, किं०, वैराग्यवान् सन् रूपाइसंज्ञां मातरं निज-

गादाऽब्रवीत्, यदब्रवीत्तदग्रेतनवृत्ते प्राह ॥ ५८ ॥

भक्तं बुभुक्षार्त इवाहमम्बिके !
दीक्षां जिघृक्षुः शिवशर्मकारणम् ।
मत्वाऽत्मसूनोर्नियमस्थितौ स्थिरं
चेतः प्रचेता वचनं जनन्यवक् ॥ ५९ ॥

हे अम्बिके मातः!, बुभुक्षार्तः पुमान्, भक्तं भोज्यमिव, अहं दीक्षां जिघृक्षुरस्मीति योगः । किं०, शिवशर्मकारणं मोक्षसुखनिदानं, इति आत्मसूनोः स्वपुत्रस्य, नियमस्थितौ दीक्षायां, चेतः स्थिरं मत्वा प्रचेता हृष्टमना जननी, अवक् जगौ । यज्जगौ तदग्रे प्राह ॥ ५९ ॥

त्वं नन्दन ! द्रागनुगंस्यसे मया
घस्रश्रियाऽऽदित्य इव स्फुरत्प्रभः ।
एतां निशम्याऽऽत्ममनोरथोचितां
वाचं स्वमातुर्मुमुदे शिशुर्भृशम् ॥ ६० ॥

हे नन्दन! मया त्वं घस्रश्रिया वासरलक्ष्म्या, आदित्य इव, किं०, स्फुरत्प्रभः लसत्कान्तिः, इदं द्वयोरपि तुल्यं विशेषणम्; अनुगंस्यसे अन्वागमिष्यसे त्वया सार्धमनुप्रव्रजिष्यामीत्यर्थः । एतां आत्ममनोरथोचितां स्वमातुर्वाचं निशम्य शिशुर्वासाख्यः, भृशं मुमुदेऽत्यमोदिष्ट ॥ ६० ॥

रत्नं सुवर्णस्य समीपभाक् श्रियं
धत्तेऽवगत्येति सुतान्विता सती ।
गन्तुं मनः सा स्म दधात्यहम्मदा-
वादे पुरे पूज्यपदाब्जपाविते ॥ ६१ ॥

रत्नं सुवर्णपार्श्वस्थायि सत्, श्रियं शोभां, धत्ते; तथा स्वर्णस्थानीयस्य गुरोः पार्श्वे पुत्ररत्नमिदमर्हतीत्यवगत्य ज्ञात्वा, सा सती रूपाईनाम्नी, अहम्मदावादे पुरे किं०, पूज्यपदाब्जैः श्रीविजयसेनसूरिचरणकमलैः पाविते, गन्तुं मनो दधाति स्माऽकरोत् ॥ ६१ ॥

श्रेष्ठिस्थिराह्वानमहेभ्यभामिनी-
रूपाइसूर्वासिणनामनन्दनः ।
सद्योऽथ हृद्यर्द्धिजनाकुलादिला-
दुर्गाद् गुरोः पार्श्वमगात् सहाऽम्बया ॥६२॥

श्रेष्ठी स्थिराह्वानो यो महेभ्यस्तद्भामिनी भार्या या रूपाईनाम्नी तत्सूस्तत्सुतो वासाभिधानो नन्दनः, अथेलादुर्गादीडरनगरात्, किं०, हृद्यर्द्धयो मनोज्ञसंपत्तयो ये जनास्तैराकुलात् संकीर्णात्, अम्बया सह गुरोः पार्श्वमगाद् राजनगरे प्राप्त इति ॥ ६२ ॥

सौम्याननं स्फारविलोचनद्वयं
दृष्ट्वाऽथ साक्षाज्जयमेनमागतम् ।
इत्यात्मचित्ते निरणायि सूरिणा
भाव्येष शिष्योऽखिलसंघतोषकृत् ॥ ६३ ॥

अथैनं वासकुमारं, आगतं दृष्ट्वा, किं०, सौम्याननं स्मितमुखत्वात् प्रसन्नवदनं, पुनः किं०, स्फारं विस्तीर्णं विलोचनद्वयं यस्य तं, आयतनेत्रत्वात्, साक्षात् प्रत्यक्षं, जयं शक्रपुत्रम्, इवेत्याध्याहार्यं, सूरिणा गुरुणा, आत्मचित्ते इति निरणायि निश्चिक्ये । इतीति किमित्याह—एष शिष्योऽखिलसंघतोषकृद् भावीति ॥ ६३ ॥

पुनर्गुरुणा यदचिन्ति तदाह—

किं दस्रयोरेकतमोऽयमाययौ

किं प्रीतिभृद् मूर्त इवाथवाऽऽत्मभूः ? ।

निध्यायतैनं च मुहुर्मुहुः शिशुं

मेने मनोऽन्तर्मुनिमेदिनीभुजा ॥ ६४ ॥

दस्रयोरश्विनीपुत्रयोर्द्वयोर्मध्यात्, एकतम एकः, किमयमाययौ ?, रूपवत्त्वे हि तयोरुदाहरणं काव्यकल्पलतादौ प्रतीतमिति, अथवा प्रीतिभृत्प्रीतिशाली, आत्मभूः कामः, किं०, मूर्त इति मूर्तिमान्, आययौ ? एनं शिशुं मुहुर्वारं वारं, निध्यायता पश्यता, मुनिमेदिनीभुजा सूरिराजेन, मनोऽन्तश्चित्तान्तः, इति मेनेऽमानि ॥ ६४ ॥

जन्मग्रहैरङ्गगतैश्च लक्षणै-

श्चित्ते व्यचिन्ति व्रतिनायकेन च ।

बालोऽयमुच्चैर्भविता तिथिप्रणी-

र्धिष्ण्येष्विवोल्लासिमहा जनेष्विह ॥ ६५ ॥

च पुनः, जन्मग्रहैर्द्वादशभवनस्थितैर्ग्रहैरुच्चपरमोच्चत्रिकोणादिभिः, पुनः, अङ्गगतैर्लक्षणैर्लाञ्छनमषीतिलकादिभिः, द्वात्रिंशत्संख्यैर्वा दृष्टैः सद्भिः, गुरुणा इति चित्ते व्यचिन्ति—धिष्ण्येषु नक्षत्रेषु, इव तिथिप्रणीश्चन्द्रमा इव, किं०, उल्लासिमहा उल्लासवत्तेजाः, अयं बालो जनेषु उच्चैर्भविता महान् भावीति भावार्थः॥६५॥

मात्रा समं काममिवाब्जवासया

ज्ञात्वा तपस्योद्यतमेनमर्भकम् ।

गुर्वीं गुरुः प्रापदपापदृग् मुदं

दृष्ट्वा शुभं स्वप्नमिवोदये रवेः ॥ ६६ ॥

अब्जवासया लक्ष्म्या, समं काममिव एनं अर्भकं बालकं, मात्रा रूपांनाम्न्या, समं तपस्योद्यतं दीक्षोत्सुकं, ज्ञात्वा गुरुः, किं०, अपापदृग् निरवद्यमतिर्निष्पापदर्शनो वा, गुर्वीं महतीं, मुदं प्रापत्, रवेरुदये शुभं स्वप्नं दृष्ट्वा यथा मुद् भवतीति दृष्टान्तः, यतो 'दृष्टः सूर्योदये स्वप्नः सद्यः फलति' इति नियमात् ॥६६॥

सङ्घोऽनघोऽसावथ वासणं व्रता-

दानोद्यतं वीक्ष्य शिशुं सहाऽम्बया ।

लेभे मुदं स्वर्लतया समं द्रुमं

कल्पं पुलोमारिरिवोद्गमोद्यतम् ॥ ६७ ॥

असौ राजनगरीयः संघः, अथाऽम्बया सह वासणं शिशुं व्रतादानोद्यतं वीक्ष्य मुदं लेभे, यथा कल्पं द्रुमं स्वर्लतया समं कल्पवल्ल्या सह, उद्गमोद्यतं वीक्ष्य पुलोमारिरिन्द्रः, मुदं प्राप्नोतीति ॥ ६७ ॥

सप्तार्चिरम्भोधिकलाङ्कवत्सरे

माघे दशम्यां तुहिनांशुतेजसि ।

द्राग् दीक्षयामास घनैर्महोत्सवैः

सारं कुमारं सममम्बया गुरुः ॥ ६८ ॥

सप्तार्चिषः कृशानवस्त्रयः, अम्भोधयश्च चत्वारः, कलाः षोडश, एभिरङ्कैर्वामगत्या विन्यस्तैर्यः संवत्सरो भवति तस्मिन् सप्तार्चिरम्भोधिकलाङ्कवत्सरे १६४३वर्षे, पुनः, माघे मासि, पुनः, दशम्यां तिथौ, किं०, तुहिनांशोश्चन्द्रस्य तेजो यस्यां तस्यां शुक्लायामिति, पुनर्महोत्सवैः कुमारं, किं०, सारं शृङ्गाररूपाभ्यां

विशेषतः प्रधानम्, अम्बया समं गुरुः श्रीविजयसेनसूरिः, दीक्ष-यामासेति ॥ ६८ ॥

तस्य स्थिराह्वानमहेभ्यजन्मनः
शिष्यस्य निःशेषगुणैकवारिधेः ।
सूरिर्जगल्लोकसुखप्रथाप्रपां
नामाऽथ विद्याविजयेति निर्ममे ॥ ६९ ॥

तस्य स्थिराख्यमहेभ्यपुत्रस्य शिष्यस्य, पुनः किं०, निःशेषगुणैकवारिधेः समस्तगुणार्णवस्य, विद्याविजयेति नाम, किं०, जगल्लोकसुखस्य प्रथायाः प्रपां जगज्जनसौख्यकारित्वात्, सूरिर्निर्ममेऽकरोत् ॥ ६९ ॥

सौरूप्यरूपर्द्धिसमृद्ध उल्लस-
द्विद्यः स विद्याविजयोऽन्तिषन्मणिः ।
भूतं प्रभूतं विनयं सृजन् गुरोः
शास्त्राण्यपाठीदशठो मठो धियाम् ॥ ७० ॥

स विद्याविजयोऽन्तिषन्मणिः शिष्यरत्नं, किं०, सौरूप्यं सुरूपवत्त्वं तद्रूपा या ऋद्धिः, अथवा सौरूप्यं पाण्डित्यं, रूपं च सुन्दराकृतिमत्त्वं तयोर्या ऋद्धिरुत्कर्षस्तया समृद्धः संपन्नः, पुनः, उल्लसन्ती विद्या यस्य सः, पुनः, गुरोर्भूतं सत्यं, पुनः, प्रभूतं भूयिष्ठं, विनयं सृजन् कुर्वन्, पुनः किं०, धियां बुद्धीनां, मठ आश्रयः, पुनः, अशठो निष्कपटः सन्, शास्त्राणि अपाठीदपठत् ॥७०॥

छायाकृदुल्लासपलाशसन्ततेः
स्फूर्जद्यशःपुष्पकलापसंपदः ।
विद्या अवद्यार्तिहृतः स आसदत्

पूज्यांह्रिसेवासुरवीरुधः फलम् ॥ ७१ ॥

स शिष्यः, पूज्यांह्रिसेवासुरवीरुधः गुरुचरणोपास्तिकल्पवल्लेः, किं०, छाया शोभाऽनातपश्च, ततश्छायां करोतीति छायाकृत् य उल्लासश्चित्तानन्दरूपस्तद्रूपा पलाशसन्ततिः पत्रपङ्क्तिर्यस्यास्तस्याश्छायाकृदुल्लासपलाशसंततेः, पुनः, स्फूर्जद्यशोरूपस्य पुष्पकलापस्य प्रसूनजातस्य संपद् यस्यास्तस्याः स्फूर्जद्यशःपुष्पकलापसंपदः, पुनः, अवद्यार्तिहृतः पापपीडापहारिण्याः, विद्याः फलं शास्त्रज्ञानरूपं फलं, आसदत् प्राप्तवान् ॥ ७१ ॥

सौभाग्यभाजोऽहिवदेऽभिधानभृ-
च्छ्राद्धयास्त्रिवेदर्तुहिमांशुवत्सरे ।
एकादशे चन्द्रयुतेऽह्नि फाल्गुने
प्रौढां प्रतिष्ठां विदधेऽथ सूरिराट् ॥ ७२ ॥

अथेत्यस्मिन्नवसरे, तत्रैव राजनगरे, अहिवदेऽभिधानभृत्श्राद्धया अहिवदेनाम्न्याः श्राविकायाः, किं०, सौभाग्यभाजः सुभगत्ववत्याः, गृहे इति शेषः । कस्मिन्, त्रयश्च वेदाश्च ऋतवश्च हिमांशुश्च त्रिवेदर्तुहिमांशवस्तैर्वामगतिगणितैर्यः संवत्सरस्तस्मिन् १६४३ संवत्सरे, पुनरह्नि दिने तिथौ, किं०, एकादशे ११ तिथौ किं०, चन्द्रयुते शुक्ले, पुनर्मासे फाल्गुने, प्रौढां प्रतिष्ठां जिनबिम्बस्थापनां, सूरिराड् विदधेऽकरोत् ॥ ७२ ॥

गन्धारवास्तव्यजनेन्द्र इन्द्रजी-
नामा महेभ्यः सुगुरोर्नमस्कृते ।
अभ्यागमत् प्रीतमना अहम्मदा-
वादं पुरं प्राञ्जलिरभ्यधत्त च ॥ ७३ ॥

गन्धारबन्दिरवास्तव्या ये जनास्तेष्विन्द्रस्तन्मुख्यत्वात्,

इन्द्रजीनामा महेभ्यः, सुगुरोराचार्यपादस्य, नमस्कृते वन्दनाय, अहम्मदावादं पुरं, अभ्यागमत्; च पुनः, प्राञ्जलिः कृताञ्जलिः सन्, अभ्यधत्ताऽवदत् ॥ ७३ ॥

स्वामिन्! महावीरविभोः प्रतिष्ठया
कर्तास्मि जन्म स्वमहं स्फुरत्फलम् ।
तद् मङ्क्षु गन्धारपुरं पवित्रय
स्वैः पादपाथोरुहपांसुभिः प्रभो ! ॥ ७४ ॥

हे स्वामिन् गुरो ! महावीरविभोः प्रतिष्ठयाऽहं स्वं जन्म, किं०, स्फुरत्फलं फलभाग् कर्तास्मि जन्मफलं लातुकामोऽस्मीत्यर्थः । तत् तस्माद्धेतोः, गन्धारपुरं बन्दिरं, स्वैः पादपाथोरुहपांसुभिः हे प्रभो ! त्वं पवित्रयेति ॥ ७४ ॥

हृष्टो महेभ्यव्रजराजहस्तिन-
स्तस्येति वाचा विनयप्रपञ्चया ।
सूरिर्महत्त्वैकपदं क्रमादगाद्
गन्धारमादित्य इवाश्विनीं पुरम् ॥ ७५ ॥

तस्येन्द्रजीनाम्नः, किं०, महेभ्यव्रजराजहस्तिनो व्यवहारिकुञ्जरस्य, वाचा, किं०, विनयस्य प्रपञ्चो यस्यां तया, हृष्टः सन् सूरिस्ततोऽहम्मदावादतश्चलन् क्रमात् अनुक्रमेण, आदित्य इवाऽश्विनीं नक्षत्रं, गन्धारं पुरं नगरीं, किं०, महत्त्वस्य माहात्म्यस्य, सूर्यपक्षे महत्त्वस्योच्चत्वलक्षणस्य पदं स्थानं, अश्विनीस्थितो हि सूर्यो मेषराशिसद्भावादुच्च इति ज्योतिर्विदां मतम्; अगाद् गतवानिति ॥ ७५ ॥

वर्षेऽथ हव्याशनवेदपार्थिवे

ज्येष्ठाह्वमासे दशमे तिथौ सिते ।
शुद्धेऽह्नि तस्यां पुरि सूरिरिन्द्रजी-
गेहे प्रतिष्ठां चरमार्हतोऽकरोत् ॥ ७६ ॥

अथ वर्षे, किं०, हव्याशना अग्नयस्त्रयः, वेदाश्चत्वारः, पार्थिवाः षोडश, एते वामगतिजुषो यत्र तत्र हव्याशनवेदपार्थिवे वर्षे १६४३ प्रमाणे, पुनः, ज्येष्ठाख्ये मासे, पुनः, दशमे तिथौ, किं०, सिते शुक्ले, अथवा सिते शुक्रे वारे सति, पुनः, अह्नि दिने, किं०, शुद्धे धवले, अथवा शुद्धे निर्दोषे दिने, तस्यां पुरि गन्धारनाम्न्यां, इन्द्रजीगेहे चरमाऽर्हतः श्रीवीरस्य, प्रतिष्ठां सूरिरकरोत् ॥ ७६ ॥

अत्रैव वर्षे बहुहर्षवर्षिणि
श्रीस्तम्भतीर्थे नगरे गरीयसि ।
भूयोभिरुल्लासपयःपयोधरै-
रानन्दिताशेषजनेक्षणैः क्षणैः ॥ ७७ ॥

एकादशाख्येऽथ तिथौ तिथिप्रणी-
युक्तेतरे मासि च शुक्रसंज्ञके ।
प्रौढां प्रतिष्ठां पुनरार्हतीं गुरुः
श्राद्धीधनाईवरमन्दिरे व्यधात् ॥ ७८ ॥

अथाऽस्मिन्नेव वर्षे पूर्वकाव्योक्ते संवत्सरे, गन्धारतः क्रमेणागत्य, क्व, श्रीस्तम्भतीर्थे नगरे, किं०, गरीयसि द्रव्यभावाभ्यां महति, भूयोभिर्बहुभिः, उल्लास एव पयः पाथस्तस्य पयोधरैर्मेघैः, पुनः, आनन्दितानि अशेषजनानामीक्षणानि नयनानि यैस्तैः, क्षणैरुत्सवैः, जायमानैरिति शेषः ॥ ७७ ॥ पुनः,

एकादशाख्ये तिथौ, किं०, तिथिप्रणीश्चन्द्रमास्तद्युक्तो धवलस्तस्मादितरः श्याम इति ११ दिनेऽशुक्ले च, पुनः, मासि शुक्रसंज्ञके ज्येष्ठमासे, श्राद्धीधनाईश्वरमन्दिरे गुरुरार्हतीं प्रतिष्ठां, व्यधाच्चक्रे । इति युग्मव्याख्या ॥ ७८ ॥

अत्रैव तीर्थेऽथ विनिर्ममे चतु-

र्मासी समासीनसुखार्थवृत्तिना ।

श्रीसूरिसिंहेन घनर्द्धिसङ्घदृक्-

पाथोजिनीप्रीतिसहस्ररश्मिना ॥ ७९ ॥

अथाऽत्रैवाऽस्मिन्, तीर्थे स्तम्भतीर्थे, श्रीसूरिसिंहेन चतुर्मासी विनिर्ममे कृता, किंविशिष्टेन, समासीना स्थापिता सुखार्था सुखकारिणी वृत्तिराचरणरूपा येन तेन, पुनः किं०, घनर्द्धिः श्रीमान् यः संघस्तस्य दृगेव पाथोजिनी पद्मिनी तस्याः प्रीतौ सहस्ररश्मिना सूर्येणेति ॥ ७९ ॥

अथ स्तम्भतीर्थं गुरुं च वर्णयन् सर्गं चोपसंहरन् कविश्छन्दः परावर्तयाति—

लसदतिशयसंपत्सिन्धुभूसिन्धुरस्य

प्रविशत इह मध्ये स्प्रष्टुमंह्री मुनीन्दोः ।

मम भवाति दुरन्तो विघ्न एषोऽन्तराभू-

रिति जलधिरनिन्ददु यस्य सालं विशालम्॥८०॥

यस्य स्तम्भतीर्थस्य, विशालं विस्तीर्णं, सालं वप्रं, जलधिः समुद्रः, इति हेतोः, अनिन्दत् निन्दाविषयीचकारेत्यन्वयः। पदत्रयेण निन्दाहेतुमेव व्यनक्ति—लसदिति । लसदतिशया या संपत् अथवा लसन्ती याऽतिशयानां संपत् समृद्धिः सैव सिन्धुभूर्नदीभूमिका अर्थाद्रेवा नाम नदीभूस्तत्र सिन्धुरस्य ग-

जस्य, अस्य मुनीन्दोर्गुरोः, अंह्री पादौ, स्प्रष्टुमिह मध्ये प्रविशतः नगरान्तरागच्छतः, मम एष दुरन्तोऽपारः, अन्तराभूर्विघ्नो भवतीति हेतोर्जलधिर्यत्र वप्रं निन्दतीति ॥ ८० ॥

कैलासौकोदिशमिव रुचामीश्वरस्यागतस्य
स्वाहाजानेरिव पवनजप्राज्यसाहाय्यभाजः ।
द्रङ्गं तीर्थं तमधिवसतः श्रीतपागच्छराजः
स्फातिं स्फूर्जत्सवितृसवयाः प्राप पृथ्वीं प्रतापः ॥८१॥

यथा रुचामीश्वरस्य सूर्यस्य, कैलासौकोदिशं कौबेरीं दिशमागतस्य, पुनः, यथा स्वाहाजानेः कृशानोः, किं०, पवनजप्राज्यसाहाय्यभाजः समीरसंबन्धिसाहाय्यशालिनः, तथा तं तीर्थं द्रङ्गं श्रीस्तम्भतीर्थनगरं, अधिवसतः सतः श्रीतपागच्छराजः श्रीविजयसेनसूरेः, प्रतापः, किं०, सवितृसवयाः सूर्यमित्रं, तत्तुल्यत्वात्, पृथ्वीं विशालां, स्फातिं वृद्धिं, प्राप ॥८१॥

क्लेशः पत्रप्रसूनाप्रथिमभव इव स्फीतशीतस्य चाऽसंक्लीलोल्लासे धरायामभिसरति जवाद् याम्यदिग्गन्धवाहे।
नासीद्भीर्दुःस्थताया व्यसनशतसृजो नापि मिथ्यात्विराजः
श्रीतीर्थे स्तम्भतीर्थे लसति सति सहोभाजि नव्यार्षिराजि८२

यथा धरायां भूमौ, याम्यदिग्गन्धवाहे दाक्षिणात्ये वाते, अभिसरति आगच्छति सति, किंलक्षणे, लीलायाः केलेरर्थाद् वसन्तक्रीडाया उल्लासो यस्मिंस्तस्मिन् दक्षिणानिले सति, पत्रप्रसूनानां पृथोर्भावः प्रथिमा न प्रथिमाऽप्रथिमाऽभावः पत्रप्रसूनानामप्रथिमभवः पत्रप्रसूनाप्रथिमभवः कोऽर्थः—पत्रप्रसूनाऽभावभवः क्लेशो यथा न स्यात्, च पुनः, यथा स्फीतशीतस्य क्ले-

शो न स्यात्, किं०, असन् अश्रेष्ठः, वसन्तागमे हि पत्राणां प्रसूनानां चोद्गमः शीतव्यपगमश्च स्यातां, तेन तयोरुपद्रवो न स्यात्, तथा स्तम्भतीर्थे, किं०, श्रीणां तीर्थे क्षेत्रे, अथवा श्रीमत् तीर्थं संघो वाऽर्हच्चैत्यादि यत्र तत्र, नव्यार्षिराजि नवीनाचार्यराजे लसति सति, किं०, सहोभाजि बलवति ज्ञानादिबलशालिनि, दुःस्थताया दारिद्र्यस्य, भीर्नासीत् परद्वीपान्तरात् प्रवहणानां क्षेमेणाऽऽगमात्, पुनः, व्यसनशतसृजः कष्टशतकर्तुः, मिथ्यात्विराजः पूर्वोक्तकल्याणराजनाम्नोऽपि, भीर्भयं नासीत्। अत्र सर्गे केवलमिन्द्रवंशाभिधं छन्दः, "स्यादिन्द्रवंशा ततजैरसंयुतैः, इति लक्षणसद्भावात् । अन्तिमे वृत्तत्रये प्रथमं मालिनीवृत्तम्, द्वितीयं मन्दाक्रान्तावृत्तं, तयोर्लक्षणं तु प्रागुक्तम्। तृतीयं तु स्रग्धरावृत्तम्, तल्लक्षणं यथा–"म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्" इति ॥ ८२ ॥

. . . . . . . . . . . . . . . . . . . . . . . . . . .

इतीति सकलं प्रकटम्

इति सकलसुविहितसभासार्वभौमसमानपण्डितमण्डलीमौलिमौलीयमानपण्डितश्रीकमलविजयगणिसुशिष्यमुख्यपण्डितपुरन्दरप्रख्यपण्डितश्रीविद्याविजयगणिविनेयवाचकश्रीगुणविजयगणिविरचितायां विजयप्रदीपिकाऽभिधानधारिकायां सुखावबोधिकायां श्रीविजयप्रशस्तिमहाकाव्यटीकायां दशमः सर्गोऽर्थतः समर्थितः ॥



अर्हम्

# अथैकादशः सर्गः ।

अथैकादशः सर्गः समारभ्यते, अस्मिन् सर्गे पूर्वं नवमसर्गनिर्मितवर्णनानां भट्टारकश्रीहीरविजयसूरिचरणानां कियच्चरितं रचयति—

मेवातदेशादथ मारवक्ष्मा-

लोलेक्षणालङ्करणीभवन्तः ।

अभ्याययुः श्रीगुरुहीरपादा

देशं सलक्ष्मीकसपादलक्षम् ॥ १ ॥

अथ मेवातदेशात् क्रमेणोग्रसेनपुरे, फतेपुरे, अभिरामावादे, पुनरुग्रसेनपुरे च, इति चतुर्मासकचतुष्टयं विधाय ततश्चलन्तः पुनर्मारवक्ष्मालोलेक्षणाया मरुस्थलीभूमिभामिन्या अलङ्करणीभवन्तः सन्तः, श्रीगुरुहीरपादाः पूज्यश्रीहीरविजयसूरयः, श्रीफलवर्धिपार्श्वनाथयात्रां कृत्वा, सलक्ष्मीकः सश्रीको यः सपादलक्षो नामा नागपुरनगरालङ्कृतो देशस्तं सलक्ष्मीकसपादलक्षं देशं, अभ्याययुरागतवन्त इति ॥ १ ॥

गङ्गाप्रवाहः किमु तापहारी

कल्पद्रुमः किं सकलोपकारी ? ।

श्रीसूरिसिंहः समुपागतोऽसा-

वज्ञायि देशेऽत्र समस्तलोकैः ॥ २ ॥

श्रीसूरिसिंहः, किं०, तापहारी, ततः किं०, गङ्गाप्रवाहः, पुनः किं०, सकललोकानामुपकारी, ततः किं०, कल्पद्रुम इति,

असौ गुरुः, अत्र देशे सवालखनामके देशे, समुपागतः सन्, समस्तलोकैरज्ञायि मेने ॥ २ ॥

आश्चर्यचर्याव्रजवर्यवीर्यै-
भूर्योभिरुत्साहभृदुत्सवौघैः ।
उल्लासवत्यां पुरि नागपुर्यां
चक्रुश्चतुर्मासमृषीशमुख्याः ॥ ३ ॥

आश्चर्यचर्याव्रजस्याऽद्भुतोपलक्षितगमनस्य वर्यं वीर्यं सामर्थ्यं येभ्यस्तैः, पुनः, भूयोभिः बहुभिः, उत्साहभृतां महाजनानामुत्सवौघैः, उल्लासवत्यां नागपुर्यां पुरि नागोरनाम्नि नगरे, ऋषीशमुख्यास्ते पूज्याश्चतुर्मासं चक्रुरिति ॥ ३ ॥

चित्तं चतुर्मासकपारणे श्री-
सूरेर्जगल्लोकहितार्थमिच्छोः ।
सज्जं सुहृज्जन्तुकगूर्जरत्रा-
धात्रीपवित्रीकरणार्थमासीत् ॥ ४ ॥

अथ तच्चतुर्मासकपारणे जाते सति, श्रीसूरेः, किं०, जगल्लोकहितार्थमिच्छोः जगज्जनानुकूल्याभिलाषिणः, चित्तं मनः, सज्जमुत्सुकं, आसीत् । किमर्थमित्याह–सुहृदः सस्नेहा जन्तवो लोका यत्र सा स्वार्थिके कप्रत्यये सुहृज्जन्तुका सश्रद्धलोका या गूर्जरत्राधात्री गूर्जरधरा तस्याः पवित्रीकरणार्थमित्यर्थः ॥४॥

पुण्यात्मिकाभिर्वरदेशनाभि-
रद्भिस्तडित्त्वानिव नुन्नतापः ।
वृद्धिं नयन्नध्वनि बोधिबीजा-
ङ्कूरानघासज्जनसज्जनानाम् ॥ ५ ॥

विध्वंसयन् ध्वान्तमथाऽर्यमेव
जाड्यं हरन्नान्तरमङ्गभाजाम् ।
उद्बोधयन् भव्यपयोजपुञ्जान्
श्रीहीरसूरिर्विजहार भूमौ ॥ ६ ॥

श्रीहीरसूरिः, किं०, तडित्त्वानिव मेघ इव, अद्भिः पानीयैः, पुण्यात्मिकाभिः पवित्राभिः, सुकृद्देशनाभिः नुन्नस्तापो मेघपक्षे ग्रीष्मकालजन्माऽऽतपो येन, गुरुपक्षे कषायादितापो येन सः, पुनः, अध्वनि मार्गे, मेडतादौ, अघे पापे असज्जना दुर्जना इवाऽघासज्जनाः पापप्रणाशकाः अघासज्जनास्ते च सज्जनाः सुहृज्जना-अर्थात् सम्यग्दृशस्तेषां, बोधिबीजाङ्कूरान् वृद्धिं नयन् ॥५॥ पुनः, अर्यमेव सूर्य इव, ध्वान्तं पापरूपं विध्वंसयन्, पुनः, अर्यमेव,अङ्गभाजां जन्तूनां जाड्यं हरन्, पुनः, भव्यपयोजपुञ्जान् संघलोकसरोजव्रजान्, उद्बोधयन् प्रतिबोधयन्, क्रमेण मरुकल्पतरुविरुदधारकसुश्रावकसा०-- ताहाख्यमहाग्रहेण पींपाडनगरादौ मरुभूमौ, विजहार व्यहार्षीत् । इति युग्मव्याख्या ॥६॥

श्रीमत्सुधर्मप्रभुपादपद्म-
सेवाषडंह्रीन् सुभगानुभावान् ।
आगच्छतः श्रीगुरुहीरसूरीन्
जम्बूकुमारानिव नुन्नमारान् ॥ ७ ॥

आकर्ण्य कर्णैकसुधायमान-
नाम्नः सुधाम्नः प्रसरन्महिम्नः ।
आचार्यधुर्योऽजनि धैर्यवर्य-
उत्साहवानच्छमनाः प्रणत्यै ॥ ८ ॥

श्रीहीरसूरीन्, किं०, जम्बूकुमारानिव, किं०, श्रीमान् यः सुष्ठु शोभनो धर्मः सुधर्मः सर्वज्ञोपज्ञश्रमणमार्गरूपः स एव प्रभुः स्वामी तत्पादपद्मसेवायां, जम्बूपक्षे श्रीमान् यः सुधर्मप्रभुः श्रीवीरपञ्चमगणभृत् तत्पादपद्मसेवायां, षडंह्रीन् भ्रमरान्, पुनः किं०, सुभगोऽनुभावो येषां तान् सौभाग्यमयान्, पुनः किं०, नुन्नमारान् निरस्तकन्दर्पान्, अत एव श्रीजम्बूस्वामितुल्यान् ॥७॥ श्रीगुरुहीरसूरीनागच्छतो नागपुराद् गूर्जरत्रां प्रत्यागमिष्यतः, आकर्ण्य श्रुत्वा, किं०, कर्णैकसुधायमाननाम्नः श्रोत्रामृतसमानाऽभिधानान्, पुनः किं०, सुधाम्नः सुप्रतापान्, पुनः किं०, प्रसरन्महिम्नः विस्तीर्णमाहात्म्यान्, आचार्यधुर्यः श्रीविजयसेनसूरिः, किं०, धैर्येण वर्यः, पुनः किं०, अच्छमनाश्चोक्षचेताः, प्रणत्यै श्रीहीरगुरुप्रणमनाय, उत्साहवानजनि उत्कण्ठाभृदभूत् । इदं युग्मव्याख्यानम् ॥ ८ ॥

संसेव्यमानः सकलर्षिमुख्यैः
　श्रीसङ्घसङ्कल्पनकल्पकल्पः ।
आचार्यवर्यः शिवपुर्यहार्य-
　धैर्याननंसीदथ हीरसूरीन् ॥ ९ ॥

अथ गूर्जरदेशतश्चलन् आचार्यवर्यः, किं०, सकलर्षिमुख्यैः संसेव्यमानः, पुनः, श्रीसङ्घस्य सङ्कल्पनानि मनोऽभिलाषास्तत्र कल्पकल्पः सुरद्रुमसमः, तत्पूरकत्वात्, अथ शिवपुरि सीरोहीनगर्यां, हीरसूरीन्, किं०, अहार्यधैर्यान् अजेयपराक्रमान्, अनंसीत् प्राणमत् ॥ ९ ॥

द्वौ सङ्गतौ तत्र पुरेऽन्वभूतां
　शोभामनूचानगणाधिराजौ ।
गाम्भीर्यसारौ गुणरत्नवारौ

पूर्वापरौ नीरनिधी इवेमौ ॥ १० ॥

तत्र पुरे सीरोहीनगरे, द्वौ अनूचानगणाधिराजौ आचार्य-भट्टारकौ, सङ्गतौ मिलितौ सन्तौ, शोभामन्वभूताम् । इवोत्प्रेक्ष्यते–इमौ पूर्वापरौ प्राचीप्रतीचीसत्कौ, नीरनिधी समुद्रौ, किं०, गाम्भीर्येण सारौ, पुनः, गुणरत्नानां वारः समूहो ययोस्तौ ॥१०॥

छायाभृतौ कान्तियुतौ हरन्तौ
स्तोमैर्गवां तामसमोघमुच्चैः ।
भट्टारकाचार्यवरावभातां
द्वौ पुष्पदन्ताविव तत्र पुर्याम् ॥ ११ ॥

तत्र पुर्यां, द्वौ भट्टारकाचार्यवरौ पुष्पदन्ताविव सूर्याचन्द्रमसाविव, अभातां शोभेते स्मेति योगः । किं०, छायाभृतौ शोभाधरौ, पक्षे सूर्यभार्या छाया, चन्द्रस्य छाया प्रतीता, तद्धारिणौ, पुनः, कान्तियुतौ भासंयुतौ, पुनः, गवां वचनानां, पक्षे गवां किरणानां स्तोमैस्तामसमोघं पापव्रातं ध्वान्तव्रातं च हरन्तौ ॥ ११ ॥

धुर्याविमावार्हतशासनैक-
गन्त्र्याः कृते किं विहितौ विधात्रा ? ।
सूरीश्वरौ संगमितौ विलोक्य
लोकैः स्वचित्तान्तरिति व्यचिन्ति ॥ १२ ॥

तौ सूरीश्वरौ संगमितौ मिलितौ, विलोक्य लोकैः स्वचित्तान्तर्मनोऽन्तः, इति व्यचिन्ति । तत् पूर्वार्धेनाह–आर्हतशासनैकगन्त्र्याः कृते जिनशासनरथवाहनाय, किमिमौ विधात्रा धुर्यौ विहितौ कृताविति ॥ १२ ॥

भट्टारकोऽबोधि विनेयमेन-

मत्यन्तमीशं स्वमिवात्मपट्टे ।
पुत्रो मृगेन्द्रस्य मृगेन्द्र एव
यज्जायते तत्किमु चित्रमत्र ? ॥ १३ ॥

एनं विनेयमत्यन्तमीशं गच्छभारनिर्वाहकत्वात् समर्थं, आत्मपट्टे स्वमिव भट्टारको हीरसूरिः, अबोधि ज्ञातवान् । तदेव द्रढयति–मृगेन्द्रस्य सिंहस्य, पुत्रो यद् मृगेन्द्र एव जायते अत्राऽर्थे किमु चित्रं ?, अथवा, अत्र जगति तत्किं चित्रं ? अपि तु नेति ॥ १३ ॥

आसीदनूचानपतेर्महिम्नो
भट्टारकस्थानमुपेयुषः श्रीः ।
स्याद्रस्य यातस्य गुरोः पदे श्री-
धिष्ण्यस्य यत् सा न हि विस्मयोऽत्र ॥१४॥

अनूचानपतेः, किं०, भट्टारकस्थानं पूज्यपादमूलमुपेयुषः, महिम्नो महत्त्वस्य, श्रीरासीज्जाता । अस्य श्रीधिष्ण्यस्य कमलालयस्याऽऽचार्यस्य, गुरोः पदे यातस्य श्रीहीरगुरुपादमूले प्राप्तस्य, यत् सा श्रीर्भवति, अत्र को विस्मयः ? कोऽपि न हि; यतो गुरुपदान्तिके प्राप्तस्य शिष्यस्य श्रीः स्यादेवेति, पक्षे श्रीधिष्ण्यस्य श्रिया युक्तो यो धिष्ण्यः शुक्रस्तस्य श्रीशुक्रग्रहस्य, गुरोः पदे बृहस्पतेः स्थाने मीनराशौ, यातस्य या श्रीरुच्चत्वलक्षणा स्यात्, तत्र विस्मयः कः ? अपि तु न कोऽपीति। एतदर्थसंवादि काव्यं यथा—

" आगतस्य निजगेहमप्यरेर्गौरवं विदधते महाधियः ।
मीनमात्मसदनं समीयुषो भार्गवस्य गुरुरुच्चतां ददौ " ॥१॥

इत्याद्युक्तेः ॥ १४ ॥

भट्टारकाऽऽचार्यपुरन्दराभ्यां
भाति स्म भूयः शिवपुर्यमूभ्याम् ।
पुण्यात्मिकाभ्यां द्युसरित्सतीभ्यां
नित्याऽनघा मूर्तिरिवाऽष्टमूर्तेः ॥ १५ ॥

अमूभ्यां भट्टारकाऽऽचार्यपुरन्दराभ्यां शिवपुरी भूयो भाति स्मेत्यन्वयः । यथा, उत्प्रेक्ष्यते वेति–द्युसरित्सतीभ्यां गङ्गागौरीभ्यां, किं०, पुण्यात्मिकाभ्यां पावनाभ्याम् ; अष्टमूर्त्तेः शम्भोः, मूर्तिरिवेति दृष्टान्तोत्प्रेक्षे ॥ १५ ॥

सीरोहिका श्रीनगरी सुतीर्थं
द्वाभ्यां गुरुभ्यामभवत् तदाऽऽभ्याम् ।
क्षोणीव जह्नूष्णमहःसुताभ्या-
मेकत्वभावेन सुसंगताभ्याम् ॥ १६ ॥

तदा आभ्यां द्वाभ्यां गुरुभ्यां, सीरोहिका नगरी सुतीर्थमभवत् । दृष्टान्तोऽत्र–यथा जह्नूष्णमहःसुताभ्यां गङ्गायमुनाभ्यां, किं०, एकत्वं एकीभावस्तस्य भावेन सत्तया संगताभ्यां मिलिताभ्यां, क्षोणी सुतीर्थं स्यात् तथेति ॥ १६ ॥

आज्ञामथ श्रीतपगच्छभर्तु-
रादाय दामेव जगाम शीघ्रम् ।
श्रीस्तम्भतीर्थं नगरं गरीया-
ञ्श्रीमाननूचानमहीमहेन्द्रः ॥ १७ ॥

अथ श्रीतपगच्छभर्तुः श्रीहीरसूरेः, आज्ञां दामेव मालामिवादाय, शिरसेति शेषः। श्रीमान् अनूचानमहीमहेन्द्रः श्रीआचार्यराट्, श्रीस्तम्भतीर्थं नगरं जगाम शिवपुरीतः स्तम्भतीर्थं

प्राप्तवान्, तत्रत्यश्राद्धमुख्यपरीक्षकवजिआराजिआख्यकारिता-र्हत्प्रतिष्ठाकृत्यायेति शेषः ॥ १७ ॥

इतश्च—

अत्युच्छलद्वारिधिवीचिवीथी-
श्रीभ्राजि गन्धारपुरे प्रधाने ।
श्रीमालिवंशेऽथ परीक्षकाणां
मुख्यो महेभ्योऽभवदाह्लणाह्वः ॥ १८ ॥

इतश्चेति पदेनाधिकारान्तररूपां तयोरुत्पत्तिं वर्णयति—अत्युच्छलन्ती या वारिधेः समुद्रस्य वीचिवीथी कल्लोलमाला तत्श्रीभ्राजि तच्छोभाशालिनि, गन्धारपुरे बन्दिरे, श्रीमालिनां वंशे ज्ञातौ, अथ परीक्षकाणां मुख्य आह्लणनामा महेभ्योऽभवत् ॥ १८ ॥

जिष्णोरिवौजस्विभुजो झषाङ्क-
स्तस्यात्मजोऽभूदथ देह्लणाह्वः ।
तस्यापि पुत्रोऽथ मुहस्यभिख्या-
ख्यातः सतां प्रीतिपदं बभूव ॥ १९ ॥

अथ तस्यात्मजो देह्लणनामाऽभूत् । कः कस्येवेत्याह—जिष्णोर्नारायणस्य, झषाङ्को मीनाङ्क इव । किं०, ओजस्विनौ बलिष्ठौ भुजौ यस्य सः, मीनाङ्कपक्षे औजस्विभुज इव, जगज्जेतृत्वादिति । अथ तस्यापि पुत्रो मुहसी इति अभिख्यया ख्यातः मुहस्यभिख्याख्यातः, पुनः किं०, सतां प्रीतिपदं सज्जनानां स्नेहपात्रं बभूव ॥ १९ ॥

सूनुस्तदीयः समराभिधोऽभूत्
तस्याङ्गजन्माऽजनि चाऽर्जुनाह्वः ।

भीमाभिधोऽभूत् तनयश्च तस्य
जाताऽस्य लालूरिति नाम जाया ॥ २० ॥

तदीयः सूनुः समराख्यस्तस्याऽङ्गजन्माऽर्जुनाख्योऽजनि जातः, तस्यार्जुनस्य तनयो भीमाऽऽख्योऽभूत्, अस्य च लालू-रितिनाम्नी जाया पत्नी जाता ॥ २० ॥

यद्वज्जयः शक्रपुलोमपुत्र्योः
पुत्रस्तयोः श्रीजसिआभिधोऽभूत् ।
तस्य स्मरस्येव रतिर्बभूव
भार्या सदाऽऽर्या जसमुख्यमादेः ॥ २१ ॥

यद्वद् यथा, शक्रपुलोमपुत्र्योरिन्द्रेन्द्राण्योः, जयो नामा सुतः, तथा तयोः श्रीजसिआख्यः पुत्रोऽभूत्। तस्य भार्या जस-मुख्यमादेः जसमादेनाम्नी, बभूवः रतिरिव यथा स्मरस्येवेति दृष्टान्तः ॥ २१ ॥

स्कन्दाऽऽखुयानाविव शम्भुगौर्योः
श्रेष्ठौ तयोर्द्वौ तनयावभूताम् ।
ज्यायान् महेभ्यो वजिआभिधानः
श्रीराजिआह्वश्च ततो लघीयान् ॥ २२ ॥

यथा शम्भुगौर्योरीश्वरपार्वत्योः, स्कन्दाऽऽखुयानौ कार्ति-केयगणेशौ पुत्रौ, तथा तयोर्जसिआजसमादेनाम्नोः, द्वौ तनया-वभूताम्। तयोर्नाम्नी प्राह--ज्यायान् वृद्धो वजिआभिधानो महे-भ्यः, च पुनर्लघीयान् राजिआह्व इति ॥ २२ ॥

आभ्यां सुताभ्यां मुदमाप पित्रो-
श्चित्तं चिरं चित्तजशोभनाभ्याम् ।

सद्योऽश्विनीभास्करयोरिवर्भु-
भर्तुर्भिषग्भ्यामतिरागवद्भ्याम् ॥ २३ ॥

आभ्यामेताभ्यां, सुताभ्यां किं०, चित्तजः स्मरस्तद्वत् शोभनाभ्याम्, पित्रोर्जननीजनकयोः, चित्तं मुदमाप । दृष्टान्तो यथा—अश्विनीभास्करयोः ऋभुभर्तुः शक्रस्य भिषग्भ्यामश्विनीपुत्राभ्याम्, किं०, अतिरागवद्भ्यां तयोर्भृशं स्नेहित्वादिदं विशेषणम्, स्ववैद्याभ्यां यथाऽश्विनीसूर्ययोश्चित्तं मुदितं तथा ताभ्यां तयोरिति ॥ २३ ॥

ज्येष्ठस्य जाया विमलाऽभिधाऽभू-
दन्यस्य चासीत् कमलाऽभिधाना ।
भ्रात्रोर्मिथः प्रीतिरभूद् वसन्त-
संकल्पयोन्योरिव चातिबह्वी ॥ २४ ॥

ज्येष्ठस्य वजिआख्यस्य जाया भार्या विमलाऽऽख्याऽभूत्, अन्यस्य च लघोः कमलाऽऽख्याऽभूत् । च पुनः, तयोर्भ्रात्रोर्वसन्तसङ्कल्पयोन्योर्मधुमन्मथयोरिव, मिथः अतिबह्वी प्रीतिरभूदिति ॥ २४ ॥

श्रीचक्रपाणेरिव पुष्पपत्री
ज्येष्ठस्य पुत्रोऽजनि मेघजीति ।
एतः स्म गन्धारपुरादथ द्वौ
बन्धू च खम्भाइतबन्दिरं तौ ॥ २५ ॥

श्रीचक्रपाणेर्नारायणस्य यथा पुष्पपत्री कन्दर्पस्तथा ज्येष्ठस्य वजिआख्यस्य पुत्रो मेघजी इति नामाऽजनि । अथाऽन्यदा गन्धारपुरात् तौ द्वौ बन्धू खम्भाइतबन्दिरं एतः स्म आगतौ ॥ २५ ॥

तत्रापि तावात्मभुजार्जितानां
श्रीणां फलं धर्मनियोजनाख्यम् ।
सम्यक् समीहाविषयं सृजन्तौ
क्षेत्रेषु वित्तं वपतः स्म नित्यम् ॥ २६ ॥

तौ भ्रातरौ, तत्रापि स्तम्भतीर्थे, आत्मभुजार्जितानां स्वहस्तोपार्जितानां, श्रीणां धर्मनियोजनाख्यं धर्मकर्मव्ययकरणलक्षणं, फलं समीहाविषयं सृजन्तौ वाञ्छागोचरीकुर्वन्तौ, सप्तसु नवसु वा क्षेत्रेषु, वित्तं वपतः स्मेति ॥ २६ ॥

त्यागैः सरागैः सुकृतप्रियेषु
पात्रेषु दीनेषु दयात्मभिश्च ।
आसीत् प्रसिद्धिः प्रथमा नगर्यां
तस्यां तयोर्बान्धवयोश्च बह्वी ॥ २७ ॥

सुकृतप्रियेषु पुण्यात्मसु, पात्रेषु त्यागैर्दानैः, किं०, सरागैर्धर्मरागयुक्तैर्भक्तिदानैरिति, च पुनः, दीनेषु जनेषु दयाऽऽत्मभिर्दयादानैरिति, तस्यां नगर्यां त्रम्बावत्यां, तयोर्बान्धवयोः प्रसिद्धिः ख्यातिः, किं०, बह्वी, अत एव प्रथमा मुख्या, आसीत् ॥ २७ ॥

ख्यातिर्भुवो भर्तुरकब्बरस्य
पर्षन्मृगाक्षीस्तनहारिहारः ।
जज्ञे पयोधौ च तयोः फरङ्ग-
देशेशसंसल्ललनाललाम ॥ २८ ॥

तयोर्भ्रात्रोः, अकब्बरस्य भुवो भर्तुर्भूपतेः श्रीअकब्बरशाहेः, पर्षन्मृगाक्षीस्तनेषु हारी मनोहरो हारस्तत्तुल्या ख्यातिरभूत्, च

पुनः, फरङ्गदेशेशस्य परतकालपातिशाहेः संसल्ललनायाः सभा-भामिन्याः, ललाम तत्तुल्या ख्यातिरभूत्; एतावता कोऽर्थः ?, स्थलपथे श्रीअकब्बरपातिशाहिसभायां, पयोधौ जलपथे च फरङ्गीश्वरपर्षदि, तयोः प्रसिद्धिर्जातेति ॥ २८ ॥

संसारनीराकरकुम्भजन्मा
धर्मस्तथाऽऽभ्यां बहु मन्यते स्म ।
हन्ति स्म शत्रू अपि नैष जातु
भ्रात्रोस्तयोरत्र यथाऽर्थकामौ ॥ २९ ॥

आभ्यां भ्रातृभ्यां, संसारनीराकरे भवार्णवे, कुम्भजन्माऽगस्तिस्तच्छोषकत्वात् भवार्णवशोषकृद् धर्मस्तथा बहु मन्यते स्म यथा तयोर्भ्रात्रोरर्थकामौ एष धर्मो न हन्ति स्म, कथं, जातु कदाचिदपि, अर्थकामौ किं०, शत्रू अपि विरोधिनावपि; एतावता तयोस्त्रयोऽपि पुरुषार्थाः स्वाधीना इति सूचितम् ॥ २९ ॥

रूपेण दस्राविव पुष्पकाल-
कामाविव स्निग्धतया हताघौ ।
द्वौ भ्रातरौ श्रीसुमनोऽभिरामौ
हृद् जह्रतुस्तौ युगपज्जनानाम् ॥ ३० ॥

तौ हताऽघौ गतपापौ, द्वौ भ्रातरौ रूपेण दस्राविवाश्विनीनन्दनाविव, पुनः, पुष्पकालकामाविव स्निग्धतया सस्नेहत्वेन वसन्तस्मराविव, यतः किं०, श्रीसुमनोभिरामौ श्रिया युक्तैः सुमनोभिः पुष्पैर्वसन्तस्य सर्वस्वरूपैः कामस्य च शस्त्ररूपैरभिरामौ मनोज्ञौ दस्रौ, किं०, सुमनोभिस्सुरैरिति, तौ किं०, श्रीमत्सज्जनैः श्रीमत्पण्डितैश्चाभिरामौ जनानां हृद् जह्रतुरिति ॥ ३० ॥

श्रीहीरसूरीश्वरपट्टभानो-
गोंभिर्गुरोः फुल्लमनःपयोजौ ।
अन्येद्युरित्थं सहजौ महेभ्यौ
तौ चिन्तयाञ्चक्रतुरात्मचित्ते ॥ ३१ ॥

गुरोः, किं०, श्रीहीरसूरीश्वरपट्टे भानोस्तदुद्द्योतकत्वात्, गोभिर्वाग्भिर्मयूखैश्च, फुल्लं विनिद्रं मनःपयोजं ययोस्तौ, तौ सहजौ सोदरौ, महेभ्यौ अन्येद्युरेकदा, आत्मचित्ते चिन्तयाञ्चक्रतुरिति ॥ ३१ ॥

चैत्यप्रतिष्ठाप्रतिमादिपुण्य-
क्षेत्रेषु बीजं धनरूपमुप्तम् ।
सूत्वा यशःपुञ्जपरागिपुष्पं
सद्यो महानन्दफलं प्रसूते ॥ ३२ ॥

चैत्यप्रतिष्ठाप्रतिमादिपुण्यक्षेत्रेषु जिनभवनाबिम्बस्थापनाऽर्हत्प्रतिमाप्रमुखसप्तक्षेत्रेषु, धनबीजमुप्तं सत् यशःपुञ्ज एव परागो यस्मिंस्तद् यशःपुष्पं सूत्वा प्रसूय, महानन्दफलं मुक्तिफलं, प्रसूते ॥ ३२ ॥

चैत्यं प्रतिष्ठा प्रतिमाऽर्हतां यत्
त्यागश्च पात्रेषु विधीयते यत् ।
संपद्वरस्याऽऽत्मभुजार्जितस्य
नित्यं निधिक्ष्मा भणितेयमेव ॥३३॥

च पुनः, चैत्यं जिनौकः, पुनस्तत्प्रतिष्ठा, पुनरर्हतां प्रतिमा, च पुनः, पात्रेषु साधुसाध्वीश्राद्धश्राद्धीरूपेषु, यत् त्यागो विधीयते

आत्मभुजोपार्जितस्य संपद्भरस्य लक्ष्मीसमूहस्य, निधिक्ष्मा निधानोर्वी धनन्यासार्हस्थानभूरिति, इयमेव भणितेति भावः॥३३॥

मत्वेति चित्तान्तरुदात्तचित्तौ
तौ तत्र पुर्यां प्रथितात्मवित्तौ ।
सज्जौ सलज्जौ सहजौ महोभि-
र्जातौ ततः कारयितुं प्रतिष्ठाम् ॥ ३४ ॥

इति चित्तान्तर्मत्वा, तौ किं०, उदात्तचित्तौ उदारमानसौ, पुनः किं०, तत्र पुर्यां अम्बावत्यां, प्रथितात्मवित्तौ प्रथितस्वधनौ, अथवा प्रथितात्मसु ख्यातिमत्सु वित्तौ ख्यातौ, पुनस्तौ सहजौ भ्रातरौ किं०, सलज्जौ, ततः कारणात् प्रतिष्ठां कारयितुं सज्जौ जातौ, महोभिरुत्सवैरिति ॥ ३४ ॥

अथ दशभिः काव्यैः प्रतिष्ठोत्सवं वर्णयति—

दानान्यदीयन्त यथार्थमर्थि-
सार्थाय ताभ्यां धनकाञ्चनानि ।
शीघ्रं यथेमौ स्वसुवर्णरूपौ
श्रीदस्वरद्री दरितौ स्वनाशात् ॥ ३५ ॥

ताभ्यां भ्रातृभ्यां, अर्थिसार्थाय याचकनिकराय, यथार्थं अर्थस्य प्रयोजनस्याऽनतिक्रमेण यथार्थं यथेच्छम्, तथा धनकाञ्चनानि दानानि स्वसुवर्णदानानि, अदीयन्त दत्तानीति, यथा इमौ श्रीदस्वरद्री धनदमेरू, किं०, स्वसुवर्णरूपौ धनकनकमयौ, स्वनाशादात्मनाशाद्, दरितौ चकितौ, दूरे प्रनष्टाविति गम्यम् ॥३५॥

नानाऽन्नपक्वान्नभरैर्जनौघा-
आभ्यामभोज्यन्त तथा यथेच्छम् ।

तेषां यथा स्वर्द्रुमयुग्मधर्मि-

वीक्षासमीहा शिथिलीबभूव ॥ ३६ ॥

आभ्यां नानाऽन्नपक्वान्नभरैस्तथा यथेच्छं जनौघा अभोज्यन्त भोजिताः, यथा तेषां भोज्यकृतां, स्वर्द्रुमयुग्मधर्मिवीक्षायाः समीहा कल्पवृक्षयुगलिकदिदृक्षा, शिथिलीबभूवेति ॥ ३६ ॥

दिव्यैर्दुकूलैः परिधाप्यते स्म

संघस्तथाऽऽभ्यां च सहोदराभ्याम् ।

व्यापारवृत्तिर्वसनैकमूला

मन्दा यथाऽजायत दौष्यिकाणाम् ॥ ३७ ॥

च पुनः, तथाऽऽभ्यां सहोदराभ्यां दिव्यैर्दुकूलैः संघः परिधाप्यते स्म, यथा दौष्यिकाणां वस्त्रव्यापारिणां, वसनैकमूला व्यापारवृत्तिर्वस्त्रव्यापारा जीविका, मन्दा जातेति॥३७॥

पौराय तस्यां पुरि दीयते स्म

ताभ्यां तदा श्रीफलपङ्क्तिरिद्धा ।

पूर्वापराभ्यां सलिलेश्वराभ्यां

पीयूषपूर्णा कलसाऽऽवलीव ॥ ३८ ॥

पुनः, तस्यां पुरि पौराय पुरीलोकाय, तदा तत्रोत्सवे, ताभ्यामिद्धा दीप्ता, श्रीफलानां लोकभाषया नालिकेराणां पङ्क्तिः श्रेणिः, दीयते स्म दत्ता। उत्प्रेक्ष्यते–पूर्वापराभ्यां सलिलेश्वराभ्यां समुद्राभ्यां, पीयूषपूर्णाऽमृतभरिता, कलसाऽऽवलीवेति ॥ ३८ ॥

सौधे तयोर्मङ्गलमञ्जुलानि

गीतान्यगीयन्त च गायनौघैः ।

किं पुष्पकालावनिपालराज्ये
पुंस्कोकिलैरूर्जितकूजितानि ? ॥ ३९ ॥

पुनः, तयोः सौधे मङ्गलमञ्जुलानि कल्याणकारीणि, गीतानि गायनौघैरगीयन्त गानविषयीकृतानि । किमित्युत्प्रेक्षायाम्—पुष्पकालावनिपालस्य वसन्तभूपते राज्ये पुंस्कोकिलैः कोकिलवरैः, ऊर्जितानि दीप्तानि कूजितानि गीतानीति ॥ ३९ ॥

सत्कारपात्रास्तिकशस्तमेतद्-
गेहं महामण्डपमञ्जु रेजे ।
मुक्ताफलश्रेणिलतावितान-
रम्याऽमराढ्या मघवत्सभेव ॥ ४० ॥

पुनः, एतयोर्गेहमेतद्गेहम्, किं०, सत्काराणां तत्प्रदत्तस्वर्णमौक्तिकमुद्रिकादीनां पात्रीभूता ये आस्तिकाः साधर्मिकश्रद्धालवस्तैः शस्तं श्लाघ्यम्, पुनर्महामण्डपेन मञ्जु रम्यं, रेजे रराज। इवोत्प्रेक्ष्यते—मुक्ताफलानां श्रेणिभिः पुनस्तेषामेव लताभिः, पुनस्तेषां वितानैर्मुक्ताफलश्रेणिभिर्मुक्ताफललताभिर्मुक्ताफलवितानैश्च हारविशेषै रम्या मनोहरा येऽमरा देवास्तैराढ्या, मघवत्सभेव सुधर्मेवेति ॥ ४० ॥

इत्यादिभिर्भूरिभिरुत्सवैस्त-
द्गेहं जगाहे बहुमञ्जिमानम् ।
वाताभिघाताद् बहलीभवद्भि-
स्तुङ्गैस्तरङ्गैर्जलधेरिवाम्भः ॥ ४१ ॥

इत्यादिभिर्व्यावर्णितलक्षणैरुत्सवैः तयोर्गेहं तद्गेहं, बहुमञ्जिमानं भूरिरामणीयकं, जगाहे मनोज्ञतामापेत्यर्थः । यथा—

वाताभिघातात् पवनाहतेः, बहलीभवद्भिर्दृढीभवद्भिः, तुङ्गैस्तरङ्गैर्जलधेः समुद्रस्य, अम्भः पानीयमिवेति दृष्टान्तः ॥ ४१ ॥

सोल्लासचेतस्यतुलैर्विलासै-
मेंदस्विनीच्छातिगतुष्टिपुष्टे ।
संघेऽनघे कुर्वति धर्मकर्म-
कल्लोलि कृत्यं सतताऽतिसत्यम् ॥ ४२ ॥

शुद्धे शराम्भोधिकलामितेऽब्दे
तिथ्यामुतथ्याऽनुजभामितायाम् ।
पीयूषपादत्विषि मासि शुक्रे
दोषोज्झितेऽह्न्यनघे च लग्ने ॥ ४३ ॥

आनन्दकन्दाङ्कुरनीरवाहः
सूरिर्व्यधाद् दत्तजगत्प्रमोदाम् ।
श्रीपार्श्वनाथस्य च वर्धमान-
भर्तुश्च शम्भ्वोरुभयोः प्रतिष्ठाम् ॥ ४४ ॥

पुनः अनघे पुण्यात्मनि, संघे श्रमणश्रमणीश्राद्धश्राद्धीरूपे, पुनः किं०, सोल्लासचेतसि मुदितमनसि, पुनरतुलैर्निरुपमैः, विलासैः पात्रनृत्यादिभिः, मेदस्विनि मेदुरिते सति, पुनः, इच्छाऽतिगाऽतिवह्नी या तुष्टिस्तया पुष्टे सति, पुनः, संघे धर्मकर्मकल्लोलि सहर्ष सुकृतकृत्यं कुर्वति सति, किं०, सततमतिसत्यं सम्यक् ॥ ४२ ॥ पुनः, शुद्धे गुर्वस्तशुक्रास्ताद्यभावाद् निर्मले, अब्दे वर्षे, पुनः किं०, शराः पञ्च, अम्भोधयश्चत्वारः, कलाः षोडश, एभिरङ्कैर्वामगत्या गणितैर्मिते १६४५ वर्षे, पुनस्तिथ्यां किं०, उतथ्यानुजो बृह-

स्पतिस्तस्य भाः किरणा द्वादश तन्मितायां द्वादश्यामिति, पुनः, शुक्रे ज्येष्ठे मासि, किं०, पीयूषपादस्य चन्द्रस्य त्विड् यत्र तत्र शुक्लपक्षे, च पुनः, लग्ने राश्युदये, अहनि च दिने, दोषोज्झिते निर्दोषे, अत एवाऽनघे मनोज्ञे ॥ ४३ ॥ सूरिः श्रीविजयसेनाचार्यधुर्यः, किं०, आनन्दकन्दाङ्कुरे हर्ष-कन्दलोद्गमे नीरवाहो मेघः, श्रीपार्श्वनाथस्य वक्ष्यमाणचिन्ता-मणीतिनामकस्य, पुनः, श्रीवर्धमानभर्तुर्वीरजिनस्य च, उभयो-र्द्वयोः स्वामिनोः, प्रतिष्ठाम्, किं०, दत्तजगत्प्रमोदां वितीर्ण-विश्वहर्षां, व्यधादकरोत् । त्रयाणां व्याख्येति ॥ ४४ ॥

संस्थापितान्यन्यतमानि पूज्यै-
बिम्बानि तस्यां चतुरस्त्रिकायाम् ।
भान्ति स्म सीमन्धरमुख्यतीर्थ-
नाथाः समभ्येयुरिवाद्य साक्षात् ॥ ४५ ॥

तस्यां चतुरस्त्रिकायामन्यतमान्यपि बिम्बानि जिनप्रति-मालक्षणानि, पूज्यैः संस्थापितानि प्रतिष्ठितानि भान्ति स्म । इवोत्प्रेक्ष्यते—प्रतिमाऽप्रतिमरूपाऽतिशयच्छलेनाद्य साक्षात्सीम-न्धरप्रमुखतीर्थनाथाः समभ्येयुरिति ॥ ४५ ॥

क्लृप्तप्रातिष्ठोऽद्भुतजातरूप-
रूपैर्गुरुः पूजित आबभासे ।
मध्यन्दिने श्रान्तिवशावरूढै-
र्घर्मांशुबिम्बैरिव मेरुसानुः ॥ ४६ ॥

क्लृप्तप्रतिष्ठः कृतजिनप्रतिमास्थापनः, गुरुः; किं०, अद्भु-तैर्जातरूपरूपैः स्वर्णरूप्यरूपकैर्नाणकविशेषैः, पूजितः सन्, आबभासेऽशुभत्, घर्मांशुबिम्बैः सूर्यमण्डलैः, किं०, मध्यन्दिने

मध्याह्ने, श्रान्तिवशादवरूढैरुत्तीर्णैः, मेरुसानुः सुमेरुशृङ्गमिवेति दृष्टान्तोत्प्रेक्षे ॥ ४६ ॥

अस्तोकलोके हितचिन्तितार्थ-

चिन्तामणेर्भूर्यनुभावधाम्नः ।

श्रीपार्श्वनाथस्य जगत्प्रसिद्धं

नामाऽथ चिन्तामणिरित्यकारि ॥ ४७ ॥

श्रीपार्श्वनाथस्य; किं०, अस्तोकलोके भूरिजने, हिता ये चिन्तितार्थाः कल्पितपदार्थास्तत्र चिन्तामणेश्चिन्तारत्नस्य, तत्पूरकत्वात्, पुनः, भूर्यनुभावस्य प्रभूतप्रभावस्य धाम्नो वेश्मनः, नाम; किं०, जगत्प्रसिद्धं चिन्तामणिरित्यकारि, सूरिणेति शेषः ॥ ४७ ॥

पद्मावतीपन्नगपत्युपास्ति-

पूजाप्रशस्ता मरुतां लतेव ।

दत्ते कुवेदाऽङ्गुलिसंमितैषा

चिन्तामणेर्मूर्तिरभीप्सितानि ॥ ४८ ॥

पद्मावती शासनाधिष्ठायिका देवी, पन्नगपतिर्धरणेन्द्रस्तन्निर्मिते ये उपास्तिपूजे; उपास्तिपूजयोः कः प्रतिविशेषः?, इत्याह—उपास्तिर्नित्यसेवारूपा, पूजा च कादाचित्की पुष्पार्चादिरूपा, ताभ्यां प्रशस्ता श्रेयसी, चिन्तामणेः पार्श्वस्य, मूर्त्तिः; किं०, कुः पृथ्वी एका, वेदाश्चत्वारस्तेनाङ्कवामगत्या कुवेदसंमितानि ४१ यानि अङ्गुलानि तैः संमिता एकचत्वारिंशदङ्गुलीयेति, अभीप्सितानि वाञ्छितानि, मरुतां सुराणां, लतेव दत्ते ॥४८॥

दृष्ट्यैव विध्यापयितुं दुरन्ता-

तङ्कप्रदीपानिव सप्त सर्पान् ।

य: संततं सप्तफणान् दधान-

आभाति चिन्तामणिपार्श्वनाथः ॥ ४९ ॥

यश्चिन्तामणिपार्श्वनाथः सप्त फणान् दधानः सन्, आभातीत्यन्वयः । इवोत्प्रेक्ष्यते—दुरन्ता ये आतङ्का रोगजलज्वलनादयः सप्त भयलक्षणास्तद्रूपान् प्रदीपान् दृष्ट्या विध्यापयितुं सप्त सर्पानिवाऽऽदधानोऽस्तीति ॥ ४९ ॥

लोकेषु सप्तस्वपि सुप्रकाशं

किं दीप्रदीपा युगपद् विधातुम् ? ।

यन्मूर्ध्नि सप्ताऽत्र फणा विभान्ति

रत्नत्विषा ध्वस्ततमःसमूहाः ॥ ५० ॥

यन्मूर्ध्नि सप्त फणाः, किं०, रत्नानां फणमणीनां त्विषा ध्वस्तस्तमःसमूहो यैस्ते विभान्तीत्यन्वयः । किमिवोत्प्रेक्ष्यते—सप्तसु लोकेषु सुप्रकाशं विधातुं दीप्रदीपा इति भावः ॥ ५० ॥

आराधितः पूजित ईक्षितश्च

सूते मनस्कामितमर्थसार्थम् ।

मन्दारशाखीव लसत्फलाढ्य-

श्चिन्तामणिर्यः सुमनोमनोज्ञः ॥ ५१ ॥

आराधितः सेवितः, पूजितः पुष्पादिभिः, ईक्षितो विलोकितो नेत्राभ्यां, यश्चिन्तामणिः पार्श्वः, मन्दारशाखीव सुरतरुरिव, किं०, लसद्भिः फलैः पुण्यफलैश्चतुस्त्रिंशदतिशयादिभिः, अथवा—ऐहिकामुष्मिकमनोरथपूर्तिकरणरूपैः फलैराढ्यः, पुनः किं०, सुमनोभिर्देवैः पुष्पैर्वा मनोज्ञः, मनस्कामितमर्थसार्थं सूत इति ॥ ५१ ॥

चिन्तामणिं पार्श्वमधीशमेनं
दृष्ट्वा जनानां मुदमाप चेतः ।
तिग्मद्युतेर्बिम्बमिवाविलम्बं
वृन्दं रथाङ्गाह्वविहङ्गमानाम् ॥ ५२ ॥

एनं चिन्तामणिं पार्श्वमधीशं दृष्ट्वा जनानां चेतो मुदमाप हर्षं प्राप्नोति स्मेत्यन्वयः । उत्तरार्धेन दृष्टान्तमाह—अविलम्बं शीघ्रं, तिग्मद्युतेर्भानोः, बिम्बं दृष्ट्वा रथाङ्गाह्वविहङ्गमानां चक्रवाकपक्षिणां, वृन्दं यथा मुदमाप्नोतीति ॥ ५२ ॥

दीप्रादराभ्यामथ सोदराभ्या-
माभ्यां प्रदत्ताङ्गिमनःप्रमोदम् ।
चिन्तामणेश्चैत्यमकारि शक्र-
पर्षत्प्रजेवाद्भुतपुण्यपात्रम् ॥ ५३ ॥

अथ, आभ्यां सोदराभ्याम्, किं०, दीप्रादराभ्यां उद्योगवद्भ्यां, प्रदत्ताङ्गिमनःप्रमोदं कृतप्राणिचित्ताह्लादं, पुनः, अद्भुतपुण्यस्य पात्रं योग्यं वा स्थानं वा, चिन्तामणेः पार्श्वनाथस्य, चैत्यमकारि कारितम् । उत्प्रेक्ष्यते—शक्रपर्षद इन्द्रसभायाः सुधर्मायाः प्रजेवाऽपत्यमिवेति भावार्थः ॥ ५३ ॥

किं राजधानी सुकृताभिधान-
भूपस्य सोल्लासविलासवेश्म ?।
पार्श्वप्रभोरेतदुदारचित्रं
धत्ते श्रियं कामदनाम चैत्यम् ॥ ५४ ॥

पार्श्वप्रभोः कामदं नाम्ना चैत्यम्; किं०, उदाराणि स्फाराणि चित्राणि यत्र तत्, श्रियं शोभां धत्ते इत्यन्वयः । सुकृ-

ताभिधानस्य भूपस्य धर्मरूपभूपस्येति, किं राजधानी ?, किं०, सोल्लासस्य विलासस्य लीलाया वेश्म गृहम् ॥ ५४ ॥

उत्तम्भिता इत्यादेरारभ्य त्रयोदशभिर्वृत्तैस्तस्य चैत्यस्य तद्गतभूमिगृहस्य च वर्णनं यथा—

उत्तम्भिता द्वादश यत्र चैत्ये
स्तम्भा विभान्त्युल्बणमूर्धमूलाः ।
स्तम्भस्वरूपाः प्रभुपार्श्वपादो-
पास्त्यै समेता इव सभ्यमुख्याः ॥ ५५ ॥

यत्र चैत्ये द्वादश स्तम्भाः, किं०, उत्तम्भिता उर्ध्वीकृताः पुनः किं०, उल्बणानि उत्कटानि अच्छेद्यत्वात्, मूर्धमूलानि शिरःप्रदेशभूतानि येषां ते, विभान्तीत्यन्वयः । इवोत्प्रेक्षायाम्— प्रभुपार्श्वपादयोरुपास्त्यै सेवायै, स्तम्भरूपा द्वादश सभानां पतयो द्वादशापि सभ्यमुख्या आगता इवेति ॥ ५५ ॥

द्वाराणि षड् दृग्दृशि·दत्तशैत्ये
चैत्ये विभान्त्युत्तमतोरणानि ।
मार्गा इवर्तुद्युसदां प्रवेष्टुं
पार्श्वप्रभूपास्तिहृदां समेषाम् ॥ ५६ ॥

यत्र चैत्ये षड् द्वाराणि; किं०, उत्तमतोरणानि, चैत्ये किं०, दृग्दृशि द्रष्टृजननेत्रे, दत्तं शैत्यं येन, तत्र विभान्ति । इवो-त्प्रेक्ष्यते—समेषां सर्वेषां, ऋतुद्युसदां षड्ऋतुदेवानां, किं०, पार्श्व-प्रभोरुपास्तौ सेवने हृद् येषां तेषां, प्रवेष्टुं प्रवेशकृते, मार्गा इवेति ॥ ५६ ॥

द्वौ द्वारपालौ तपनीययष्टी
चैत्येऽत्र भूयःसुभगौ विभातः ।

पूर्वापरेशाविव वज्रपाश-

पाणी प्रभुं पार्श्वमुपेयिवांसौ ॥ ५७ ॥

अत्र चैत्ये द्वौ द्वारपालौ प्रतीहाररूपौ, किं०, भूयः-सुभगौ भृशं रम्यौ, पुनः किं०, तपनीयस्य सुवर्णस्य यष्टि-दण्डो ययोस्तौ, विभातः शोभेते, पूर्वेशश्च अपरेशश्च पूर्वापरेशौ शक्रवरुणौ, किं०, वज्रं च पाशश्च पाणौ ययोस्तौ वज्रपाश-पाणी, प्रभुं द्रष्टुमुपेयिवांसौ संप्राप्तौ, इवोत्प्रेक्षायामिति ॥५७॥

सप्ताऽतिभान्ति प्रसभाभिरामा-

श्चैत्येऽत्र देवात् कुलिका विशालाः ।

स्वर्गात् प्रभुं द्रष्टुमिवागताना-

मास्यानिवासा द्युसदामृषीणाम् ॥ ५८ ॥

अत्र चैत्ये सप्त देवात् कुलिका देवकुलिकाः, अतिभान्ती-त्यन्वयः । इवोत्प्रेक्ष्यते–प्रभुं द्रष्टुं स्वर्गादागतानां द्युसदां ऋषीणां सप्तर्षीणां, आस्यानिवासा आसनस्थानानीवेति ॥५८॥

अक्षाक्षिसंख्या भगवद्विहारे

भान्त्युत्तमा मङ्गलमूर्तयोऽस्मिन् ।

हर्षेण साधुव्रतभावनाह्व-

लक्ष्म्यः प्रभुं सेवितुमागताः किम् ? ॥५९॥

अक्षाणीन्द्रियाणि पञ्च, अक्षिणी द्वे, वामगत्याऽक्षाक्षिसंख्याः २५ पञ्चविंशतिसंख्याः, अस्मिन् भगवद्विहारे मङ्गलमूर्तयो भान्ति; किं०, साधूनां व्रतानि पञ्च महाव्रतानि तेषां भावनाः प्रत्येकं भावनापञ्चकसद्भावात् पञ्च पञ्चगुणीकृताः पञ्चविंशति-र्भवन्ति तेन साधुव्रतभावनारूपलक्ष्म्यः, किं प्रभुं सेवितुमा-गताः?, इति ॥ ५९ ॥

संशोभते भूमिगृहं विशालं
चैत्येऽत्र चारु प्रकटप्रकाशम् ।
पातालधाम्नां भवनं समेतं
द्रष्टुं मनोज्ञामिव चैत्यलक्ष्मीम् ॥ ६० ॥

अत्र चैत्ये विशालं, पुनश्चारु, पुनः प्रकटप्रकाशं भूमिगृहं संशोभत इत्यन्वयः । चैत्यलक्ष्मीं द्रष्टुं पातालधाम्नां दैत्यानां, भवनं समेतमायातमिवेति ॥ ६० ॥

भूमीगृहे भान्ति खनेत्रसंख्या-
न्यारोहणान्यद्भुतसन्धिभाञ्जि ।
अङ्का अशङ्का दुरितक्रियाणां
हेलाहतानामिव चैत्यभर्त्रा ॥ ६१ ॥

खानि इन्द्रियाणि पञ्च, नेत्रे द्वे, वामतो गत्या खनेत्रसंख्यानि पञ्चविंशतिसंख्यानि, आरोहणानि सोपानानि, किं०, अद्भुतसन्धिभाञ्जि सुसन्धीनि, भूमीगृहे भान्तीत्यन्वयः । उत्प्रेक्ष्यते—चैत्यभर्त्रा मूलनायकेन श्रीपार्श्वनाथेन, हेलाहतानां लीलातर्जितानां, दुरितक्रियाणां पञ्चविंशतिसंख्यानां सावद्यक्रियाणां, अङ्काश्चिह्नानीवेति ॥ ६१ ॥

विभ्राजते भूमिगृहे गणेशः
सोपानपङ्क्त्युत्तरणे पुरःस्थः ।
अन्तःप्रवेशं सृजतां जनानां
प्रत्यूहहत्यर्थमिवागतोऽसौ ॥ ६२ ॥

सोपानपङ्क्त्युत्तरणे सति, पुरःस्थो भूमिगृहद्वारि, गणेशो विनायकः, विभ्राजत इत्यन्वयः । अन्तःप्रवेशं सृजतां

कुर्वतां, जनानां प्रत्यूहहत्यर्थं विघ्नध्वंसकृते, आगत इवेत्युत्प्रेक्षा ॥ ६२ ॥

भूमीगृहं भाति लसत्प्रपञ्चं
पञ्चप्रतीहारमुदाररूपम् ।
पञ्चापि भङ्क्तुं किमु पञ्चबाण-
बाणानलं पञ्चमुखः समेतः ? ॥ ६३ ॥

भूमीगृहं; किं०, लसत्प्रपञ्चं सद्विस्तारं, पुनः, पञ्च प्रतीहारा दौवारिकरूपाणि यत्र तत् पञ्चप्रतीहारम्, अतएवोदाररूपं किमु पञ्चापि पञ्चबाणबाणान् स्मरशरान्, भङ्क्तुं पञ्चमुखो महादेवः समेत इति ॥ ६३ ॥

धत्ते श्रियं तच्चतुरस्रमुच्चै-
र्भूमीगृहं दिग्मितिभृत्करोच्चम् ।
स्वामिप्रणामाय समागताना-
मास्थानपृथ्वीव हरिद्वधूनाम् ॥ ६४ ॥

तद्भूमीगृहं किं०, चतुरस्रं चतुष्कोणेषु समं, पुनः किं०, दिग्मितिभृतः करान् हस्तान् यावदुच्चं दिग्मितिभृत्करोच्चं दश हस्तान् यावदुच्चत्वेनेति । इवोत्प्रेक्ष्यते—हरिद्वधूनां दिग्नारीणां, स्वामिनः पार्श्वेशस्य प्रणामाय, समागतानाम्, आस्थानपृथ्वीं निवासस्थानमिवेति ॥ ६४ ॥

मूले प्रतीहार उदारगर्भा-
गारस्य सारस्य पयःपयोधेः ।
भूधाम्नि तत्र प्रथमार्हतोऽस्ति
मूर्तिस्तुरङ्गत्रिमिताङ्गुलीया ॥ ६५ ॥

तत्र भूधाम्नि उदारगर्भागारस्य, किं०, सारस्य, पयसः सहर्षित्ववारिणः पयोधेर्वारिधेर्द्रष्ट्रीणामिति, मूले प्रतीहारे तत्र प्रथमाऽर्हतो नाभेयस्य, मूर्तिः, किं०, तुरङ्गाः सप्त, त्रयश्चेत्यङ्कवामगतेः सप्तत्रिंशत्संख्यैरङ्गुलैर्मिताऽस्तीति ॥ ६५ ॥

तद्दक्षिणस्यां दिशि वीरभर्तु-
मूर्तिस्त्रिवह्न्यङ्गुलसंमिताऽस्ति ।
तद्वामसामीप्यगताऽस्ति शान्ते-
र्मूर्तिश्च शैलाक्षिमिताङ्गुलीया ॥ ६६ ॥

ततो दक्षिणस्यां दिशि याम्यदिग्भागे, वीरभर्तुर्महावीरस्य, मूर्तिः, किं०, त्रयश्च वह्नयोऽपि त्रयस्तेन त्रिवह्न्यङ्गुलैस्त्रयस्त्रिंशदङ्गुलैः, संमिताऽस्ति, पुनस्तद्वामसामीप्यगता वामदिग्भागे शान्तेर्मूर्तिः; किं०, शैलाः सप्त, यदुक्तम्—

"महेन्द्रो मलयः सह्यः कैलासो गन्धमादनः ।
हिमवानुदयश्चैव सप्तैते कुलपर्वताः" ॥ १ ॥

इति वचनात् पर्वताः सप्त, अक्षिणी द्वे, तदङ्कयोर्वामगतिविन्यस्तयोः सप्तविंशतिर्भवन्ति, तेन तन्मिताङ्गुलीयाऽस्तीति भावः ६६

यत्र क्षमाधाम्नि दश द्विपेन्द्रा
भान्ति प्रकामाद्भुतमूर्तिमन्तः ।
अभ्यागमन्नत्र दिशामधीशाः
किं पार्श्वभर्तुः पदपर्युपास्त्यै ? ॥ ६७ ॥

यत्र क्षमाधाम्नि भूगृहे, द्विपेन्द्रा गजा दश; किं०, प्रकामाद्भुतमूर्तिमन्तोऽतिमनोहररूपशालिनः, भान्तीत्यन्वयः । किं पार्श्वभर्तुः पदपर्युपास्त्यै दिशामधीशा दश दिग्नायकाः, अभ्यागमन् प्राप्ताः ?, इति ॥ ६७ ॥

अधुना वर्णनोपसंहृतिं सृजन् चैत्यप्रस्तावनां समर्थयति–

चिन्तामणेश्चैत्यमिदं मनोज्ञं
नृणां दृशोरध्वनि तन्वतां च ।
नन्दीश्वराष्टापदमुख्यतीर्थ-
चैत्येक्षणाशा श्लथभावमाप ॥ ६८ ॥

इदं चिन्तामणेः पार्श्वनाथस्य, चैत्यं नृणां नराणां, दृशोर्नेत्रयोः, अध्वनि पथि, तन्वतां पश्यतामिति यावत्, नन्दीश्वरोऽष्टमद्वीपः, अष्टापदश्च भरतचक्रवर्तिक्रीडागिरिः, तत्प्रमुखतीर्थचैत्यानामीक्षणाशा विलोकनस्पृहा, श्लथभावमाप शिथिलीभूतेति भावः ॥ ६८ ॥

एतौ नितान्तं तनुतः प्रकाशं
यावद् मरुद्वर्त्मनि पुष्पदन्तौ ।
स्तात् तीर्थपृथ्वीललनाललाम
तावच्चिरं चैत्यमिदं मनोज्ञम् ॥ ६९ ॥

यावद् मरुद्वर्त्मनि गगने, एतौ पुष्पदन्तौ चन्द्रार्कौ, प्रकाशमालोकं, तनुतः कुरुतः, तावत्कालं चिरकालं यावत्, इदं कामदं नाम चैत्यं, किं०, तीर्थस्य स्तम्भतीर्थस्य पृथ्वीललनाया भूमिमहेलाया ललाम तिलकतुल्यं, स्तादस्तु, आचन्द्रार्कं तिष्ठत्विति भावः ॥ ६९ ॥

चैत्यं प्रशंसाऽऽस्पदमित्युदारं
प्रातिष्ठिपत् सूरिरथोत्सवेन ।
आसीदधिष्ठायकदेवक्लृप्त-
सांनिध्यमेतच्च बहुप्रभावम् ॥ ७० ॥

इति वर्णितप्रकारेण, प्रशंसाऽऽस्पदमिदं चैत्यं सूरिरुत्सवेन प्रातिष्ठिपत्, च पुनः, एतद् चैत्यं, किं०, अधिष्ठायकदेवेन क्लृप्तं कृतं सांनिध्यं यस्य तत्, अत एव बहुप्रभावमासीदभूत् ॥७०॥

चक्रे चतुर्मासकमाप्तमुख्यः
श्रीसूरिसिंहोऽथ कृतप्रतिष्ठः ।
गन्धारपुर्यां प्रचुरार्यचर्या-
वर्यात्मनि क्ष्मापतिपूजितांह्रिः ॥ ७१ ॥

अथ श्रीसूरिसिंहः, किं०, आप्तमुख्यः, पुनः, कृतप्रतिष्ठः सन्, गन्धारपुर्यां, किं०, प्रचुरा प्रकृष्टा या आर्यचर्या पूज्यचर्या गमनं पूज्यपादावधारणमिति यावत् तया वर्य आत्मा स्वरूपं यस्यास्तत्रेति; शेषं सुगमम् ॥ ७१ ॥

तस्याः पुरीतोऽथ सुखं विहारं
कुर्वन्ननूचानवितानवज्री ।
प्रापद् महत्त्वैकपदं समीपं
ब्राह्मीमिवेन्दुः सुगुरोः कलाऽऽढ्यः ॥७२॥

अथ तस्याः पुरीतो गन्धारबन्दिरात्, विहारं कुर्वन् सोऽनूचानवितानवज्री आचार्यचक्रशक्रः, इन्दुश्चन्द्रः, ब्राह्मीमिव यथा रोहिणीं, तथा गुरोः श्रीहीरसूरेः समीपं, किं०, महत्त्वैकपदं, गुरुपक्षे महत्त्वं प्रसिद्धं, चन्द्रपक्षे महत्त्वमुच्चत्वलक्षणं, यतो रोहिणीगतश्चन्द्रो वृषराशिसद्भावादुच्च इति ज्योतिःशास्त्रमतम्, कलाऽऽढ्य इति द्वयोरपि विशेषणं तुल्यम् ॥ ७२ ॥

सर्वासु दिक्ष्वाभरणीभवन्तौ
तौ पुष्पदन्ताविव दीप्तिमन्तौ ।

श्रेयःपरीवारवृतौ वरेण्यौ
भट्टारकाचार्यवरौ क्रमेण ॥ ७३ ॥
अङ्कापगाराड्रसशर्वरीश-
संख्येऽथ वर्षे क्षतशोकलोके ।
श्रीराजधन्याह्वपुरे प्रधाने
ज्येष्ठां सदास्यामधितष्ठिवांसौ ॥ ७४ ॥

अथ तौ भट्टारकाचार्यवरौ श्रीहीरविजयसूरिश्रीविजयसेनसूरिवरौ, क्रमेण सर्वासु दिक्षु आभरणीभवन्तौ सन्तौ, पुनः किं०, पुष्पदन्ताविव दीप्तिमन्तौ कान्तिकान्तौ, पुनः किं०, श्रेयःपरीवारवृतौ प्रशस्यपरिकरपरिवृतौ, अत एव वरेण्यौ वरिष्ठौ ॥ ७३ ॥ क्रमेणेति विहरन्तौ क्व गतौ ?, इत्याह—अङ्का नव, आपगाराजः समुद्राश्चत्वारः, रसाः षट्, शर्वरीशश्चैकः, एतैरङ्कैर्वामगतिगणितैः १६४९ इति संख्या यत्र तत्र वर्षे, श्रीराजधन्याह्वपुरे रायधनपुरे, किं०, क्षतशोकलोके निःशोकमानवे, ज्येष्ठां सदास्यां चतुर्मासीरूपां, अधितष्ठिवांसौ स्थिताविति । इति युग्मव्याख्या ॥ ७४ ॥

तत्रैकदा लाभपुराद् महीशः
शाहिर्हमाऊनृपतेस्तनूजः ।
सप्रश्रयं राजधने पुरे श्री-
भट्टारकाणां प्रजिघाय पत्रम् ॥ ७५ ॥

एकदा तत्र नगरे राजधन्यपुरे, तस्थुषां श्रीभट्टारकाणां श्रीहीरविजयसूरिपादानां, लाभपुराद् लाहोरनगरात्, हमाऊ-

नृपतेस्तनूजः श्रीअकब्बरशाहिः, सप्रश्रयं सविनयं, पत्रं फुरमानपत्रकं, प्रजिघाय प्रेषितवान् ॥ ७५ ॥

तल्लिखितोदन्तो यथा–

आदास्यतेऽथाऽस्य करो मदीये
राज्ये न निर्णीतिमतेति कामम् ।
युष्मत्प्रियं पावनपुण्डरीक-
तीर्थं मया प्राभृतकं कृतं वः ॥ ७६ ॥

अस्य तीर्थस्य, करो दण्डः, मदीये राज्ये केनापि नादास्यते इति निर्णीतिमता मया, अथ युष्मत्प्रियं भवतां वल्लभं, पावनपुण्डरीकतीर्थं पवित्रशत्रुञ्जयतीर्थं, वो युष्माकं, प्राभृतकं कृतं करमोचनपूर्वकं दत्तमिति ॥ ७६ ॥

तेन भवद्भिः किं कर्तव्यम् ?, इत्याह–

कृत्वा कृपामकृशिमानमुच्चैः
पूज्यैरथो मय्यनुभाविचित्तैः ।
स्वः श्रीधरः पट्टधरः प्रहेयो
नित्यं तमोघ्नो नरकस्य हन्ता ॥ ७७ ॥

अथ पूज्यैः किंलक्षणैः, मयि मद्विषये, अनुभाविचित्तैर्निश्चयवन्मानसैर्मयि सस्नेहैः, अकृशिमानं कृशत्वरहितां बह्वीमिति यावत्, कृपां कृत्वा स्वः पट्टधरो निजपट्टभृत्, किं०, श्रीधरः शोभाभृत्, पक्षे विष्णुः, किं०, नित्यं तमोघ्नः पापहरः, पक्षे तमो राहुस्तमोगुणो वा तद्भेदकत्वात् तमोघ्नः, पुनः, नरकस्य निरयस्य, हन्ता, पक्षे नरकस्य दैत्यविशेषस्य, हन्ता इति श्लेषालङ्कारः ॥ ७७ ॥

अत्रेयिवांसं तमहं समीहे
रोगीव धन्वन्तरिमामयघ्नम् ।
प्राप्य प्रपां पान्थ इवाऽऽघमोघं
मोघं करोमि स्वकमार्तिमूलम् ॥ ७८ ॥

अहं तं तव पट्टधरं अत्र ईयिवांसं समीहे इत्यन्वयः। इव यथा, रोगी पुमान्, आमयघ्नं रोगापहं, उभयत्रापि द्रव्यभावरोगहरं, धन्वन्तरिं वैद्यमुख्यमिति दृष्टान्तः। यतः-प्रपां पानीयशालां, प्राप्य पान्थ इवाऽहमपि येन कारणेन तं प्राप्य स्वकं स्वीयम्, अर्तिमूलं पीडाकारणं, आघमोघं पातकनिकरं, मोघं करोमि निष्फलीकुर्वे ॥ ७८ ॥

त्वद्वाग्रथेनाऽध्वनि पुण्यपूते
नीतोऽहमादौ वृषसुन्दरेण ।
यन्तारमंहःपथपातभीरु-
रिच्छाम्यनूचानमथ त्वदीयम् ॥ ७९॥

आदौ पूर्वं युष्मन्मिलने सति, अहं त्वद्वाग्रथेन; किं०, वृषसुन्दरेण बलीवर्दबन्धुरेण; अन्यत्र वृषेण धर्मेण सुन्दरेण, अध्वनि; किं०, पुण्येन पूते पवित्रे, नीतोऽस्मीत्यन्वयः। अथाऽहं; किं०, अंहःपथपातभीरुः पापमार्गपतनचकितः सन्, त्वदीयमनूचानं यन्तारं सारथिं, इच्छामीति ॥ ७९ ॥

तस्याऽऽस्यवीक्षैकसुधां पिपासोः
कार्यः प्रमोदो मम पूज्यपादैः ।
इत्यर्थनैषा फलभाग् विधेया
वल्लीव मेघैर्भगवद्भिराशु ॥ ८० ॥

तस्य त्वदीयानूचानस्य, आस्यवीक्षैकसुधां मुखनिरीक्षणामृतं, पिपासोः पातुमिच्छोः, मम; पूज्यपादैः प्रमोदः कार्यः, तत्प्रेषणनेति गम्यम्, एषा इति अर्थना प्रार्थना, भगवद्भिः फलभाग् विधेया फलेग्रहिः कार्या, मेघैर्वल्लिरिवेति दृष्टान्तः ॥८०॥

इति फुरमानसमाचारमाकर्ण्य गुरुणा किं विहितमित्याह–

भट्टारकोऽभाषत भाविभद्रा-
नूचानपञ्चाननमित्युदारम् ।
श्रीपातशाहेर्मिलनार्थमच्छ !
वत्साऽऽत्मनो गच्छहिताय गच्छ ॥ ८१ ॥

भट्टारकः श्रीहीरसूरिः, भाविभद्रो योऽनूचानपञ्चाननस्तं श्रीविजयसेनाचार्यं, इत्युत्तरार्धेन अग्रेतनेन वृत्तेन चाऽभाषताऽब्रवीत्–हे वत्स ! हे अच्छ स्वच्छात्मन् ! श्रीपातसाहेरकब्बरस्य मुद्गलेश्वरस्य, मिलनार्थमात्मनो गच्छहिताय गच्छ व्रजेति भावार्थः ॥ ८१ ॥

एतद्धरित्र्यां सृजतां स्थितिं न-
आज्ञा शुभोदर्ककृदस्य नूनम् ।
आज्ञाप्रिया एव भवन्ति भूपाः
शुद्धस्वरूपा नयनीरकूपाः ॥ ८२ ॥

एतद्धरित्र्यामस्य शाहेर्भूमौ, स्थितिं सृजतां तस्थुषां, नोऽस्माकं, नूनमस्य आज्ञा शुभोदर्ककृदग्रे शुभफलदायिनीति निश्चयः, हि यतः–भूपाः, किं०, शुद्धस्वरूपाः समीचीनाचारधारिणः, पुनः किं०, नयनीरस्य न्यायपानीयस्य कूपाः, ते कीदृशाः स्युरित्याह–आज्ञाप्रिया एव आज्ञैव प्रिया वल्लभा

येषां ते आज्ञैश्वर्या इति यावत्, "आज्ञयैव हि राजानो जीवन्ति" इति वचनात् ॥ ८२ ॥

एवं मुधाक्लृप्तसुधाभिराभि-
वाग्भिर्गुरोः पट्टधरः प्रचेताः ।
ओमित्युदात्तां वदति स्म वाचं
वाचंयमामन्दमुदां निदानम् ॥ ८३ ॥

एवमुक्तरीत्या, गुरोः हीरसूरेः, आभिरेताभिर्वाग्भिः; किं०, मुधाक्लृप्तसुधाभिर्मोघीकृताऽमृताभिः, पट्टधरः श्रीआचार्यः, किं०, प्रचेताः प्रमनाः सन्, ओमित्युदात्तां वाचं वदति स्म, वाचं किं०, वाचंयमानां मुनीनाममन्दमुदां निदानं बहुहर्षकारणं, गुरुवाक्यं तथेति प्रतिपन्नवान् ॥ ८३ ॥

अस्मिन्ननूचानपतौ प्रपन्ने
वाचं स वाचंयमराट् तुतोष ।
यन्ता धुरं बिभ्रति भूतभूरि-
स्थाम्नीव वत्से बहुभारगुर्वीम् ॥ ८४ ॥

स वाचंयमराड् गुरुः, अस्मिन्ननूचानपतौ तां वाचं प्रपन्ने सति, तुतोष संतुष्टिं प्रापेत्यन्वयः। दृष्टान्तमाह—यथा वत्से तर्णके, किं०, भूतं जातं भूरि बहु स्थाम बलं यस्मिंस्तस्मिन् वत्सके, बहुभारेण भारधरणेन गुर्वीं गरीयसीं, धुरं बिभ्रति सति, यन्ता सारथिः, तुष्टिं कुरुते तथाऽयमपीति भावार्थः। इदमर्थतो युग्मम् ॥ ८४ ॥

केवलमिन्द्रवज्रया सर्गं निर्मायाऽथ वसन्ततिलकया तमुपसंहरति—

सद्भक्तिभाजनजगज्जनवन्द्यमानो-

ऽनूचानचक्रधरतां स ततो दधानः ।
निश्शेषसाहसिकमौलिरकब्बरस्य
क्षोणीपतेरतिभृशं मिलनोत्सुकोऽभूत् ॥८५॥

ततो दिवसात् सोऽनूचानचक्रधरतां दधान आचार्यचक्रभृत्, किं०, सद्भक्तिभाजनैर्जगज्जनैर्वन्द्यमानः, पुनः, निश्शेषेषु समस्तेषु साहसिकेषु सत्त्ववत्सु मौलिर्मुकुटः, तन्मुख्यत्वात्, अकब्बरस्य क्षोणीपतेः मिलनायोत्सुकोऽभूद् बभूवेति ॥ ८५ ॥

इतीत्ति सर्वमवदातम् ।

इति सकलसुविहितसभासार्वभौमसमानपण्डितमण्डलीमौलिमौलीयमानपण्डितश्रीकमलविजयगणिसुशिष्यमुख्यपण्डितपुरस्दरप्रख्यपण्डितश्रीविद्याविजयगणिविनेयवाचकश्रीगुणविजयगणिविरचितायां विजयप्रदीपिकाऽभिधानधारिकायां सुखावबोधिकायां श्रीविजयप्रशस्तिमहाकाव्यटीकायामेकादशः सर्गोऽर्थतः समर्थितः ॥



अर्हम्

## अथ द्वादशः सर्गः ।

अथ द्वादशः सर्गो निसर्गेण सुगमोऽपि विषमपर्यायप्रकाशनेन विव्रियते, तस्यायमादिः श्लोकः—

चित्तचिन्तितचार्वर्थदानदेवतरूपमौ ।
प्रणम्याऽऽत्मगुरोः पादौ राजधन्यपुरादथ ॥ १ ॥

अब्देऽङ्ककूलिनीकान्तगुहाननमहीमिते।
मार्गशीर्षे सचन्द्रायां तृतीयस्यां तिथौ तथा॥२॥
प्रस्थितानां पथि क्षेमङ्करीः कल्पलता इव।
तिस्रः श्रीतीर्थनाथानां प्रवितीर्य प्रदक्षिणाः॥३॥
साधुसाधुपरीवारः श्रीअनूचानपुङ्गवः।
वहद्वामस्वरोऽचालीत् पुरं लाभपुरं प्रति॥४॥

आत्मगुरोः श्रीहीरविजयसूरेः, पादौ; किं०, चित्तचिन्तिता मनःकल्पिता ये चारवो मनोज्ञा अर्था दिव्याभिलाषास्तेषां दाने देवतरूपमौ कल्पद्रुमसमौ, प्रणम्य नत्वा, शेषं सुबोधम् ॥१॥ अङ्का नव, कूलिनीकान्ताः समुद्राश्चत्वारः, गुहाननानि स्कन्दवदनानि षट्, मही भूरेका, एतैरङ्कैर्वामगतिविन्यस्तै१६४९मिते, अब्दे वर्षे, पुनर्मार्गशीर्षे मासे, पुनः, सचन्द्रायां तृतीयस्यां तिथौ मार्गशीर्षसिततृतीयातिथौ ॥ २ ॥ पथि मार्गे, प्रस्थितानां चलनं चिकीर्षूणां नराणां, कल्पलता इव क्षेमङ्करीः श्रीतीर्थनाथानां तिस्रः प्रदक्षिणाः प्रवितीर्य दत्त्वा ॥ ३ ॥ श्रीअनूचानपुङ्गवः श्रीविजयसेनसूरिः, किं०, साधवो रम्या ज्ञानतः शरीरदर्शनतश्च रमणीया ये साधवो मुनयस्तेषां परीवारः परिकरो यस्य सः, पुनः किं०, वहन् वामः स्वरो नासिकागतमारुतो यस्य सः; प्रस्थाने हि वामपवननाडी चन्द्रनाडिपर्यायाऽतिवर्येति स्वरशास्त्रविदः, लाभपुरं पुरं प्रति, अचालीच्चलति स्मेति। इति चतुर्णां व्याख्या ॥ ४ ॥

अथाऽनुष्टुभां पञ्चविंशत्या ग्राम्यानाटविकांश्च कांश्चिच्छकुनान् वर्णयति—

प्रथमं पयसा पूर्णः पद्मिनीमूर्धनि स्थितः।

अमिलत् कल्याणकुम्भः कल्याणमिव मूर्तिमत्॥५॥

पयसा पानीयेन, पूर्णः; पुनः, पद्मिन्याः स्त्रिया मूर्धनि मस्तके, स्थितः कल्याणकुम्भः स्वर्णकलसः, अमिलद् मिलितः, दक्षिणकरेणेति गम्यम्, मूर्तिमत् कल्याणं मङ्गलमिवेत्युत्प्रेक्षालङ्कारः ॥ ५ ॥

पश्यताऽभिमुखं सव्यं शुनोत्तेरे सुमूर्तिना ।

यद् वीक्षितेऽस्मिन्नीदृक्षे प्रेयान् पन्थाः प्रवासिनाम्॥६॥

अभिमुखं संमुखं, पश्यता विलोकयता, शुना श्वानेन; किं०, सुमूर्तिना चारुशरीरेण; अच्छिन्नकर्णचरणादिनेति यावत्, सव्यं वामदिग्भागं, उत्तेरे उत्तीर्णमिति, वामः श्वोत्तीर्णवान्, यदस्मिन् शुनि, ईदृक्षे वर्णितस्वरूपे, वीक्षिते सति, पन्था मार्गः, कामितार्थसिद्धिकारित्वेन प्रेयान् प्रकर्षेणाऽभीष्टः स्यात्, प्रवासिनां परदेशं प्रति चिचलिषूणामिति ॥ ६ ॥

ऊचानाश्चारवश्चाषपक्षिणः पुण्यसाक्षिणः ।

वामतो दक्षिणं क्षेमकारणं तोरणं व्यधुः ॥ ७ ॥

चाषपक्षिणः; किं कुर्वाणाः, ऊचानाः शब्दायन्तः, यतः "गतेर्बलवती चेष्टा चेष्टातो बलवान् स्वरः" इत्युक्तत्वात्, चाषपक्षिणोऽपि ऊचानाः सन्तो विशेषेण चारवो मनोज्ञाः, पुनः किं०, पुण्यसाक्षिणो भाग्यसूचका इति, वामतः पार्श्वतः, दक्षिणं तोरणं व्यधुश्चक्रुरिति विशेषतः क्षेमकारणमिति तत्त्वम् ॥ ७ ॥

देवी देवीव वामाऽवक् स्थिता हरिति भूरुहे ।

अवश्यं वशभाग् भावि शं पथ्यत्रेतिसूचिनी ॥८॥

भूरुहि वृक्षे, किं०, हरिति आर्द्रे, स्थिता देवी दुर्गा देवीव सुरीव, वामाऽवग् ब्रूते स्म, अत्र पथि मार्गे, अवश्यं निश्चयेन,

शं सुखं, वशभाग् भावि गच्छतां पुंसां सुखं स्वाधीनं भविष्यतीतिसूचिनी ॥ ८ ॥

कट्यारूढक्षीरकण्ठा सहेला महिलाऽमिलत् ।
अङ्कारोपितमीनाङ्का साक्षात् सिन्धोरिवाऽङ्गजा ॥९॥

कट्यां कटितटे आरूढः क्षीरकण्ठो बालो यस्याः सा, सहेला सलीला, महिला स्त्री, अमिलद् मिलिता, अङ्कारोपितमीनाङ्का उत्सङ्गेऽन्तिके वा स्थापितमकरध्वजा, साक्षान्मूर्तिमती सिन्धोरङ्गजा लक्ष्मीरिवेति ॥ ९ ॥

वामतोऽथाऽब्रवीद् बाढं खरोऽखरतरस्वरः ।
श्रेयः सपरिवारस्य प्रतिष्ठासोः पथीतिदृक् ॥१०॥

अथ खरो रासभः, किं०, अखरतरोऽनिष्ठुरतमः स्वरो यस्य सः, बाढमतिशयेन स्वराष्टकेन, अब्रवीत्, सपरिवारस्य प्रतिष्ठासोश्चिचलिषोः पुंसः, पथि श्रेयो भावीति सूचयन्ती दृग् बुद्धिर्यस्य सः ॥ १० ॥

अवदत् तित्तिरिस्तारं वामोऽवामदिशि स्थितः ।
प्रस्थाने स्थानमत्र स्युर्नराः श्रीणामितीद्धवाक् ॥११॥

अवामादिशि अनुकूलदिशि शान्तदिशीति यावत्, स्थितस्तित्तिरिः पक्षी, तारस्वरं वामोऽवदत्, अत्र प्रस्थाने गमने, नराः श्रीणां स्थानं स्युरिति इद्धवाक् पटुवचाः ॥ ११ ॥

प्रपूर्णपात्रा पक्वान्नैः समभ्येति स्म योगिनी ।
उदयोदयेतिवाग्भिरध्वन्यानां जयावहा ॥१२॥

पक्वान्नैः प्रपूर्णपात्रा योगिनी प्रव्राजिका, समभ्येति स्म

संमुखमागता, उदय उदय इति वाग्भिरध्वन्यानां पथिकानां, जयावहा जयदायिनीति ॥ १२ ॥

अवादीद् वायसो वामः क्षीरवृक्षोपरिस्थितः ।
पथिकानां पथि श्रेयो भावीति विलसद्वचाः ॥१३॥

क्षीरवृक्षा राजादनीवटादयस्तदुपरिस्थितो वायसः काकः, वामोऽवादीत्, शेषं कण्ठ्यम् ॥ १३ ॥

शृङ्गारितः समभ्यागाद् मत्तः करिवरः पुरः ।
मयीक्षितेऽर्थकृत् पन्थाः पान्थानामितिसूचकः॥१४॥

मत्तो मदोन्मत्तः, करिवरः कुञ्जरः, शृङ्गारितः सिन्दूरस्वर्णशृङ्खलाद्याभरणभूषितः, समभ्यागात् संमुखो मिलितः, मयि करिवरे, ईक्षिते सति, पन्था मार्गः, पान्थानामर्थकृत् कार्यसिद्धिकृद् भावीतिसूचकः ॥ १४ ॥

खरोऽथ सुरतारूढोऽध्यारूढोऽध्वनि चक्षुषोः ।
साक्षादिव पथि प्राप्तः शेवधिः संपदां मुदाम् ॥१५॥

अथ सुरतारूढो मैथुनं कुर्वाणः, खरश्चक्षुषोर्नयनयोः, अध्वनि मार्गे, अध्यारूढो दृष्ट इति, साक्षात् प्रत्यक्षः, संपदां मुदां शेवधिर्निधिः, प्राप्त इवेत्युत्प्रेक्ष्यते ॥ १५ ॥

स्कन्धाधिरूढोऽथ पुंसः संगतः पुरतः पुमान् ।
दृष्टेऽस्मिन् वृद्धिभाक् संपद् यत् पान्थानां पदे पदे॥१६॥

अथ पुंसः स्कन्धाधिरूढः पुमान् पुरतोऽग्रतः, संगतो मिलितः, अस्मिन् दृष्टे पान्थानां पदे पदे संपद् वृद्धिभाग् वर्धमाना भवतीति ॥ १६ ॥

पोत्री पङ्कप्रलिप्ताङ्गः संप्राप्तो वामतो व्रजन् ।

लाभस्य भूयसो भूतेः सद्भूतः प्रतिभूरिव ॥१७॥

पङ्केन कर्दमेन मलिप्ताङ्गः, पोत्री शूकरः, वामतो व्रजन् संप्राप्तो मिलितः; भूयसो बहोः, भूतेः संपत्तेः, लाभस्य भूरिलक्ष्मीलाभस्य, सद्भूतः सत्यः, प्रतिभूः साक्षीवेति ॥ १७ ॥

अग्रतो मिलिता बाला पुंसः स्कन्धाधिरोहिणी ।
कीर्तिसौभाग्यमाहात्म्यदायिनी श्रीरिवाऽङ्गिनी ॥१८॥

अग्रतस्तदग्रतः, पुंसः स्कन्धाधिरोहिणी बाला कन्या, मिलिता; अङ्गिनी मूर्ता, श्रीरिवेति, परं प्रतीतम् ॥ १८ ॥

पूर्णं कुम्भं वहन् मूर्ध्नि संमुखोऽभूत् पुमान् पुरः ।
ऋद्धिसिद्धिप्रदो बिभ्रच्चन्द्रं चन्द्रधरः किमु ? ॥१९॥

ततः पुरः पूर्णं कुम्भं मूर्ध्नि वहन् पुमान् मिलितः, किमु चन्द्रं बिभ्रत् चन्द्रधरो महादेवः,? स हि चन्द्रमौलिरिति ॥१९॥

खञ्जनः खं सृजन्नग्रे ददृशे दक्षिणं व्रजन् ।
मयि दृष्टेऽध्वगाः संपद्भाजः स्युरितिधीरिव ॥ २० ॥

"खं सुखे" इत्यनेकार्थत्वात् खं सुखं सृजन् खञ्जनः पक्षिविशेषः, दक्षिणं व्रजन् ददृशे; मयि दृष्टे सति, अध्वगाः पथिकाः संपद्भाजः स्युरितिधीरिवेत्युत्प्रेक्ष्यते । अयमपि वसन्तराजादिषु विशेषतश्चाषवद् भव्य उक्त इति ॥ २० ॥

अवाममुत्ततारााऽथ नकुलः कुलसंकुलः ।
प्रदित्सुरिव पान्थानामशनाऽऽसनसंपदम् ॥२१॥

अथ नकुलः; किं०, कुलेन निजकुटुम्बेन संकुलः, अवामं दक्षिणं पार्श्वम्, उत्ततारोत्तीर्ण इति, पान्थानामशनासनसंपदं प्रदित्सुर्दातुमिच्छुरिव ॥ २१ ॥

सुस्पष्टलट्टयोत्तेरे तारयाऽथ प्रदक्षिणम् ।
पदे पदे निधानानि पान्थानां पथि यद्दृशा॥२२॥

अथ तारया लट्टया मरुस्थलीप्रसिद्धरूपारेलिनाम्न्या पक्षिण्या, प्रदक्षिणमुत्तेरे दाक्षिणोत्तीर्णेति, यद्दृशा यस्या दर्शनेन, पान्थानां पदे पदे निधानानि स्युः ॥ २२ ॥

तस्थुषी दिशि शान्तायां पिङ्गलाऽवक् प्रदक्षिणम् ।
शुभायां मयि पान्थः स्याद् मङ्गर्तेव बलीतिदृक्॥२३॥

शान्तायां दिशि तस्थुषी स्थिता सती, पिङ्गला भैरवी चीवरीति गूर्जरदेशप्रसिद्धा महाशकुनरत्नभूता, प्रदक्षिणम्, अवग् जगौ, मयि शुभायां सत्यां, पान्थः, मङ्गर्तेव महेश्वर इव, अथवा "पिङ्गला कुमुदस्त्रियाम्" इत्यनेकार्थवचनात् कुमुदनामदिग्गज-इव, बली बलवान् स्यात्, इति दृग् बुद्धिर्यस्याः सेति ॥२३॥

हरिणा उत्तरन्ति स्म प्रभोरस्य प्रदक्षिणाः ।
चित्रमेते भविष्यन्त्यविषमा विषमा अपि ॥ २४ ॥

अस्य प्रभोः गुरोः, प्रदक्षिणा वामतो दक्षिणाः, हरिणा उत्तरन्ति स्म उत्तीर्णा इति, इदं चित्रम्—यदेते हरिणा विषमा अपि, अविषमाः, इत्यसौ विरोधः, विरोधपरिहारस्तु—विषमा विषमसंख्याका एकत्रिपञ्चसप्तादिरूपसंख्याका हरिणाः श्रेष्ठाः, यदुक्तं शकुनार्णवे—

"एको वा यदि वा त्रीणि पञ्च वा सप्त वा पुनः ।
पुरुषस्य भाग्यकाले हरिणा यान्ति दक्षिणाः" ॥१॥

इति ॥ २४ ॥

सपर्याणोऽथ तुरगो विना सादिनमभ्यगात् ।
प्रभुप्रीत्याऽऽशु प्रहितो मघोनोच्चैःश्रवा इव ॥२५॥

अथ तुरगः सपर्याणः सादिनमश्ववारं विना, अभ्यगात् संमुखोऽभूत्, इवोत्प्रेक्ष्यते–प्रभुप्रीत्या गुरुस्नेहेन, मघोना इन्द्रेण, उच्चैःश्रवा निजवाजी, प्रहितः प्रेषित इति ॥ २५ ॥

धूमध्वजोऽथ निर्धूमः समार्चिः स्मैति संमुखः ।
प्रताप्यहमिवैषोऽस्तीत्येनं द्रष्टुमिवांशुमान् ॥ २६ ॥

अथ निर्धूमो धूमध्वजोऽग्निः; किं०, समार्चिः समा अविषमा अर्चिषो यस्य सोऽकुटिलज्वाल इति, संमुखः स्मैति आगात्, अहमिव एष गुरुः प्रतापी अस्ति इति हेतोरेनं गुरुं द्रष्टुमंशुमान् सूर्यः, समागादिवेत्युत्प्रेक्ष्यते ॥ २६ ॥

शिवा वयमयं नूनं शिवाशय इतीहया ।
प्रतिष्ठासोर्वदन्ति स्म वाममस्याऽत्र फेरवः ॥२७॥

अयं गुरुर्मोक्षाभिलाषित्वात् शिवाशयो वर्तते, नूनं वयं शिवाः स्मः, इति ईहया धिया, अस्य गुरोः प्रतिष्ठासोश्चिचलिषोः, वामं दिग्भागं, फेरवः शृगालाः, वदन्ति स्मेति ॥ २७ ॥

बिभ्राणा वाणिनी वीणां प्रवीणा पुरतोऽमिलत् ।
दधती कच्छपीमच्छां साक्षादिव सरस्वती ॥ २८ ॥

ततो वाणिनी छेका कामिनी, वीणां बिभ्राणा, पुनः, प्रवीणा निपुणा, पुरतः संमुखीनाऽमिलत्, कच्छपीं निजवीणां, "सरस्वत्यास्तु कच्छपी" इति वचनात्, दधती साक्षात्सरस्वतीवेति ॥ २८ ॥

साक्षतं बिभ्रती स्थालं ददृशेऽध्वनि दीर्घदृक् ।
पान्थानां पथि संपत्तेर्निदानमिव मूर्तिमत् ॥ २९ ॥

ततोऽध्वनि वर्त्मनि, साक्षतं लाजपूर्णं, स्थालं बिभ्रती दीर्घ-

दृक् आयतनेत्रा कामिनी, ददृशे दृष्टा, गुरुणेति गम्यम्; मूर्तिमद् मूर्तं, संपत्तेः श्रियः, निदानं कारणमिवेति ॥ २९ ॥

इत्यादिभिः सुखोत्कर्षजयश्रीसूचनोत्सुकैः ।
मुहुर्मुहुर्जायमानैः शकुनैरनुकूलितः ॥ ३० ॥

कुर्वन् कुवलयोल्लासं कलावानिव सूरिराट् ।
क्रमेण कलयामास पत्तनं पत्तनोत्तमम् ॥ ३१ ॥

इत्यादिभिर्वर्णितस्वरूपैः शकुनैः; किं०, सुखोत्कर्षस्य जयश्रियश्च विजयलक्ष्म्या यत्सूचनं तत्रोत्सुकैस्तत्परैः शकुनैः, अनुकूलितोऽनुकूलीकृताशय इति ॥ ३० ॥ पुनः, कुवलयोल्लासं भूवलयोल्लासं उत्पलोल्लासं च, कलावानिव चन्द्र इव, सूरिराट् कुर्वन् क्रमेण पत्तनोत्तमं नगरमुख्यं पत्तनं नाम नगरं, कलयामास प्राप्त इति ॥ इति युग्मव्याख्या ॥ ३१ ॥

तत्राऽऽचार्यः सुखिश्राद्धश्रेणीश्रेणीकृतक्षणे ।
पञ्चाश्रयपार्श्वनाथप्रमुखाननमद् जिनान् ॥ ३२ ॥

तत्र पत्तने नगरे, स आचार्यः; किंलक्षणे नगरे, सुखिनः ये श्राद्धास्तेषां श्रेणयः कुलानि तैः श्रेणीकृता राशीकृता क्षणा उत्सवा यत्र तत्र, श्रीपञ्चाश्रयपार्श्वनाथप्रमुखान् जिनान्, अनमद् ववन्दे ॥ ३२ ॥

पांशुभिः पदपद्मानां मौक्तिकैरिव मेदिनीम् ।
अलङ्कुर्वन् वादिवृन्दद्विपदर्पच्छिदोद्धुरः ३३ ॥

अष्टापदमिवाऽशेषभगवद्भिर्विभूषितम् ।
अर्बुदाद्रिमनूचानपञ्चानन उपेयिवान् ॥ ३४ ॥

पदपद्मानां पांसुभिः मौक्तिकैर्मुक्ताफलैरिव, मेदिनीं महीं

अलङ्कुर्वन्, किं०, वादिवृन्दद्विपदर्पस्य च्छिदा छेदस्तत्र उद्धुरस्तत्पर इति ॥ ३३ ॥ अनूचानपञ्चाननः, स इति गम्यम्, अर्बुदाद्रिं; किं०, अष्टापदाद्रिमिव अशेषैः समस्तैर्भगवद्भिस्तीर्थकरैः, विभूषितं चतुर्विंशतेर्मूर्तीनां तत्र सद्भावात्, उपेयिवानाऽऽगात् ॥ इति युग्मव्याख्या ॥ ३४ ॥

श्रीदेवपाटकस्थानाऽचलदुर्गादिभूमिषु ।
तत्र श्रीमारुदेवादीन् देवान् नत्वेन्द्रवन्दितान् ॥३५॥
विहारैः पावयन् पृथ्वीमनूचानशिरोमणिः ।
लङ्कामिवाऽकलङ्कां द्राक् प्रापच्छिवपुरीं पुरीम् ॥३६॥

श्रीदेवपाटकस्थानं लोके देलवाडाख्यं विमलवसहीतिप्रसिद्धश्रीऋषभदेवदिव्यप्रासादमण्डितम्, अचलदुर्गश्चानेकदिव्यस्थानककमनीयस्तलहट्टिकास्थितकुमरविहारऊर्ध्वभूमिस्थितस्वर्णमयचतुरर्हत्प्रतिमाऽप्रतिमचतुर्मुखविहारप्रमुखविश्वातिशायितीर्थतटाकतटिनीवृन्दरमणीयः, आदिशब्दात् शालिग्रामादिग्रहस्तेनेत्यादिषु भूमिषु देवान् किं०, नत्वा, अन्यत् कण्ठ्यम् ॥ ३५॥ पृथ्वीं विहारैः पावयन्ननूचानशिरोमणिः स इति लङ्कामिवाकलङ्कां निष्कलङ्कां निर्दूषणामिति, शिवपुरीं नाम पुरीं प्रापत् ॥ युग्मव्याख्यानमिदम् ॥ ३६ ॥

तत्र राजा सुरत्राणः सुरराज इवाऽस्ति यः ।
चित्रं न गोत्रभिद् भाति पतिः सुमनसामपि ॥३७॥

तत्र शिवपुर्यां, सुरत्राणो नाम राजाऽऽस्ति, क इव; सुरराज-इव, परमिदं चित्रं यत्, सुमनसां पण्डितानां पतिरपि, पक्षे देवानां पतिरपि न गोत्राभित् किन्तु गोत्रस्य देवडाख्यकुलस्योन्नतिकृत्, राजपक्षे–गोत्रं कुलं, इन्द्रपक्षे–गोत्रं गिरिं भिनत्तीति ॥ ३७ ॥

यत्प्रतापस्य दीप्तस्य सादृश्यं नास्ति भास्करैः ।
उदयं दिशि पूर्वस्यामेव येऽनुभवन्ति यत् ॥ ३८ ॥

पुनः, यत्प्रतापस्य भास्करैः सूर्यैः, सादृश्यं साम्यं, नास्ति । उत्तरार्धेन तद्धेतुमेव प्रकटयति—यदिति यतः कारणात्, एते भास्कराः, पूर्वस्यामेव दिशि, उदयमनुभवन्ति सुरत्राणराट्प्रतापस्तु सर्वदिक्षूदयीति ॥ ३८ ॥

प्रकारैः प्रचुरैरम्यैरलङ्कृत्याऽऽत्मनः पुरीम् ।
स सुरत्राणराजोऽथ गुरोः संमुखमाययौ ॥ ३९ ॥

स सुरत्राणराट् आत्मनः पुरीं सीरोहीनाम्नीं, प्रचुरैः प्रकारैश्चतुष्पथशृङ्गारणादिभिः, अलङ्कृत्य गुरोराचार्यस्य, संमुखमाययौ आगतः, क्रोशद्वयमिति श्रुतिः ॥ ३९ ॥

अथ त्रिभिस्तां नगरीं वर्णयति—

भोगावतीमिवाऽस्तोकभोगिलोकमनोहराम् ।
लङ्कामिव सुवर्णाऽऽढ्यां प्राज्यपुण्यजनप्रियाम् ॥४०॥

नरवाहनसंचारपेशलामलकामिव ।
वृषव्यापारसंभाररम्यां स्वर्गिपुरीमिव ॥ ४१ ॥

प्रकाममनघैः संघैः संसूत्रितमहोत्सवाम् ।
श्रीरोहीं श्रीअनूचानः पुण्यराशिरिवाऽविशत्॥४२॥

भोगावतीं नागानां पुरीमिव, अस्तोकभोगिलोकैर्भोगिभिर्जनैः, पक्षे भोगिलोकैः पन्नगलोकैर्मनोहरां, पुनः, लङ्कां रावणनगरीमिव, सुवर्णैः शोभनवर्णैर्ब्राह्मणवणिग्क्षत्रियादिभिराढ्यां, पक्षे सुवर्णैः काञ्चनैस्तत्र जात्यार्जुनखानीनां सद्भावादिति,

पुनः किं०, प्राज्यैः प्रभूतैः पुण्यजनैरथवा प्राज्यानां पुण्यजनानां प्रियां वल्लभां, लङ्कापक्षे, पुण्यजना राक्षसाः, नगरीपक्षे पुण्यजनाः सज्जना इति ॥ ४० ॥ पुनः, नरवाहनानां याप्ययानानां संचारैर्गमनैरलकामिव पेशलां, अलकापक्षे, नरवाहनो धनद इति, पुनः, वृषव्यापारसंभारेण धर्मकर्मप्रारम्भप्राग्भारेण स्वर्गिपुरीम्—अमरावतीमिव, रम्याम्, अमरावतीपक्षे, वृषव्यापाराः शक्रव्यापारा इति ॥ ४१ ॥ पुनः कीदृशीं, प्रकाममत्यर्थं, अनघैर्निष्पापैः, संघैः, संस्त्रात्रिता महोत्सवा यत्र तां, श्रीरोहीं सीरोहीनगरीं, श्रीअनूचानः पुण्यराशिजङ्गम इवेत्यध्याहार्यम्, अविशत् प्रविष्ट इति ॥ त्रयाणां व्याख्येति ॥४२॥

दिनानि कतिचित् तत्र स्थित्वाऽनूचानकुञ्जरः ।
विजहार ततो लोककमलाकरभास्करः ॥ ४३ ॥

तत्र शिवपुर्यां, कतिचिद् दिनानि स्थित्वा अनूचानकुञ्जरः, किं०, लोकरूपकमलानामाकरे निकरे भास्करः, ततो विजहारेति ॥ ४३ ॥

नत्वाऽर्हतः पुरे राणपुरेऽथ प्रशमिप्रभुः ।
क्रमादलञ्चकाराऽऽशु श्रीनारदपुरीं पुरीम् ॥४४॥

अथ राणपुरे पुरे राणकश्रीकुम्भकर्णनिवेशिते नलिनीगुल्मविमानाऽनुकारित्रिभुवनदीपकनामधारिविश्वविश्वचेतश्चमत्कारकारिश्रीधरणाभिधव्यवहारिकारितचतुर्मुखविहारे स्वकरकमलदीक्षिताऽऽचार्यचतुष्टयीपरिवृततपागणाधिपश्रीसोमसुन्दरसूरिपाणिप्रतिष्ठितश्रीयुगादिदेवप्रमुखानर्हतो नत्वा प्रणम्य, प्रशमिप्रभुगुरुः, क्रमात् श्रीनारदपुरीं प्रथमसर्गोक्तवर्णिकां जन्मनगरीम्, अलञ्चकारेति ॥ ४४ ॥

तत्र सांसारिकस्तोमाऽऽग्रहेण कतिचिद् दिनान् ।
आसामास जगल्लोककोककोकसुहृत् प्रभुः ॥४५॥

तत्र नारदपुर्यां, सांसारिकाणां संसारसंबन्धिनां कुटुम्बिनां स्तोमः समूहस्तस्याऽऽग्रहेण, कतिचिद् दिनान् यावत्, प्रभुः, किं०, जगल्लोका एव कोकाश्चक्रवाकास्तेषु कोकसुहृत् सूर्यस्तेषां हर्षहेतुत्वादिति, आसामास स्थित इति ॥ ४५ ॥

काञ्चनै राजतैरूपैः संघस्तत्रत्य आदरात् ।
श्रीअनूचानमानर्च तीर्थनाथमिवाऽऽगतम् ॥४६॥

तत्रत्यः संघ आदराद् जन्मभूमित्वाद् विशेषेण, तीर्थनाथमागतमिव मन्वानः, श्रीअनूचानं काञ्चनैः स्वर्णमयैः, राजतै-रूप्यमयैः, रूपैर्नाणकैः, यदनेकार्थः—"रूपं तु श्लोकशब्दयोः । पशावाकारे सौन्दर्ये नाणके नाटकेऽपि च" इति । आनर्चेति पूजयामास ॥ ४६ ॥

गुरुः पौरमनःप्रीतिवल्लीपल्लवनाम्बुदः ।
संघमुल्लासयामास देशनासलिलैरलम् ॥ ४७ ॥

पौराणां नागराणां मनःप्रीतिवल्ल्याश्चित्तस्नेहलतायाः पल्लवनेऽम्बुदः, गुरुर्देशनासलिलैः संघमुल्लासयामास सोल्लासं कृतवान् ॥ ४७ ॥

मूलादुन्मूलयन् मार्गतरूनिव कुवादिनः ।
व्यहार्षीत् पुरतस्तस्मादनूचानमतङ्गजः ॥ ४८ ॥

अनूचानमतङ्गजः सूरिसिन्धुरः, किं कुर्वन्, कुवादिनो मार्गतरूनिव मूलात् समूलं, उन्मूलयन् तस्मान्नारदपुरीपुरतः, व्यहार्षीत् ॥ ४८ ॥

त्रिभिर्गुरुमेव वर्णयति—

अथ गङ्गेव सर्वज्ञप्रीतिहेतुरसैकभूः ।
कल्पद्रुम इवास्वप्नसंघकामितकामदः ॥ ४९ ॥
सहस्रांशुरिवाऽशेषां संहरंस्तमसां ततिम् ।
सुधांशुरिव कुर्वाणो विश्वाम्भोधेः समुन्नतिम् ॥५०॥
लोकैरनेकैरानन्दात् पूज्यमानः क्रमाद् गुरुः ।
प्रापाऽथ मेदिनीतुण्डमण्डनं मेदिनीपुरम् ॥५१॥

गुरुः, किं०, गङ्गेव सर्वज्ञस्य महादेवस्य प्रीतिहेतुः स्नेहकृद् यो रसः शृङ्गाररूपस्तस्य हेतुः कारणम्, गुरुपक्षे, सर्वे समस्ता ये ज्ञाः पण्डितास्तेषां प्रीतिहेतुर्यो रसो हर्षस्तस्य भूरिति, पुनः किं०, कल्पद्रुमपक्षे, अस्वप्नानां देवानां संघस्य वृन्दस्य कामितकामदः वाञ्छिताभिलाषदाता, गुरुः अस्वप्नो निर्निद्रो गुर्वागमाद् भावतो जागरूको यः संघश्चतुर्विधस्तस्य; अन्यत् पूर्ववत् ॥४९॥ पुनः गुरुः, सहस्रांशुः सूर्य इव, अशेषां समस्तां, तमसां तातिं ध्वान्तानां पापानां च श्रेणिं संहरन्, पुनः, सुधांशुश्चन्द्र इव विश्वाम्भोधेर्जगत्समुद्रस्य, समुन्नतिं कुर्वाणः ॥ ५० ॥ पुनः, अनेकैर्लोकैः पूज्यमानः क्रमाद् विहरन् अथ मेदिनीतुण्डस्य मण्डनं भूमीमुखस्य भूषणं, मेदिनीपुरं मेडताख्यं नगरं, प्रापाऽगात् ॥ इति त्रयाणां व्याख्या ॥ ५१ ॥

संघोऽनघमनास्तत्र संपूरितमनोरथम् ।
चिन्तामणिमिवाज्ञासीदनूचानशिरोमणिम् ॥५२॥

तत्र मेदिनीपुरे, संघः; किं०, अनघमना निर्मलचेताः, अनूचानशिरोमणिं तं चिन्तामणिमिव, संपूरिता मनोरथा येन तम्, अज्ञासीद् ज्ञातवान् ॥ ५२ ॥

कियच्च महिमाऽमत्रं तत्र मित्रमहा महान् ।
सुखयन् जनतां वाग्भिरद्भिरब्द इवाऽवसत् ॥५३॥

च पुनः, तत्र मेदिनीपुरे, महान् गुरुः, किं०, महिमाऽमत्रं माहात्म्याऽऽस्पदं, अद्भिः पानीयैः, अब्द इव मेघ इव, जनतां जनसमूहं, वाग्भिः सुखयन् सुखीकुर्वन्, अवसत् तस्थौ ॥५३॥

मेदिनीपुरतः सूरिर्मेदिनीशनतस्ततः ।
स्वर्मेदिनीरुह इव व्यचरद् मेदिनीतले ॥ ५४ ॥

सूरिः किं०, मेदिनीशा राजानो मेडतीआख्यास्तैर्नतः सन् ततो मेदिनीपुरतः स्वर्मेदिनीरुह इव कल्पतरुरिव, मेदिनीतले भूतले, व्यचरत् चचालेति । अत्र मेदिनीशब्दचतुष्टयाद्भुतम् ॥ ५४ ॥

क्रमेण क्रमविन्मुख्योऽतिक्रामन्नखिलामिलाम् ।
वर्यवर्णाटभावाटं वैराटं नगरं ययौ ॥ ५५ ॥

क्रमविदां गुरुमार्गविदां ज्ञानविदां मुख्यः, स गुरुः, क्रमेणाऽखिलां इलां भूमिं, अतिक्रामन् उल्लङ्घयन्, वैराटं नगरं, किं०, वर्या वर्णाटाश्चित्रकारिणः गायना वा, भावाटाः साधुनिवेशाः कामिनो वा यत्र तत् ॥ ५५ ॥

तत्राऽथ श्रीतपागच्छनायकः शर्मदायकः ।
मौक्तिकैः काञ्चनैः पुष्पैः पूजितः श्रावकैर्बहु ॥५६॥

अथ तत्र श्रीतपागच्छनायकः श्रावकैः, मौक्तिकैः, पुनः, काञ्चनैः पुष्पैः स्वर्णप्रसूनैः, पूजित इति ॥ ५६ ॥

संघः सर्वोऽपि तत्रत्योऽतिमात्रां मुदमासदत् ।
दर्शनाद्दषिचन्द्रस्य चकोराणामिवोत्करः ॥५७॥

तत्रत्यो वैराटवास्तव्यः, सर्वोऽपि संघः ऋषिचन्द्रस्य तस्य दर्शनात्, चकोरोत्कर इवातिमात्रामनर्गलां मुदं, आसदत् प्राप्तवान् ॥ ५७ ॥

युगप्रधानेऽनूचाने विचरत्यथ वर्त्मनि ।
काकनाशमनश्यंश्च सर्वेऽपि हि कुपाक्षिकाः ॥५८॥

अथ तस्मिन् युगप्रधानेऽनूचाने वर्त्मनि विचरति सति, सर्वेऽपि हि कुपाक्षिकाः कुमतिनः, काकनाशं अनश्यन् काका इव नष्टा इति ॥ ५८ ॥

स्थाने स्थानेऽथाऽभिरामग्रामाधिपपुराधिपैः ।
बहु मेने तपानाथः पाथः पिपासितैरिव ॥५९॥

अथाऽभिरामैर्मनोहरैर्ग्रामाधिपपुराधिपैर्भूपतिभिः, स्थाने स्थाने स तपानाथस्तपागच्छाचार्यः, पिपासितैस्तृषितैः, पाथ इव पानीयमिव, बहु मेने भृशं मानितः ॥ ५९ ॥

वहन् बहुं महिमानं महिमं नगरं गुरुः ।
आजगामौजसां धाम वनान्तरिव केसरी ॥६०॥

गुरुः, किं कुर्वन्, बहुं महान्तं महिमानं वहन्, वनान्तर्वनमध्यं केसरीव, किं०, ओजसां धाम, महिमं नाम नगरम्, आजगामाऽऽगतवान् ॥ ६० ॥

मन्यमानैर्जनैस्तत्र गुरुं तीर्थमिवाऽऽगतम् ।
महोत्सवा विदधिरे विश्वविस्मयहेतवः ॥ ६१ ॥

तत्र महिमनगरे, गुरुं तीर्थमिवागतं मन्यमानैर्जनैर्महोत्सवाः, किं०, विश्वस्य सर्वस्याऽथवा जगतः, विस्मयहेतवः आश्चर्यकारणं, विदधिरे कृता इति ॥ ६१ ॥

तस्थौ तत्र जगल्लोकलोचनानां सुधाञ्जनम् ।

भाग्यराशिरिवोल्लासी श्रीगुरुर्विश्ववल्लभः ॥६२॥

तत्र श्रीगुरुः, किं०, जगल्लोकलोचनानां भुवनजननयनानां, सुधाञ्जनं अमृताञ्जनम्, इवोत्प्रेक्ष्यते—भाग्यराशिर्मूर्तिमान्, शेषं सुगमम् ॥ ६२ ॥

प्रसन्नस्तत्र सुगुरुर्हरंस्तापं गवां भरैः ।
तडित्वानिव शिखिनां नृणामानन्दभूरभूत् ॥६३॥

तत्र सुगुरुर्गवां भरैर्वाचां चयैः, पक्षे गवां पानीयानां निवहैः, तापं हरन् शिखिनां केकिनां, तडित्वान् मेघ इव, नृणां आनन्दभूः हर्षस्थानमभूदिति ॥ ६३ ॥

सुधावृष्ट्येव संतुष्टविश्वयाऽसदृशा दृशा ।
सुखयित्वा जनांस्तत्र व्यहार्षीदन्यतः प्रभुः ॥६४॥

दृशा दृष्ट्या, किं०, असदृशा निरुपमया, पुनः किं०, सुधावृष्ट्येव संतुष्टं विश्वं जगत्, अथवा संतुष्टा विश्वा पृथिवी यया तया, जनान् तत्र महिमनगरे, सुखयित्वा सुखीकृत्य, प्रभुरन्यतो व्यहार्षीत् ॥ ६४ ॥

विहरन् जनताऽऽनन्दकुमुदाऽऽकरचन्द्रमाः ।
लोधिआणाऽभिधे ग्रामे क्रमेण प्रभुरभ्यगात् ॥६५॥

क्रमेण विहरन् प्रभुः, किं०, जनताऽऽनन्द एव कुमुदाऽऽकरः कैरववृन्दं तत्र चन्द्रमाः, लाभपुरनगरात् षष्टिक्रोशैरर्वाग्वर्तिनि लोधिआणाऽऽख्यग्रामेऽभ्यगात् ॥ ६५ ॥

अथ तत्र यज्जातं तद् युग्मेनाह—

तत्राऽथ मुद्गलस्वामिश्रीअकब्बरभूभुजः ।
अशेषधीसखाधीशशेखसंज्ञकमन्त्रिणः ॥ ६६ ॥

सहजः फयजीनामा मधुव्रत इवाऽऽगमत ।
गुरोः क्रमपयोजन्म मूलमामोदसंपदाम् ॥६७॥

तत्र लोधिआणाग्रामे, मुद्गलस्वामी यः श्रीअकब्बरशाहिस्तस्य श्रीअकब्बरभूभुजो राज्ञः, अशेषाः समस्ता ये धीसखा मन्त्रिणस्तेषामधीशस्य शेखसंज्ञकमन्त्रिणः शेखाऽऽख्यमहामन्त्रिणः ॥६६॥ सहजो भ्राता, फयजीनामा महामुद्गलो दशसहस्रसैन्याधीशः, स गुरोः क्रमपयोजन्म पादपङ्कजं, किं०, आमोदस्य गन्धस्य हर्षस्य च मूलं, मधुव्रतो भृङ्ग इवाऽऽगमत् ॥ इति युग्मव्याख्या ॥ ६७ ॥

तदाग्रहवशात् तत्र श्रीनन्दिविजयाभिधः ।
असाधयत् सुधीरष्टावधानान्यन्तिषद् गुरोः॥६८॥

तदाग्रहवशात् तस्य फयजीनाममुद्गलपतेराग्रहाद्, गुरोः, अन्तिषत् शिष्यः, श्रीनन्दिविजयाख्यः सुधीर्विबुधः, अष्टावधानानि असाधयत् ॥ ६८ ॥

स एनां तत्कलां दृष्ट्वा चमत्कारमवाप यम् ।
नाऽध्वा तत्र गिरां ज्ञानां मानेऽम्भोधेरपामिव ॥६९॥

स फयजीनामा, एनां तत्कलां अष्टावधानरूपां, दृष्ट्वा यं चमत्कारम्, अवाप प्राप्तवान्, तत्र चमत्कारे, ज्ञानां गिरां वाचाम्, अध्वा मार्गो नास्ति। दृष्टान्तमाह—अम्भोधेः समुद्रस्य, अपां पाथसां, माने प्रमाणे, यथा वचनाऽगोचरत्वं तथाऽत्रापीति भावः॥६९॥

तत्कौतुकं वहन्नन्तः स शाहेः सन्निधिं ययौ ।
अपां भारं दधत् पाथोधरो भागं भुवामिव ॥७०॥

तदष्टावधानावलोकनजातं कौतुकं मनोऽन्तर्वहन् स फयजीनामा शेखसहोदरः, शाहेः श्रीअकब्बरस्य, संनिधिं समीपं, ययौ ।

दृष्टान्तमाह-पाथोधरो मेघः, अपां पानीयानां, भारं दधद् भुवो भागं भूभागं यथेति ॥ ७० ॥

प्रकृत्य प्राभृतं हस्तिसप्तिस्वर्णादिवस्तुनः ।
स शाहेः पुरतः प्रोचे वृत्तान्तमिममुन्मनाः ॥७१॥

हस्तिसप्तिस्वर्णादिवस्तुनः गजतुरङ्गकाञ्चनादिवस्तुनः, प्राभृतं ढौकनं, प्रकृत्य कृत्वा, शाहेः पुरतः स इमं वृत्तान्तम्, अग्रे वक्ष्यमाणरीत्या, उन्मना उत्सुकः सन्, प्रोचेऽकथयत् ॥ ७१ ॥

श्रीहीरविजयाह्वानसूरिपट्टधरः पथि ।
श्रीमद्विजयसेनाह्वः सोऽस्ति सूरिरिहाऽऽपतन् ॥७२॥

श्रीहीरविजयाह्वानस्य सूरेर्युष्मद्वल्लभस्य, पट्टधरो युवराट् श्रीविजयसेनाह्वः सूरिः, स इह लाभपुरपथि आपतन्नास्ति आगच्छन् वर्तते ॥ ७२ ॥

लोधिआणे पुरे प्राप्तः स सूरीन्द्रो ममाऽमिलत् ।
गुरुः सुमनसां श्रीमान् साक्षादिव बृहस्पतिः ॥७३॥

स सूरीन्द्रः किं०, सुमनसां सुराणां पण्डितानां च गुरुः, अत एव बृहस्पतिरिव, साक्षात्, अन्यत् कण्ठ्यम् ॥ ७३ ॥

तस्य सौन्दर्यगाम्भीर्यचातुर्यादीन् गुणान् मया ।
इति निध्यायताऽध्यायि धराधीशधुरन्धर ! ॥ ७४ ॥

सौन्दर्यं शरीरजं रूपं, गाम्भीर्यमतुच्छत्वं, चातुर्यं पाण्डित्यम्, इत्यादीन् तद्गुणान् निध्यायता विलोकयता मया, हे धराधीशधुरन्धर ! राजर्षभ ! इति अग्रेतनश्लोकगतम्, अध्यायि ध्यातम् ॥ ७४ ॥

तदेवाह—

भासामिव सहस्रांशुरपामिव सरित्पतिः ।

नूनमेषोऽस्ति सूरीन्द्रो गुणानामेकमास्पदम् ॥७५॥

भासां त्विषां सहस्रांशुः सूर्य इव, अपां नीराणां, सरित्पतिः समुद्र इव, एष सूरीन्द्रो गुणानामेकमास्पदं स्थानकमस्तीति ॥ ७५ ॥

सन्ति चित्तचमत्कारिकलाकौशलपेशलाः ।
बृहस्पतेरिवाऽस्वप्नास्तद्विनेया अनेकशः ॥ ७६ ॥

किञ्च, चित्तचमत्कारि यत् कलाकौशलं तेन पेशला रम्याः, तद्विनेयास्तच्छिष्याः, अस्वप्ना देवाः, बृहस्पतेरिव सुरगुरुत्वात् ॥ ७६ ॥

यत्तदा साधितं नन्दिविजयेन विपश्चिता ।
अवधानाष्टकं स्पष्टं दृष्टं तदपि सोऽभ्यधात् ॥७७॥

नन्दिविजयाख्येन, विपश्चिता पण्डितेनेति; शेषमशेषमप्यवदातम् ॥ ७७ ॥

स श्रीशाहिर्गुणग्राही तदाकर्ण्य सकर्णराट् ।
जातोत्कण्ठो गुरुं द्रष्टुं शीतार्तोऽर्कमिवाऽभवत् ॥७८॥

सः श्रीशाहिरकब्बरः किं०, सकर्णराट्, पण्डितप्रष्ठः, तत् फयजीनाम्नोक्तम्, गुरुस्वरूपम्, आकर्ण्य, शीतार्तः पुमान् अर्कमिव, गुरुं द्रष्टुं जातोत्कण्ठोऽभवत् उत्कण्ठावान् विशेषेण जात इति ॥ ७८ ॥

अथाऽऽचार्यः सदैवाऽर्यवर्याऽऽत्मपरिवारवान् ।
श्रीशाहिमहलस्थानमलञ्चक्रे क्रमेण सः ॥ ७९ ॥

स आचार्यः, अथ क्रमेण, किं०, आर्येषु वर्यो य आत्मपरिवारः स्वशिष्यादिपरिच्छदस्तद्वान्, श्रीशाहेर्महलस्थानं ला-

भपुरादर्वाक् पञ्चक्रोशीयवनस्थं, अलञ्चक्रे, आगत इति ॥७९॥

तत्र श्रीभानुचन्द्राख्योपाध्यायाः पूज्यपादयोः ।
पार्श्वं सद्यः समभ्येयुरुपकूपमिवाध्वगाः ॥ ८० ॥

तत्र स्थाने, श्रीभानुचन्द्रनामान उपाध्यायाः पण्डितसूरचन्द्रगणिशिष्या विशिष्य राजरञ्जनकलोपेताः, पूर्वं श्रीशाहिमहाग्रहेण श्रीहीरविजयसूरिभिः शाहिना सह धर्मगोष्ठीकृते स्थापिता इति शेषः, ते तदा पूज्यपादयोः श्रीमदाचार्यचरणयोः पार्श्वम्, उपकूपं कूपसमीपम्, अध्वगा इव, समभ्येयुः समेताइति संमुखमागताः ॥ ८० ॥

शाहिदत्तमहामत्तमतङ्गजविराजितः ।
सुखाङ्कूरलसत्तूरपूरपूरितदिग्मुखः ॥ ८१ ॥
महीयोमुद्गलश्रेणीपृतनापरिवारितः ।
संमुखः स्मैति संघोऽपि गुरोर्गरिमवारिधेः ॥ ८२ ॥

शाहिना श्रीअकब्बरजलालदीनसुरत्राणेन, दत्ता आज्ञाविषयीकृता ये महामत्ता मतङ्गजा मदकलास्तैर्विराजितः, पुनः, सुखाङ्कूरैः लसत्तूरपूरैः स्फुरन्निःस्वानध्वानविस्तारैः पूरितानि दिग्मुखानि येन सः ॥ ८१ ॥ पुनः, महीयांसो ये मुद्गलाः शाहिपार्श्ववर्तिनस्तेषां श्रेणी तस्याः पृतनया सेनया परिवारितः संघो लाभपुरीय उग्रसेनपुरवर्ती शाहिपार्श्वस्थ इति शेषः, गुरोः किं०, गरिमवारिधेर्माहात्म्यपयोनिधेः, संमुखः स्मैति—आगादिति ॥ इति युगलव्याख्यानमिदम् ॥ ८२ ॥

मौक्तिकस्वर्णरत्नाढ्यैरलङ्कारैरलङ्कृतैः ।
रजतस्वर्णवित्तानां ददानैर्दानमुत्तमम् ॥ ८३ ॥

अध्यारूढैर्वाहनानि रथहस्तितुरङ्गमान् ।
मूर्तैरिवाऽमरैर्लोकैरनेकैः परिवारितः ॥ ८४ ॥

अथ लाभपुराभ्यर्णभूषणं गञ्जसंज्ञकम् ।
पुरं प्रभुरलञ्चक्रे मराल इव मानसम् ॥८५॥

मौक्तिकालङ्कारैः, स्वर्णालङ्कारैः, रत्नालङ्कारैः, अलङ्कृतैर्भूषितैः, पुनः, रजतस्वर्णवित्तानां दानं ददानैः ॥ ८३ ॥ पुनः, रथहस्तितुरङ्गमान् वाहनानीत्यत्र "लिङ्गभेदं तु मेनिरे" इति वचनात्, अध्यारूढैश्चटितैः, अत एव मूर्तैर्मूर्तिमद्भिः, अमरैरिव अनेकैर्लोकैः परिवारितः ॥ ८४ ॥ इत्याद्याडम्बरेण प्रभुर्मरालो मानसं सर इव, लाभपुराभ्यर्णस्य लाहोरसमीपस्य, भूषणं गञ्जसंज्ञकं पुरं शाखापुरविशेषं, अलञ्चक्रेऽलङ्कृतवानिति ॥ इति त्रयाणां व्याख्या ॥ ८५ ॥

तत्राऽथ भानुचन्द्राणां वाचकानां वचोभरैः ।
श्रीगुरूनागतान् ज्ञात्वा मुमुदे मेदिनीपतिः ॥८६॥

तत्र गञ्जपुरे, श्रीआचार्यचरणान् प्रणम्य शाहिपार्श्वे प्राप्तानां भानुचन्द्राणां वाचकानां वचोभरैः श्रीगुरून् आगतान् ज्ञात्वा मेदिनीपतिः श्रीशाहिः, मुमुदे हर्षमधात् ॥ ८६ ॥

अष्टावधाननिध्यानसावधानमना नृपः ।
गुरोराकारयाञ्चक्रे विनेयान् विनयादथ ॥८७॥

अष्टावधानानां निध्याने विलोकने सावधानं मनो यस्य सः, नृपोऽकब्बरशाहिः, गुरोर्विनेयान् आकारयाञ्चक्रे आकारितवान् ॥ ८७ ॥

ऋषयः प्रेषिताः पूज्यपादैः पाण्डित्यपेशलाः ।

राज्ञः सभायामभ्येयुः श्रीनन्दिविजयादयः ॥८८॥

पाण्डित्यपेशलाः पण्डितपदेन दक्षत्वेन च पेशला मनोज्ञाः, श्रीनन्दिविजयादयो गुरुशिष्याः, राज्ञोऽकब्बरस्य, सभायामभ्येयुः ॥ ८८ ॥

रम्यायां मण्डलाऽखण्डाऽऽखण्डलाऽखिलमुद्गलैः ।
संकुलायां महाभट्टोद्भटविप्रादिकोविदैः ॥ ८९ ॥

मण्डलस्य देशस्य अखण्डाः संपूर्णा आखण्डला इन्द्रामण्डलेन्द्रा महाराजान एकदेशाधीशा मरुस्थलीमण्डनमण्डोवरकोट्टपतिराजेन्द्रश्रीमन्मल्लदेवपुत्रश्रीउदयसिंहप्रभृतयः कच्छवाहकषष्टिसहस्रसैन्येश्वरराजश्रीमानसिंहप्रमुखाश्च, पुनरखिलास्तुरुष्काः खानश्रीखानखानाख्यश्रीशेखअबजलफयजलश्रीआजमखानप्रमुखाः शाहिमहामान्याः श्रीजालोरनगरीयस्वर्णगिरिमहादुर्गाधीशश्रीगजनीखानमुख्याश्च तैर्मण्डलाखण्डाखण्डलाखिलमुद्गलैः, रम्यायां, पुनः, संकुलायां, कैरित्याह–महाभट्टाश्चिन्तामणिपर्यन्तप्रमाणपाठिनः शाहिमान्याः पण्डिताः, पुनरुद्भटा उद्धता विप्रादयो वेदवेदाङ्गज्ञा ब्राह्मणाः, आदिशब्दात् काजीकायस्थप्रभृतयः, पुनः कोविदा नैषधान्तकाव्यपञ्चकप्रभृतिप्रभूतसाहित्यशास्त्रपण्डितास्तैः ॥ ८९ ॥

सभायां भूपतेरष्टाऽवधानान्यद्भुतान्यथ ।
साधयाञ्चक्रिरे नन्दिविजयैर्विबुधोत्तमैः ॥ ९० ॥

ईदृश्यां भूपतेरकब्बरस्य सभायां, श्रीगुरुशिष्यैर्नन्दिविजयैः, किं०, विबुधोत्तमैः सुधीश्रेष्ठैः, अष्टाऽवधानानि महाप्राज्ञसाध्यानि, अत एव अद्भुतानि आश्चर्यकारीणि, साधयाञ्चक्रिरे साधितानीति ॥ इति युग्मव्याख्या ॥ ९० ॥

वीक्ष्यैतच्चातुरीं चित्तचमत्कारकरीं भृशम् ।

स्वयं प्रशंसयामास मुहुर्मुहुर्गुरुं नृपः ॥ ९१ ॥

एतच्चातुरीं; किं०, चित्तचमत्कारकरीं, आश्चर्यकारिणीं, वीक्ष्य नृपः स्वयं स्वमुखेन, मुहुर्मुहुर्वारं वारं, गुरुं प्रशंसयामासाऽवर्णयत् ॥ ९१ ॥

अस्मिन्नष्टाऽवधानानि सति साधयति द्रुतम् ।
आसीदाश्चर्यभृत् पर्षद् वर्षत्यब्देऽम्मयीव भूः ॥९२॥

किं बहुना ?, अस्मिन् सति पण्डिते, अष्टाऽवधानानि साधयति सति, पर्षत् सभा, आश्चर्यभृत् चमत्कारवती, आसीत् । यथा भूः पृथ्वी, अब्दे मेघे वर्षति, अम्मयी अम्भोमयी, भवतीति दृष्टान्तः ॥ ९२ ॥

अथ ज्येष्ठस्य दिवसे द्वादश्यामेणभृद्भृति ।
प्राविशत् प्रौढमाहात्म्यः प्रभुर्लाभपुरं पुरम् ॥९३ ॥

ज्येष्ठमासस्य द्वादश्यां दिवसे तिथौ, किं०, एणभृद्भृति सचन्द्रे शुक्ले इति, प्रभुर्लाभपुरं प्राविशत् ॥ ९३ ॥

अथैकादशभिः श्लोकैर्गुरोः संमुखोत्सवं वर्णयति–

तदा च संमुखं सूरेरागच्छद्भिर्द्विपैरभूत् ।
पुरस्य वीथी पृथ्वीव विन्ध्यस्य वसुधाभृतः ॥ ९४ ॥

तदा तत्रोत्सवे, सूरेः संमुखं आगच्छद्भिः द्विपैर्हस्तिभिः, शताधिकैरिति श्रुतिः, पुरस्य लाहोरनगरस्य, वीथी रथ्या, विन्ध्यस्य वसुधाभृतो विन्ध्याचलस्य, पृथ्वीवाऽभूद्, गजमयीत्यर्थः ॥ ९४ ॥

मौक्तिकैः पतितैर्दानवारिभिः सामजन्मनाम् ।
तदा वीथी बभौ सङ्गे गङ्गायमुनयोरिव ॥ ९५ ॥

व्यवहारिणां मिथः संघर्षात् पतितैर्मौक्तिकैः, पुनः, सामजन्मनां हस्तिनां, दानवारिभिर्मदजलैः, वीथी बभौ शुशुभे । इव यथा, गङ्गायमुनयोर्नद्योः, सङ्गे मेलापके, वीथी शोभते । अत्र मौक्तिकानां धवलानां गङ्गोपमा, मदजलानां च श्यामलानां यमुनोपमा चेत्युपमालङ्कारः ॥ ९५ ॥

अनश्ववाराः सुस्फाराः सश्रृङ्गारास्तुरङ्गमाः ।
अभ्येयुः श्रीगुरोरुच्चैः किमुच्चैःश्रवसोऽनुजाः ? ॥९६॥

तुरङ्गमाः, किं०, अनश्ववारा असादिनः, पुनः किं०, सुस्फाराः यतः सश्रृङ्गाराः श्रीगुरोः संमुखं अभ्येयुः आगताः, किं उच्चैःश्रवसः शक्रतुरङ्गमस्य, अनुजा लघुभ्रातर इवेत्युत्प्रेक्षालङ्कारोऽत्रेति ॥ ९६ ॥

पुष्पाणां तत्र सन् पञ्चवर्णानां प्रकरस्तदा ।
बभौ बाणधनुःशस्त्रलक्षणं स्वमिवाऽऽङ्गजम् ॥ ९७ ॥

तत्रोत्सवे, पञ्चवर्णानां पुष्पाणां प्रकरः पुञ्जः, बभौ शुशुभे। इवोत्प्रेक्ष्यते—बाणधनुःशस्त्रलक्षणं, आङ्गजं कान्दर्पं, स्वं धनं, यतोऽनङ्गस्य पुष्पबाणत्वात् पुष्पधन्वत्वात् पुष्पास्त्रत्वात् , ततो निजजेतृगुर्वागमाद् भीतेन तेनाऽनङ्गसुभटेन पुष्परूपं स्वबाणधनुरस्त्रादि सर्वं स्वं त्यक्तमिति निर्गलितार्थः ॥ ९७ ॥

तत्रोत्तुङ्गानि विविधवर्णभृत्तोरणान्यलम् ।
स्थाने स्थाने विभान्ति स्म धनूंषीव दिवस्पतेः ॥९८॥

तत्र विविधवर्णभृत्तोरणानि, स्थाने स्थाने, इवोत्प्रेक्ष्यते—दिवस्पतेः शक्रस्य, धनूंषीव इन्द्रायुधानीव, शोभयेति शेषः ॥९८॥

निर्घोषैर्वर्यतूर्याणां पौराणां तुमुलैस्तथा ।
निर्विवादमभूत् तत्र तदा शब्दगुणं नभः ॥ ९९ ॥

तदा तत्रोत्सवे, वर्यतूर्याणां निर्घोषैः शब्दैः, पुनः, पौराणां नागराणां, तुमुलैः कोलाहलैः, नभो गगनं यच्छब्दगुणं तार्किका वदन्ति तद् निर्विवादमभूत्, यत्र तत्र शब्दानामेव श्रूयमाणत्वात् केवलं शब्दमयं जगज्जातमिति भावः ॥९९॥

दिव्यैर्दुकूलपटलैरुल्लासितनुयष्टयः ।
मौक्तिकैः काञ्चनैरालैर्भूषणैर्भ्राजिमूर्तयः ॥ १०० ॥

तदा पूर्णघटश्रेष्ठमूर्धानोऽभुर्मृगीदृशः ।
पूर्णेन्दुसुन्दरैर्नैकैराका रूपैरिवाऽऽगता ॥ १०१ ॥

दुकूलानां पटलैः प्रभूतैः पट्टकूलैरुल्लासिनी तनुयष्टिर्वपुर्लता यासां ताः, पुनः किं०, मौक्तिकैर्भूषणैर्मुक्ताफलमालादिभिः, काञ्चनैर्ग्रैवेयकमुद्रिकादिभिः, रालैस्तिलकनासिकाभरणकर्णाभरणविशेषैः, भ्राजिनी मूर्तिर्यासां ताः ॥ १०० ॥ पुनः किं०, पूर्णघटैः पानीयभृतैः कुम्भैः श्रेष्ठं मूर्धा, शीर्षं यासां ताः, मृगीदृशः स्त्रियः, अभुः शोभन्ते स्म । इवोत्प्रेक्ष्यते—नैकैरनेकैः, रूपैः, किं०, पूर्णेन्दुसुन्दरैः संपूर्णचन्द्रमण्डलमण्डितैः,राका पूर्णिमेव, आगता, मस्तकस्थायिघटच्छलात् पूर्णचन्द्रवती बहुरूपिणी राकेवाऽऽगतेति भावार्थः ॥ युग्मव्याख्येति ॥१०१॥

लोकैर्दानान्यदीयन्त धनकाञ्चनवाससाम् ।
तदा वित्तस्वर्णवस्त्रवारिवाहैरिवाऽपरैः ॥ १०२ ॥

धनकाञ्चनानि प्रतीतानि वासांसि वस्त्राणि तेषां दानानि लोकैः अदीयन्त दत्तानि, अर्थिभ्य इति गम्यम् । तदेवोत्तरार्धेन द्रढयति—लोकैः; किं०, वित्तस्वर्णवस्त्राणां वारिवाहैर्मेघैः, अत्र प्रत्येकं वारिवाहशब्दः प्रयोज्यस्तेन वित्तवारिवाहैः स्वर्णवारिवाहैः वस्त्रवारिवाहैरपरैरर्थिनां जातैरिति भावः ॥१०२॥

प्रतिमार्गं प्रतिस्थानं प्रत्यट्टं च मनोरमाः ।
ध्वजा रेजुस्तदा तत्र वैजयन्तात्मजा इव ॥ १०३ ॥

तदा तत्र लाभपुरे, प्रतिमार्गं वीथीं वीथीं प्रति, पुनः, प्रतिस्थानं गृहं गृहं प्रति, अथवा पदं पदं प्रति, पुनः, प्रत्यट्टं हट्टं हट्टं प्रति, ध्वजा रेजुः शोभन्ते स्म । इवोत्प्रेक्ष्यते–वैजयन्तस्य इन्द्रध्वजस्य आत्मजा नन्दना इव "वैजयन्तौ तु प्रासादध्वजौ" इति नामकोशवाक्यादिति ॥ १०३ ॥

जगुर्मङ्गलमञ्जूनि गीतानि चलचक्षुषः ।
पुंस्कोकिलकलारावा अस्वप्नप्रमदा इव ॥ १०४ ॥

मङ्गलेन धर्मधर्मिणोरभेदाद् मङ्गलहेतुना ध्वनिना नादेन मञ्जूनि मनोहराणि, गीतानि गातव्यपदानि मङ्गलगीतानि, चलचक्षुषः स्त्रियः, जगुर्गायन्ति स्मेत्यन्वयः । किं०, पुंस्कोकिलः पिकस्तद्वत् कलो मनोज्ञः पटुर्वा आरावो यासां ताः । इवोत्प्रेक्ष्यते– अस्वप्नप्रमदा देवाङ्गना इव, नादेन रूपेणेवेति भावार्थः ॥ १०४ ॥

प्रविश्येत्युत्सवोत्साहमाडम्बरपुरस्सरम् ।
श्रीदः प्रभामिव द्रङ्गोत्तुङ्गं वै-श्रमणेश्वरः ॥ १०५ ॥
श्रीअकब्बरभूपस्य शेखनामनियोगिनः ।
आचार्यः श्रीअबजलफयजस्य गृहं ययौ ॥ १०६ ॥

इति व्यावर्णितप्रकारेण, उत्सवोत्साहो यत्र प्रवेशने इति क्रियाविशेषणम्, अत एवाऽऽडम्बरस्तत्पूर्वकं आचार्यः, श्रीविजयसेनसूरिः, लाभपुरं पुरं, किं०, द्रङ्गोत्तुङ्गं प्रविश्य, कः कामिवेत्याह–श्रीदो धनदः, प्रभां अलकानगरीमिव, किं०, वैश्रमणश्चासौ ईश्वरश्चेति धनवत्त्वाद् वैश्रमणेश्वरः, आचार्यः किं०, वै

निश्चितं श्रमणेश्वर इति॥१०५॥ पुरं प्रविश्य क्व गतवानित्याह–श्रीअबजलफयजस्य; किं०, श्रीअकब्बरभूपस्य शाहेः, शेखेतिनाम्ना ख्यातस्य नियोगिन इत्यधिकारिणः, गृहं ययौ जगामेति ॥ इति युग्मव्याख्या ॥ १०६ ॥

अथ श्रीशाहिना शेखधाम्न्यनूचानहस्तिनः ।
विज्ञायाऽऽगमनं लेभे मुदमन्दतमा तदा ॥ १०७ ॥

अथ प्रवेशाद्युत्सवे प्रवृत्ते सति, शेखश्रीअबजलफयजधाम्नि, अनूचानहस्तिनः सूरिसिन्धुरस्य, आगमनं विज्ञाय ज्ञात्वा, श्रीशाहिनाऽकब्बरसुरत्राणेन, मुत्, कीदृशी,अमन्दतमा स्फुरद्रूपा प्रमोदप्रकर्षः, प्राप्त इति; तदा तत्राऽवसरे ॥ १०७ ॥

मुत्प्राप्तिलक्षणं लक्षयन्नाह–

स्वानंशानिव सश्रीकान् सेवकान् महतो बहून् ।
सद्यः सूरीन्द्रचन्द्रस्याऽऽहूतये प्राहिणोद् नृपः॥१०८॥

नृपः पातिशाहिः, सूरीन्द्रचन्द्रस्य, आहूतये आकारणाय, स्वगृहानिति गम्यम्, बहून् सेवकान् प्राहिणोत्, किंलक्षणान्, इवोत्प्रेक्ष्यते–स्वान् निजान्, अंशान् अत एव महतो गरीयसः, पुनः, अत एव सश्रीकान् सशोभान् " श्रीः शोभायाम् " इति श्रीहैमं वच इति ॥ १०८ ॥

गुरुरप्यात्मनः प्रोच्चैःपदसंपत्तिकारणम् ।
धाम विज्ञाय राज्ञः सबहुमानमुपेयिवान् ॥ १०९ ॥

श्रीशाहिना गुरोराह्वाने कृते गुरुरपि राज्ञो नृपतेः, धाम वेश्म, आत्मनः स्वस्य, प्रोच्चैःपदसंपत्तिकारणं उच्चैःपदं उच्चत्वस्थानं तदेव संपत्तिः संपद् गुणोत्कर्षस्तत्कारणं अत्युत्कर्षप्रौढिमूलं, विज्ञाय ज्ञानविषयीकृत्य, सबहुमानं सादरं,

उपेयिवान् आगत इति, पक्षे गुरुर्बृहस्पतिः, राज्ञश्चन्द्रस्य, धाम कर्काख्यराशिं, स्वोच्चताकारणं मत्वोपेत्येवेति संगतं, ज्योतिः– शास्त्रे कर्कस्वामी चन्द्रस्तद्धाम्नि समागतो गुरुरुच्च इति प्रतीयते ॥ १०९ ॥

गुरुमायान्तमालोक्य राजोल्लासिमना अभूत् ।
सज्जीवस्येक्षणात् स्थाने मुत् सोमस्याऽऽवनीपतेः॥११०॥

राजाऽकब्बरः, गुरुं किं०, आयान्तं स्वसौधं प्रत्यागच्छन्तं, दृष्ट्वा उल्लासिमना अभूत्, अमुमेवार्थं समर्थयति–स्थाने इति युक्त एवायमर्थः, सज्जीवस्य श्रेष्ठगुरोः, ईक्षणाद् विलोकनात्, सोमस्य चन्द्रस्य, मिथो वैराभावेन, पक्षे सोमस्य सकीर्तेः सकान्तेर्वा "उमा कीर्तिः, कान्तिश्च" इति अनेकार्थः, ततः सह उमया वर्तते यः स सोमस्तेन सोमस्य अवनीपतेर्मुद् भवत्येवेति शब्दश्लेष इति ॥ ११० ॥

सदकारि गुरूराज्ञा स्वागतप्रश्नपूर्वकम् ।
तत्स्थाने मान्यतेऽनेन यत् सर्वज्ञसुहृत् प्रभुः॥१११॥

श्रीसूरेर्नयनातिथीकरणानन्तरं गुरूराज्ञा सदकारि सत्कृत इति क्रियासंबन्धः । कथमिति स्वागतप्रश्नपूर्वकं स्वागतं सुखेनागतमित्यादिप्रश्नपूर्वकं, तत्स्थाने तद् युक्तं, यत्प्रभुरनेन राज्ञा मान्यते मानस्थानं विधीयते, यतः स सर्वज्ञसुहृत् सर्वज्ञः शिवस्तस्य सुहृद् मित्रं स्वाश्रयमित्रत्वेन, राज्ञा चन्द्रेण, मान्यत-एव, तत्त्वतस्तु सर्वे ज्ञाः पण्डितास्तेषां सुहृन्मित्रम्, अथवा सर्वज्ञो जिनेन्द्रस्तेन तस्मिन् वा सुशोभनं हृद् यस्येति कृत्वाऽयमर्थः समर्थ इति ॥ १११ ॥

महाव्रतिनमत्यस्तमन्युं दक्षमनोहरम् ।
वीक्ष्याऽहृष्यद् गुरुं शाहेः सभा सीमन्तिनी सती॥११२॥

शाहिसत्कारसंप्राप्तौ शाहेः सभारूपा सीमन्तिनी स्त्री, गुरुं विलोक्याऽहृष्यद् हृष्टेत्यन्वयः, सती विद्यमाना शोभना वा, गुरुं किं०, महान्ति व्रतानि सर्वप्राणातिपातविरमणादीनि यस्येति तं, तथाऽत्यतिशयेनाऽस्तो मन्युः क्रोधो येनेति तं, तथा दक्षाणां मनांसि हरतीति तं, पक्षे सती पार्वती महाव्रतिनमीश्वरं वीक्ष्य हृष्यति, किं०, अत्यस्तो मन्युर्दैत्यो यज्ञो वा येनेति तं "मन्युर्दैत्ये क्रतौ क्रुधि" इत्यनेकार्थ इति, पुनः किं०, दक्षस्य पार्वतीपितुर्मनो हरतीति तं, गुरुं गरिष्ठं, सभा सकान्तिरिति पार्वतीविशेषणम् ॥ ११२ ॥

निस्सरद्दशनज्योतिर्मौक्तिकैः प्राभृतं सृजन् ।
शाहिः स्माह सुरचनैर्वचनैर्विनयी नयी ॥ ११३ ॥

शाहिसूर्योर्मेलापके शाहिर्गुरुं, प्रतीत्यध्याहारे, स्माह प्रोक्तवानित्यन्वयः । सुरचनैः सुघटैः, वचनैर्वाक्यैः, शाहिः किं०, विनयी, विनयवान्, अत एव नयी न्यायवान्, कथं स्माह, निःसरन्ति दशनानां दन्तानां ज्योतींषि तान्येव मौक्तिकानि तैः, प्राभृतं सृजन् रचयन्निवेति ॥ ११३ ॥

अस्ति शस्तं शरीरे वः परिवारे च पेशले ।
इहाऽऽगतिकृतामासीद् युष्माकं क्षेममध्वनि ॥११४॥

किं स्माहेति दर्शयति–हे गुरवः! वः शरीरे, च पुनः, पेशले परिवारे शस्तं मङ्गलमस्तीत्यन्वयः । प्रश्नान्तरम्–इहाऽऽगतिकृतां अस्मिन् देशे आगतिकृतां समागच्छतां, युष्माकमध्वनि मार्गे, क्षेमं कल्याणमासीदिति ॥ ११४ ॥

क्व सन्ति सकलप्राणिप्रीणनप्रवणाशयाः ।
श्रीहीरविजयाः सूरिसिन्धुराः साधुबन्धुराः ?॥११५॥

अथ श्रीपरमगुरूनुद्दिश्य प्रश्नविशेषः—श्रीहीरविजयाः सूरिसिन्धुरा हस्तिनः, साधुषु बन्धुरा मनोज्ञाः, क्व कुत्र देशे नगरादौ, सन्तीति संबन्धः । कुत इयती पृच्छा ?, यतस्ते किं०, समस्तप्राणिनां प्रीणने प्रीत्युत्पादने प्रवणस्तत्पर आशयोऽध्यवसायो येषां ते ॥ ११५ ॥

ते पूज्यकुञ्जराः किञ्च कुर्वन्तः सन्ति सम्प्रति ।
तेषां चाऽस्ति समाधानं शरीरे सुकृतार्थिनाम् ?॥११६॥

किञ्चेति पुनः प्रश्ने, ते पूज्यकुञ्जराः, किं कुर्वन्तः सन्ति संप्रत्यधुनेति, तेषां, च सुकृतमेवार्थो येषां तेषां, शरीरे समाधानमस्तीति ॥ ११६ ॥

दन्तद्युतिपयःपूरक्षालिताखिलदिङ्मुखः ।
अथ ब्रूते स्म श्रमणाधीश्वरः पृथिवीश्वरम् ॥११७॥

अथेति शाहिप्रश्नानन्तरम्, श्रमणाधीश्वरः सूरिः, पृथिवीश्वरं राजानं, ब्रूते स्माऽवदत् । किं०, दन्तानां द्युतिरूपपयःपूरेण क्षालितान्यखिलदिशां मुखानि येनेति ॥ ११७ ॥

अथ यथा राज्ञा पृष्टं तथाऽनुक्रमेणैव गुरुरप्याह—

भवेत् कुवलयोल्लासो नूनं राज्ञोऽनुभावतः ।
तेनाऽस्ति सातमस्माकं तदन्तर्वर्तिनां बहु ॥ ११८ ॥

नूनं निश्चयेन, राज्ञश्चन्द्रस्य, अनुभावतः कुवलयानां चन्द्रविकासिकमलानां उल्लासो भवेत्, तेन हेतुना, तवापि राज्ञोऽनुभावात्, तदन्तर्वर्तिनां कुवलयान्तर्वर्तिनां भूवलयान्तःस्थायिनां, अस्माकमपि बहु सातमस्तीति श्लेषव्याख्या ॥ ११८ ॥

राजन् ! व्योम्नीव तरणौ धरणौ तपति त्वयि ।
द्विषद्घूकैः समं नष्टं भयान्धतमसैरिह ॥ ११९ ॥

हे राजन् ! व्योम्नि तरणाविव, धरणौ भूमौ, त्वयि तपति सति, द्विषद्घूकैर्वैरिकौशिकैः, समं भयान्येव अन्धतमसानि तैः, इहेति सर्वजगति, नष्टं गतमिति ॥ ११९ ॥

त्वत्प्रभावात् ततः शाहे ! सर्वेषां कुशलं पथि ।
अकिञ्चनानामस्माकं निर्ग्रन्थानां तु का कथा?॥१२०॥

हे शाहे ! ततो हेतोस्त्वत्प्रभावात् पथि सर्वेषां कुशलमस्ति; तेनैवाऽकिञ्चनानां तत एव निर्ग्रन्थानां, अस्माकं का कथा ? ये सकिञ्चनास्तेऽपि त्वत्प्रभावतः सकुशलाः सन्ति, तर्हि वयं निर्ग्रन्थाः सुतरां कुशलेन वर्तामहे ॥ १२० ॥

सूरिश्रीहीरविजया गूर्जरत्रासरोजिनीम् ।
भूषयन्तोऽधुना सन्ति राजहंसा इवामलाः ॥१२१॥

श्रीपरमगुरून् प्रत्युद्दिश्य प्रश्नप्रतिवचः प्रपञ्चयति, यथा–सूरिश्रीहीरविजयाः, गूर्जरत्रारूपा या सरोजिनी तां, राजहंसा–इवाऽधुना भूषयन्तः सन्ति, शेषं स्पष्टमिति ॥ १२१ ॥

सच्चिन्तनधृतिध्याननिध्यानधनधारिणः ।
श्रीपारमेश्वरोपास्तिप्रह्वास्ते सन्त्यहर्निशम् ॥ १२२ ॥

अथ ते परमपूज्याः, किं कुर्वन्तीत्यादिप्रश्नप्रत्युत्तरं वितरति यथा–ते पूज्याः किं०, सदिति अत्र सच्छब्दः प्रत्येकं योज्यः, तेन सच्चिन्तनं सम्यग् भावनं, पुनः, सती या धृतिः संतोषस्तत्प्रधानं यद् ध्यानं जापरूपं, तथा सद् निध्यानं सदवलोकनं देवादिदर्शनं तदेव धनं तद् धरन्तीति, अत एव श्रीपरमेश्वरसंबन्धिनी या उपास्तिः सेवा तस्यां प्रह्वाः सन्तीति ॥ १२२ ॥

सर्वेषामपि धर्माणां नीतिरीत्यनुसारिणाम् ।
राजैव रक्षकः सेतुरिव कासारपाथसाम् ॥ १२३ ॥

मत्वेति सार्वभौमत्वात् त्वां सर्वत्रोपकारिणम् ।
आशीर्भिरभिनन्दन्तस्ते सन्ति यतिसत्तमाः ॥१२४॥

सर्वेषां समस्तानामपि धर्माणां दानादिभेदभिन्नानां नीतिर्नयो रीतिर्मर्यादा, यद्वा नीतेर्नीत्या वा रीतिस्तदनुसारिणां, राजैव रक्षकः, कासारपाथसां सेतुरिव–यथा सेतुः पालिः,सरःपयसां रक्षक इति ॥ १२३ ॥ हे शाहे ! इति मत्वा त्वां सार्वभौमत्वात् सार्वभौम इव सार्वभौमस्तस्य भावः सार्वभौमत्वं तस्मात्, सर्वत्राप्युपकारिणं ज्ञात्वा आशीर्भिरभिनन्दन्तस्ते यतिसत्तमाः मुनिश्रेष्ठाः, सन्ति; तव धर्माशिषं ददानाः सन्तीति संगतिः ॥ इति युग्मव्याख्यानम् ॥ १२४ ॥

सर्वेषामपि धर्माणां जननात् परिपालनात् ।
दयैवाऽभिमता माता द्रुमाणामिव मेदिनी ॥ १२५ ॥

हे राजन् ! सकलधर्माणां जननं निष्पादनं पुनस्तत्परिपालनं दययैवाऽऽतन्यते, तस्मात् समस्तधर्माणां माता दयाऽभिमता, यथा–द्रुमाणां माता मेदिनी, जननपालनादिकर्तृत्वं मातुरेवेति ॥ १२५ ॥

सुकृतेषु समस्तेषु मुनीनां मनसो मता ।
करुणा हरिणाङ्कस्य नक्षत्रेष्विव रोहिणी ॥१२६॥

समस्तेषु पुण्येषु मुनीनां मनसः करुणाऽभीष्टेति समग्रधर्माचरणेषु दयायाः प्राधान्यं मन्वते, यथा–हरिणाङ्कस्य चन्द्रस्य, सकलनक्षत्रेषु, रोहिणी मतेति ॥ १२६ ॥

सा कृपा त्वद्वचःपाथःपूरैः पल्लविता भृशम् ।
व्यानशे सांप्रतं विश्वं विश्वं वल्लीव मण्डपम् ॥१२७॥

हे नृप ! एवं वर्णिता सा कृपा त्वद्वचःपाथःपूरैर्भृशमति-

शयेन, पल्लविता सांप्रतमधुना, विश्वं समस्तं, विश्वं जगद्, व्यानशे व्याप्नोति स्मेति, यथा वल्ली मण्डपं व्याप्नोतीति ॥ १२७ ॥

अनया दयया तेषां तुष्टिरस्त्यातिभूयसी ।
सत्वरं शरदाऽनल्पं नैर्मल्यमिव पाथसाम् ॥ १२८ ॥

हे भूप ! अनया त्वत्तः प्रसृतया, दयया; तेषां परमपूज्यानां श्रीगुरूणां, भूयसी बह्वी तुष्टिरस्तीत्यन्वयः । यथा—पाथसां पानीयानां, शरदा शरत्कालेन, अनल्पं नैर्मल्यं निर्मलत्वं, तथेति ॥ १२८ ॥

धर्मस्येव दयाऽमुष्या मूलं च त्वां नरेश्वरम् ।
ज्ञात्वा ते सूरयः सन्ति त्वयि कल्याणकाङ्क्षिणः॥१२९॥

तेषां गुरूणां दयाया अभीष्टत्वेन हे राजन् ! यथा धर्मस्य मूलं दया, चकारः पुनरर्थे, तथा अमुष्या दयायाः, मूलं त्वां नरेश्वरं ज्ञात्वा ते सूरयस्त्वयि कल्याणकाङ्क्षिणो मङ्गलेच्छवः, सन्ति यथा शाहेः सर्वदा कल्याणं स्यात् तथैव स्पृहयन्तीति भावः ॥ १२९ ॥

तथा तेषां तपोध्यानाऽध्ययनप्रमुखा क्रिया ।
समस्ता स्वस्तिमत्यस्ति घनसिक्तेव वल्लरी ॥ १३० ॥

तथा पुनः, तेषां हीरसूरीणां, तपो द्वादशधाऽनशनादि, ध्यानं स्वाध्यायसूरिमन्त्रादिगणनरूपं, अध्ययनं पठनपाठनादि, तत्प्रमुखा, क्रिया दिवानक्तं कर्तव्यरूपा सामाचारी, समस्ता स्वस्तिमती सकल्याणा, अस्तीति; यथा घनेन मेघेन, सिक्ता, वल्लरी सकल्याणा स्यादिति ॥ १३० ॥

इति सूरिसभाचन्द्रवचनैरमृतैरिव ।
निपीतैरवनीजानिचकोरः प्रमना अभूत् ॥ १३१ ॥

इत्युक्तरूपैः, सूरीणां सभा तस्यां द्योतकत्वाच्चन्द्र इव चन्द्रस्तस्य वचनैः, उत्प्रेक्ष्यते—अमृतैरिव चन्द्रस्यामृतमयत्वात्, निपीतैः; अवनीजानिर्नृपः स एव चकोरः, प्रमनाः प्रमुदितोऽभूदित्यर्थः ॥ १३१ ॥

अहो ! मनीषैवाऽमीषामहो ! वचनचातुरी ।
चिन्तयन्निति चित्तान्तः पार्थिवः पुनरभ्यधात् ॥१३२॥

प्रमोदप्राप्तेरेवेति चित्तान्तश्चिन्तयन् पार्थिवः पुनरभ्यधात् प्रोवाचेति। किमिति?, अहो ! अमीषां ज्ञानजुषां मनीषा, अहो ! चतुराणां वचनचातुरीति ॥ १३२ ॥

किमभ्यधादित्याह—

तेषामष्टावधानानां दिदृक्षाऽस्ति सभासदाम् ।
लतेव पयसां सेकात् सद्यः साऽस्तु फलेग्रहिः ॥१३३॥

तेषां पूर्वदृष्टानां, अष्टसंख्यानां अवधानानां, सभासदां सभ्यजनानां, दिदृक्षा दर्शनेच्छा, अस्तीति; हे सूरे ! अध्याहारात्, सा दिदृक्षा, फलेग्रहिः फलवत्यस्तु, यथा—पयसां सेकात् लता फलवती भवतीति ॥ १३३ ॥

ततः श्रीनन्दिविजयाभिधोऽथ विबुधोत्तमः ।
पूर्ववत् साधयामासाऽष्टाऽवधानानि सत्वरम् ॥१३४॥

ततः शाहेर्वचनादनु, श्रीगुरुशिष्यः श्रीनन्दिविजयाख्यो विबुधोत्तमो विद्वद्वरः, पूर्ववत् पूर्वरीत्या, अष्टावधानानि साधयामास साधितवान्, सत्वरमिति शीघ्रं, पण्डितप्रयोज्येषु प्रयोजनेषु पण्डिता न विलम्बन्त इति ॥ १३४ ॥

तत्कलारञ्जितो राजा समक्षं समपर्षदः ।
बिरुदं खुशफेमेति ददावस्मै मनीषिणे ॥ १३५ ॥

तस्य श्रीगुरुविनेयस्य कलयाऽष्टासु स्थानेषु सावधानताकलितया दृष्टया सत्या, राजाऽकब्बरशाहिः, रञ्जितः सन्, सनपर्षदः सकलसभायाः समक्षं, अस्मै मनीषिणे विबुधाय, खुशफेमेति बिरुदं, ददौ दत्तवानिति ॥ १३५ ॥

रञ्जितराजेन्द्रलक्षणान्यथो दर्शयति—

अथ शाहिप्रदत्तोद्यद्वाद्यवादनपूर्वकम् ।
सश्रीकैः श्रावकैः क्लृप्तमहोत्सवपुरस्सरम् ॥ १३६ ॥

उपाश्रयमलञ्चक्रे श्रीअनूचानचक्रभृत् ।
वैजयन्तमिव स्वर्गिस्वामी जयसुखाश्रयम् ॥ १३७ ॥

शाहिना प्रदत्तानि यानि उद्यद्वाद्यानि स्फुरन्निःस्वानादीनि तद्वादनपूर्वकं, तथा सश्रीकैः समृद्धिसंपन्नैः, श्राद्धैः क्लृप्तो रचितो यो महानुत्सवस्तत्पुरस्सरं यदा श्रीशाहिः सबहुमानं स्ववाद्यादि प्रदत्ते तदा शुभंभावुकाः श्रावकाः सुतरां महोत्सवादि रचयन्ति, यतः पूज्यः सर्वत्र पूज्यत इति ॥ १३६ ॥ अथ शाहिसन्मानप्राप्त्यनन्तरं, श्रीअनूचानेषु चक्रभृत्, उपाश्रयं पौषधागारम्, अलञ्चक्रेऽलङ्कृतवानिति, कः कमिवेत्याह—स्वर्गिस्वामी शक्र इव, वैजयन्तं निजनिवासप्रासादमिव, किं०, जयसुखयोराश्रयं, पक्षे जय इन्द्रसुतस्तस्य सुखाश्रयं सुखस्थानमिति ॥ इति युग्मव्याख्या ॥ १३७ ॥

रूप्यरूपैः प्रकुर्वाणः सुप्रसिद्धां प्रभावनाम् ।
श्रीसंघस्तद्दिनात् तत्र चक्रेऽथाष्टाह्निकोत्सवम् ॥१३८॥

अथेति श्रीगुरूणामुपाश्रयागमनादनु, श्रीसंघस्तद्दिनादारभ्य, अष्टाह्निकोत्सवं अष्टदिनान् यावदुत्सवं, चक्रे। कथमिति?, रूप्यरूपैः रजतनाणकैः, सुप्रसिद्धां सर्वलोकगम्यां, प्रभावनां प्रकुर्वाण इति ॥ १३८ ॥

अष्टाह्निकोत्सवो भूयान् यदाऽभूत् तत्र चित्रकृत् ।
एकच्छत्रमिवाऽज्ञायि राज्यं जैनं जनैस्तदा ॥१३९॥

तदा सकलसंघकृताष्टाह्निकोत्सवसमये, जनैरन्यतीर्थीयैः, जैनं राज्यमेकच्छत्रमिवाऽज्ञायि ज्ञातमिति, शेषं सुबोधम्॥१३९॥

सर्वतः कमलोल्लासकारिणं कान्तिहारिणम् ।
प्रकाशमिव घर्मांशोर्महिमानमिमं गुरोः ॥ १४० ॥
संवीक्ष्याऽसहमानेन केनचिद् दुर्द्विजन्मना ।
प्रत्यपादि पुरः पृथ्वीपतेरिति महामतेः ॥ १४१ ॥

युगपद् द्वयोर्व्याख्या–इमं यथावर्णितं, गुरोर्महिमानं संवीक्ष्य दृष्ट्वा, असहमानेन केनचिद् दुर्द्विजन्मना दुष्टब्राह्मणेन, पृथ्वीपतेः शाहेः, पुर इति,इत्यग्रे प्रोच्यमानं,प्रत्यपादि प्रोक्तमिति, महिमानं किं०, सर्वतः सामस्त्येन, कमलाया उल्लासस्तत्कारिणं, पुनः किं, कान्त्या शोभया हारिणं मनोहरं, घर्मांशोः प्रकाशमिव यथा घर्मांशोः सूर्यस्य प्रकाशमसहमानेन केनचिद् दुष्टेन द्विजन्मना कौशिकेनेति, प्रकाशं किं०, कमलानां पङ्कजानामुल्लासकारिणं कान्तिर्द्युतिस्तया हारिणमिति श्लेषः ॥ इति युग्मव्याख्या ॥ १४० ॥ १४१ ॥

निरञ्जनं निराकारं निर्विकारं निरंहसम् ।
निराधारं निराबाधं नीरागं निष्परिग्रहम् ॥ १४२ ॥

पुनः—

पापपुञ्जस्य हर्तारं कर्तारं च सुखाश्रियः ।
नाऽनभिज्ञा अमी जैना मन्यन्ते परमेश्वरम् ॥१४३॥

इयमपि युग्मव्याख्या–दुष्टः किमाचष्टेत्याह–हे शाहे ! अमी

जैना अनभिज्ञा मूढाः, परमेश्वरं न मन्यन्त इत्यन्वयः । परमेश्वरं किंविशिष्टमित्याह–निर्गतं अञ्जनं लेपनं प्रसङ्गात् कर्मणां य-स्मात् तं निरञ्जनं, पुनः किं०, निराकारं आकारो हस्तपादाद्यव-यवरचनारूपस्तेन रहितं, पुनः किं०, निर्विकारं विकारो दुष्प्रवृ-त्तमानसिकादिस्तद्रिक्तं, पुनः किं०, निरंहसं निष्पापं, पुनः किं०, निराधारं आधारः परकायाश्रयस्तेन रहितं, पुनः किं०, निराबाधं आबाधा रागद्वेषकषायरूपा, अथवा शरीरमानसपीडा तया र-हितं, पुनः किं०, नीरागं यत एव निराबाधं तत एव नीरागं, पुनः किं०, निष्परिग्रहं परिग्रहो बाह्याऽऽन्तरप्रतिबन्धस्तद्रहितं, अत एव पापपुञ्जस्य हर्तारं, च पुनः, सुखश्रियः कर्तारं, ईदृशं जगत्कर्तारं न जैना मन्यन्त इति ॥ इति युग्मव्याख्यानम् ॥ ॥ १४२ ॥ १४३ ॥

परमेश्वरं न मन्यन्त एतावता किमित्याह–

जगन्मूलं न मन्यन्ते ये मूढाः परमेश्वरम् ।
तेषां पन्थाः वृथाऽङ्केन विना बिन्दुरिव ध्रुवम् ॥ १४४ ॥

ये मूढा अज्ञानिनो जगन्मूलं जगज्जनकं, परमेश्वरं जगदी-श्वरं, न मन्यन्ते; तेषां पन्थाः पुण्याचरणरूपो मार्गः, वृथाऽकि-ञ्चित्कर इति, यतो जगदीश्वरसत्ताव्यतिरेकेण ते यत्किञ्चित् सुकृताचरणं कुर्वन्ति, तत् तेषां निष्फलमेव, यथा अङ्केन विना बिन्दुर्नाऽभीष्टसंख्यापूरकः स्यादिति दृष्टान्तः ॥ १४४ ॥

तेन शाहिसभाभानो ! त्वादृशामवनीभुजाम् ।
नैतेषां दर्शनं श्रेयः स्त्रीणामृतुभृतामिव ॥ १४५ ॥

हे शाहिसभाभानो ! तेन प्राक्प्रणीतेन हेतुना, त्वादृशां अवनीभुजां भवादृशां राज्ञां, न एतेषां जैनानां, दर्शनं श्रेयः प्र-

शस्यं, यथा ऋतुभृतां स्त्रीणां, दर्शनमश्लाघीयस्तथा तवाऽप्यमीषां दर्शनमनर्हमिति भावः ॥ १४५ ॥

अज्वलद् भूपकोपाग्निरिति तद्वचनेन्धनैः ।
यत् पार्श्वरूपभाग् राज्ञां हृत् स्यादच्छ इव ध्रुवम् ॥१४६॥

इति प्रोक्ततद्वचनेन्धनैः भूपस्य शाहेः कोपाग्निः, अज्वलद् जज्वालेति। यदिति हेतोः, राज्ञां हृच्चेतः, पार्श्वरूपभाक् पार्श्ववर्ति यद्रूपं तद्भजतीति पार्श्वरूपभाक्, क इवेत्याह—अच्छ इव स्फटिकरत्नमिवेति ॥ १४६ ॥

और्वमग्निमिवाऽम्भोधिर्भूपोऽन्तः कोपमुद्वहन् ।
प्रस्तावेऽथ समायातानूचेऽनूचानपुङ्गवान् ॥ १४७ ॥

अथेति प्रस्तावे, भूपः; अन्तः कोपं उद्वहन् समायातान् अनूचानपुङ्गवान् ऊचे प्रोक्तवानिति, यथा अम्भोधिः समुद्रः, और्वमग्निं वडवानलं, प्रच्छन्नं वहति तथा गुप्तक्रोधं वहन् भूपः सूरीन् समये समायातान् प्रोवाचेति ॥ १४७ ॥

बाह्यक्रियाकलापेन व्यंसका विश्वभूस्पृशाम् ।
अमी नैव महात्मानो मन्यन्ते परमेश्वरम् ॥ १४८ ॥
क्षारादिव सिचस्तैलमालिन्यं मम मानसात् ।
शङ्का प्रयातु प्रलयं गुरो ! त्वद्वचनादियम् ॥१४९॥

बाह्या लोकप्रत्ययोत्पादिनी न तु मनःशुद्धिविधायिनी या क्रिया तस्याः कलापेन, विश्वभूस्पृशां समस्तप्राणिनां, व्यंसका विप्रतारकाः, अमी महात्मान औज्वलिकाः; नाम्नैव महात्मानः, परमेश्वरं नैव मन्यन्ते ॥ १४८ ॥ हे गुरो ! इयं विद्वत्योक्ता, शङ्का मम मानसात् त्वद्वचनात् प्रलयं नाशं प्रयातु, यथा—क्षारात् क्षारसंपर्कात्, सिचस्तैलमालिन्यं वस्त्रस्य तैलच्छटोत्पन्नं मलिनत्वं, प्रयातीति ॥ इति युग्मव्याख्या ॥ १४९ ॥

पयःपूर्णपयोवाहगर्जितं तर्जयन् गिरा ।
जगाद जगतीनाथं मुनिनाथोऽथ धीरधीः ॥१५०॥

अथ शाहिनेत्युक्ते सति, धीरधीर्निश्चलमतिः साहसिकक्ष्मा-पतिः, मुनिनाथः श्रीविजयसेनसूरिः, जगतीनाथमकब्बरशाहिं, पयःपूर्णपयोवाहगर्जितं सजलजलधरध्वनिं, गिरा वाण्या, तर्जयन् जगादाऽब्रवीदिति ॥ १५० ॥

किं सूरिरुवाचेत्याह—

अस्मन्मनःसरोजन्मविकासनविवस्वतः ।
शृणु शाहे ! सावधानः स्वरूपं परमात्मनः ॥१५१॥

हे शाहे ! त्वं सावधानः शृणु, अस्मन्मनोरूपस्य सरोजन्मनः कमलस्य विकासने विवस्वतः सूर्यस्य, परमात्मनः परमेश्वरस्य, स्वरूपं; यादृशः परमात्माऽस्माभिर्मन्यते तादृशं तत्स्वरूपं त्वं शृण्विति ॥ १५१ ॥

अथाऽतः प्रत्येकं क्रियाऽन्वययोगेऽपि अर्थतस्त्रयोविंशत्या कुलकेन परमेश्वरस्वरूपं प्रकटयति यथा—

आमोदामृतसहितां न श्रीशान्तो रसाधिपः ।
विजहाति दृशं यस्य हंसः पाथोजिनीमिव ॥१५२॥

यस्य दृशं शान्तो रसाधिपः न विजहाति न त्यजतीत्य-न्वयः । दृशं किं०, आमोदामृतेन हर्षपीयूषेण सहितां पूरिता-मिति, कः कामिव, हंसः पाथोजिनीं पद्मिनीं, न मुञ्चति तथेति ॥ १५२ ॥

प्रसन्नं वदनं यस्य बिम्बमिन्दोरिवाऽनघम् ।
प्रदत्ते जगतां बह्वीं संपत्तिं कुमुदामिव ॥ १५३ ॥

यस्य वदनं जगतां बह्वीं संपत्तिं परमप्रमोदरूपां, प्रदत्ते;

यतः प्रसन्नं प्रसत्तिमत्, यथा इन्दोश्चन्द्रस्य, बिम्बं कुमुदां कैरवाणां, प्रोल्लासरूपां संपत्तिं दत्ते, उभयमप्यनघं निर्मलमिति ॥ १५३ ॥

चक्रकोदण्डदण्डास्त्रत्रिशूलप्रमुखायुधैः ।
प्रद्वेषपिशुनैः पाणी यस्य न स्तः कलङ्कितौ ॥१५४॥

तथा यस्य पाणी हस्तौ, चक्रकोदण्डदण्डास्त्रत्रिशूलैः प्रतीतैरित्याद्यायुधैः प्रहरणैः, किं०, प्रद्वेषस्य पिशुनैः सूचकैः, कलङ्कितौ न स्तो न भवतः, यत्करौ द्वेषसूचकोपकरणैरसंपृक्ताविति ॥ १५४ ॥

हावैर्भावैर्विभावैश्च स्मरस्मरणकारणम् ।
भवन्ति किल यस्याङ्के नाऽलङ्काराय सुभ्रुवः ॥१५५॥

द्वेषचिह्नोपकरणराहित्यं प्रदर्श्य रागाङ्गराहित्यं प्रदर्शयति–यस्याङ्के सुभ्रुवो नालङ्काराय भवन्ति, सुभ्रुवः स्त्रियः,किं०, हावो मुखविकारः, "भावश्चित्तसमुद्भवः" इति वचनादाभ्यन्तरो रागोद्रेकः, विभावो वचःप्रकाश्यहार्दप्रेमरसः, तैः कृत्वा स्मरस्य स्मरणं स्मृतिस्तत्कारणं, कामिन्यो हि हावादिभिः कामं स्मारयन्ति, ता यदङ्के न दृश्यन्त इति ॥ १५५ ॥

वाहनं तुरगच्छागविहङ्गवृषभादिकम् ।
अलीवाऽगन्धि पुष्पं योऽध्यास्ते नाऽऽमोदमेदुरः॥१५६॥

यो वाहनं यानं; किं०, तुरगा अश्वाः, छागा मेषाः, विहङ्गा मयूरमरालादयः, वृषभाः प्रतीतास्तदादिकं न अध्यास्ते नारोहति, यथाऽलिरिवालीत्यपि, तेन अली भृङ्ग इवाऽगन्धि गन्धवर्जितं, पुष्पं नाऽध्यास्ते, किं०, आमोदेन हर्षेण मेदुरः पुष्टः, पक्षे, आमोदेन गन्धेन मेदुर इति ॥ १५६ ॥

अपारक्लेशाकूपारनिमज्जननिबन्धनम् ।
मित्रपुत्रकलत्रादिर्यस्य नास्ति परिग्रहः ॥ १५७ ॥

मित्रपुत्रकलात्रादिर्यस्य परिग्रहो नास्तीति, परिग्रहः किं०, अपारः क्लेश एवाऽकूपारः समुद्रस्तत्र यन्मज्जनं ब्रुडनं तस्य निबन्धनं निदानमिति ॥ १५७ ॥

त्रिकालिङ्गवचनस्वरूपाखिलवस्तुभृत् ।
यस्य ज्ञानमहाम्भोधौ त्रिलोकी शफरीयाति ॥१५८॥

तथा यस्य ज्ञानरूपो महाम्भोधिर्महार्णवस्तस्मिन् त्रिलोकी त्रिजगती,शफरी मत्सी तद्वदाचरतीति शफरीयति,त्रिलोकी किं०, त्रिकाले अतीतानागतवर्तमानलक्षणे, त्रिलिङ्गे पुंस्त्रीनपुंसकरूपे, त्रिवचने एकद्विबहुत्वरूपे, अथवाऽन्यदर्थयुष्मदर्थाऽस्मदर्थरूपे, स्वरूपेणाऽखिलं वस्तु बिभर्तीति त्रिकाललिङ्गवचनस्वरूपाखिलवस्तुभृत्, एतावता त्रिजगद्गताशेषभूतभविष्यद्भाविवस्तुप्रकाशकं, यज्ज्ञानमस्तीति भावार्थः ॥ १५८ ॥

दौर्गत्यमिव मन्दारे शीतिमेव विवस्वति ।
न कोपः प्रकटाटोपः कर्हिचिद् यत्र दोष्मति॥१५९॥

तथा यत्र दोष्मति समर्थेऽपि, न कोपः प्रकटाटोपः स्फुरद्रूपोऽस्तीति संटङ्कः । यथा मन्दारे कल्पपादपे, दौर्गत्यं दारिद्र्यं, पुनः, यथा विवस्वति सूर्ये, शीतिमा शैत्यं अत्यन्ताभावेन, तथा यस्मिन् कोपलेशोऽपि नास्तीति ॥ १५९ ॥

पुमर्थसार्थसामर्थ्यवारणं क्लेशकारणम् ।
प्रभुं प्रमीला नाऽभ्येति कामिनी कुपितेव यम् ॥१६०॥

तथा यं प्रभुं प्रमीला निद्रा, नाभ्येति नायातीत्यन्वयः । कीदृशी, पुमर्थसार्थस्य पुरुषार्थसार्थस्य सामर्थ्यं समर्थता तद्वारणं,

पुनः, क्लेशस्य कारणं निद्राऽपि प्रमादान्तःपातित्वेन क्लेशस्यैव मूलं, यथा—कुपिता कामिनी कान्ता, कान्तं नाभ्येतीति दृष्टान्तः ॥ १६० ॥

प्रद्योतनः सदुद्द्योतः खद्योत इव राजते ।
यज्ज्ञानपरभागस्य पुरस्तादतिशायिनः॥ १६१ ॥

तथा यज्ज्ञानपरभागस्य यदीयज्ञानगुणोत्कर्षस्य, पुरस्तात् प्रद्योतनः सूर्यः, खद्योत इव राजते, यतोऽतिशायिनः सर्वोत्कृष्टस्येति ॥ १६१ ॥

अस्तोकलोकेष्वालोककरीणां यद्गिरां पुरः ।
राजते राजताऽऽदर्शे इवेन्दुरतिसुन्दरः ॥ १६२ ॥

यद्गिरां यद्वाचां, पुरः पुरस्तात्, राजतादर्शे इव रूप्यमयदर्पण इव, इन्दुश्चन्द्रोऽतिसुन्दरोऽपि राजते, राजतदर्पणस्य हि न तादृक् प्रकाशकत्वम्, तस्माद् यद्वाण्याः पुरश्चन्द्रस्तादृश एव प्रतिभासते, यतो यद्गिरां किं०, अस्तोकेषु समस्तेषु लोकेषु आलोककरीणां प्रकाशकारिणीनामिति ॥ १६२ ॥

वेश्मश्यामाव्योमरत्नरोचिषांश्रीविजित्वरः ।
यज्ज्ञानातिशयो नित्यः संहरन्नान्तरं तमः ॥ १६३ ॥

यज्ज्ञानातिशयः, किं०, वेश्मनः श्यामायाः व्योम्नो रत्नं वेश्मरत्नं दीपः, श्यामारत्नं चन्द्रमाः, व्योमरत्नं सूर्यः, एषां रोचिषां प्रभाणां श्रियः शोभाया विजित्वरो जेता वर्तत इत्यन्वयः । यतो ज्ञानातिशयो नित्यः, अविनाशी, पुनः, आन्तरं मानसिकं, तमः संहरन्, वेश्मरत्नादितेजांसि तु विनश्वराणि बाह्यकिञ्चिद्मात्रतमोविनाशकानीति तद्विजेता यस्य ज्ञानातिशय इति ॥ १६३ ॥

ईदृग्ज्ञानोत्कर्षवतोऽतिशयमाह—

भवद् भविष्यद् भूतं च सर्वं वस्तु सविस्तरम् ।

यस्य हस्ततलन्यस्तमुक्तेवाऽस्ति धियोऽध्वनि ॥१६४॥

भवद् वर्तमानं, भविष्यदनागतं, भूतमतीतमिति त्रिकालवर्ति, सर्वं सविस्तरं वस्तु यस्य हस्ततलन्यस्तमुक्तेव करतलकृतमुक्ताफलवत्, अस्ति; धियोऽध्वनि ज्ञानमार्गे ॥ १६४ ॥

अस्ति प्रमाणविज्ञेयः कालेषु त्रिषु यो गुणी ।
आकाश इव निर्मूर्तिरग्राह्यश्चर्मचक्षुषाम् ॥ १६५ ॥

अथ परमेश्वरस्याऽद्भुतातिशयत्वं प्रदर्शयति—यो गुणी त्रिषु कालेषु अतीतानागतवर्तमानकालेषु, प्रमाणविज्ञेयोऽनुमानादिप्रमाणपरिज्ञेयः, अस्तीत्यन्वयः, अत्रानुमानादिना सर्वज्ञसाधनं श्रीस्याद्वादरत्नाकरादेरवधार्यम्, यः किं०, आकाश इव निर्मूर्तिः रूपरसगन्धस्पर्शात्मकमूर्तिरहितः, अत एव चर्मचक्षुषां बाह्यदृशामग्राह्योऽस्तीति भावः ॥ १६५ ॥

अथाऽमूर्तत्वं व्योमवद् निरूप्य तद्वदेवाऽनन्तत्वं निरूपयति-

जराधिविविधव्याधिक्लेशावेशादिकारणम् ।
य आकाश इवादत्ते जन्माऽनन्तो न जातुचित्॥१६६॥

योऽनन्तः प्रान्तरहितः, न जन्म आदत्तेऽपुनर्भवो भवतीत्यर्थः, जन्म किं० जरा च आधिश्च विविधो व्याधिश्च तैः कृत्वा यः क्लेशावेशादिस्तस्य कारणमिति ॥ १६६ ॥

न स्पृश्यो रजसाऽऽदर्शप्रतिबिम्ब इवास्ति यः ।
न च भेद्यो न च च्छेद्यो योऽस्ति भानोरिवाऽऽतपः॥१६७॥

तथा यत एवाऽमूर्तोऽनन्तस्तत एव यो रजसा पापेन, पांसुना वा, न स्पृश्योऽस्पर्श इत्यर्थः, आदर्शे प्रतिबिम्ब इव दर्पणसंक्रान्तप्रतिरूपमिव, रजसापि स्प्रष्टुं न शक्यते, तत एव

यो भानोरातप इव, न भेद्यो न च च्छेद्यो भेत्तुं छेत्तुं चाऽशक्यो-द्विधाकर्तुमनर्ह इति यावत् ॥ १६७ ॥

यः सदा विद्यमानोऽपि मलक्लेदनिदानया ।
स्पृश्यते नाऽऽपदा काल इवाऽत्यप्रतिरूपया ॥१६८॥

तथा यः सदा सर्वकालं, विद्यमानोऽपि काल इवाऽति अप्रतिरूपया आपदा न स्पृश्यते, तथा च कालवत् सर्वदा अक्षीण इति, आपदा किं०, मलक्लेदस्य पापश्रमस्य निदानया हेतुभूतयेति ॥ १६८ ॥

स्त्रैणे तृणे मणौ रेणौ मित्रे शत्रौ पुरे पथि ।
राज्ञि रङ्के सुखे दुःखे यः समानमनाः सना ॥१६९॥

तथा यः समानमना अस्तीत्यन्वयः । कुत्र कुत्रेत्याह—स्त्रैणे स्त्रीणां समूहे, तृणे प्रतीते, मणौ रत्ने, रेणौ धूल्यां, मित्रे तथा शत्रौ, तथा पुरे पथि वर्त्मनि, राज्ञि नृपे, रङ्के प्रतीते, सुखे तथा दुःखे इत्यादिषु, सर्वदा समपरिणाम इति ॥ १६९ ॥

शब्दरूपरसस्पर्शगन्धाः पञ्च न सन्ति च ।
यत्रोन्मादादयः पाञ्चबाणा बाणा इवात्मनि ॥१७०॥

यत्र यस्मिन्, शब्दरूपरसस्पर्शगन्धाः पञ्चाऽपि विषया न सन्ति, चकारः पुनरर्थे, तथा यत्रात्मनि आत्मरूपे,पाञ्चबाणाः कान्दर्पाः, बाणा इव, उन्मादादयः पञ्चापि प्रमादा न सन्तीति॥१७०॥

यत्रेषदपि नातङ्कः सर्वदा समवर्तिनः ।
वर्तते वासराधीश इव ध्वान्तोदयः क्वचित् ॥१७१॥

तथा यत्र ईषदपि स्तोकोऽपि, समवर्तिनो यमस्य, आतङ्को न वर्तते यथा वासराधीशे रवौ, ध्वान्तोदय इति दृष्टान्तः॥१७१॥

विघ्नविद्वेषमिथ्यात्वहास्यरत्यरतिस्मरैः ।
निद्रानिन्दाशुगज्ञानरागासंयमसाध्वसैः ॥ १७२ ॥
भूयो निन्द्यतमाचारैः सर्वदा खलविभ्रमैः ।
न सेव्यते यः सारङ्गैरिव दग्धवनाश्रयः ॥ १७३ ॥

विघ्नाः पञ्चान्तरायास्तदादिभिरष्टादशभिरेकश्लोकनिरूपितैर्मीभिर्दोषैरिति, शेषं स्पष्टम् ॥ १७२ ॥ सारङ्गैर्मृगैः, दग्धवनाश्रय इव, यो भगवान् न सेव्यते इति, अपरं सुगमम् ॥ इति युग्मव्याख्यानम् ॥ १७३ ॥

तमव्ययं चिदात्मानमचिन्त्यात्मानमीश्वरम् ।
मन्यामहेऽनघं नित्यमीदृशं परमेश्वरम् ॥ १७४ ॥

इत्यादिवर्णितस्वरूपं तं परमेश्वरं मन्यामहे वयमिति, तं किं०, अव्ययं नित्यं, चिदात्मानं ज्ञानस्वरूपं, तथाऽचिन्त्यात्मानं अचिन्त्यस्वरूपं, ईश्वरं स्वामिनं, तथा, अनघं निष्पापं,एवंविधं परमात्मानं वयं मन्यामहे, हे राजन्!। इति स्वरूपार्थतस्त्रयोविंशत्या श्लोकैर्जगदीश्वरस्वरूपं प्रकाशितम् ॥ १७४ ॥

अथ किञ्चित्पिशुनवचःप्रपञ्चप्रचारप्रातिबन्धकयुक्त्या गुरुर्भाषते–

किञ्च शाहिशिरोरत्न! सकर्णाऽऽकर्णयाऽधुना ।
कुजन्मानो द्विजन्मानो यद् वदन्त्यसमञ्जसम् ॥१७५॥

हे शाहिशिरोरत्न ! हे सकर्ण ! निपुण !, अधुना संप्रति, आकर्णय शृणु, किमाकर्णयेत्याह–यत् कुजन्मानः कुत्सितावताराः, द्विजन्मानो विप्राः, असमञ्जसं वदन्ति अस्मान् प्रतीति योज्यम् ॥ १७५ ॥

किमसमञ्जसमित्याह–

परमात्मनोऽङ्गीकारो नैतेषामस्ति दर्शने ।
तुङ्गानामपि शैलानां मौलौ न स्थितिरम्भसः ॥१७६॥

एतेषां जैनानां, दर्शने परमात्मनः परमेश्वरस्य, अङ्गीकारः स्वीकारः, नास्तीत्यन्वयः । यथा शैलानां गिरीणां, तुङ्गानामुच्चानामपि, मौलौ न अम्भसः पानीयस्य, स्थितिस्तथा महतामपि जैनानां दर्शने न जगदीश्वराऽभ्युपगम इति ॥ १७६ ॥

बिभर्ति तदजाकण्ठकुचकेलिमुदीरितम् ।
अमीभिरपि यत् प्रोक्तः प्रेयान् नः परमेश्वरः ॥१७७॥

तद् वाडवोदीरितं वचः, अजाकण्ठकुचस्य केलिः क्रीडा तां बिभर्तीति गलस्तनीस्तनप्रायमकिञ्चित्करमित्यर्थः, यद् यतो-हेतोः, अपेर्निश्चयार्थत्वात्, अमीभिरेव नोऽस्माकं, प्रेयानभीष्टः परमेश्वरः प्रोक्तोऽस्तीति कृत्वा सूत्रकण्ठोक्तमुल्लुण्ठप्रलपितमिव व्यर्थमेवेति ॥ १७७ ॥

तदीयग्रन्थसंमत्या तदेवोपदर्शयति–

यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो
बौद्धा बुद्ध इति प्रमाणपटवः कर्मेति मीमांसकाः ।
अर्हन्नित्यथ जैनशासनरताः कर्तेति नैयायिकाः
सोऽयं वो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः ।१७८।

हनूमन्नाटकगतस्याऽप्यस्य वृत्तस्यावसराऽऽयातत्वेन किञ्चिद् व्याख्यानं यथा–यं कमप्यचिन्त्यात्मानं परमात्मानं, शैवा नैयायिकजातीयाः, शिव शिवेति कृत्वा समुपासते सेवन्ते, तथा वेदान्तिनो ब्रह्माद्वैतवादिनः, ब्रह्मेति कृत्वा; तथा बौद्धाः प्रमाणे तर्के पटवो बुद्ध बुद्धेति कृत्वा; तथा मीमांसकाः कर्मेति कर्मरूप-

मिति कृत्वा; अथ जैनशासनरता जैनाः अर्हन्नर्हन् इति कृत्वा; तथा नैयायिकाः कर्ता कर्तेति कृत्वा; सोऽयं भगवान् अनेकैरनेकात्मकतया ध्यातः, त्रैलोक्यनाथो हरिर्नारायणः, वाञ्छितफलं विदधातु निष्पादयत्विति समासार्थः ॥ १७८ ॥

सामान्यतः परमेश्वरस्वरूपं प्रकाश्याऽथ विशेषतोऽतिशयादिस्वरूपनिरूपणेन परमेश्वरस्वीकारं समर्थयन्नाह—

किञ्चाऽस्माकं महात्मैष द्विधाऽस्ति परमेश्वरः ।
सम्यगाराधितो ध्यातोऽभ्यर्चितो यो विमुक्तिकृत् ॥१७९॥

हे शाहे ! एष महात्मा योऽस्माकं अर्हन्निति नाम्नाऽभिमेतो विप्रैः प्रोक्तः परमेश्वरः, सोऽस्माकं द्विधा द्विप्रकारोऽस्तीत्यन्वयः । यः सम्यक् आराधितः ध्यातः अभ्यर्चितः विमुक्तिर्मोचनमष्टकर्मबन्धनेभ्यस्तां करोतीति मुक्तिप्रापक इति ॥ १७९ ॥

द्विधेति पदं प्रस्तावयति—

तत्राद्यः सोऽस्ति समवसरणे शरणं श्रियाम् ।
सुरासुरनरश्रेणिसेवितांह्रिद्वयः स्थितः ॥ १८० ॥

तत्र प्रकारद्वये, स आद्यः परमात्मा, समवसरणे स्थितोऽवस्थितिभाक्, अस्ति, किं०, श्रियां ज्ञानादिश्रीणां, शोभानां वा, शरणं धाम विहरमाण इत्यर्थः, अत एव सुरासुरनराणां श्रेण्या सेवितांह्रिद्वय इति ॥ १८० ॥

यत्कायः फलिनीहेमपद्ममुक्ताञ्जनप्रभः ।
अक्षालितः शुचिर्दत्ते सर्वेषां मुदमद्भुतः ॥ १८१ ॥

चतुस्त्रिंशदतिशयस्वरूपवर्णनप्रारम्भे प्रथमं, यत्कायः, किं०, साधारणवर्णनगत्या फलिनी प्रियङ्गुनामा नीलवर्णस्तरुः, हेमेति स्वर्णं पीतं, पद्मेति पद्मरागो रक्तवर्णमणिविशेषः, मुक्तेति उज्ज्व-

लमुक्ताफलानि, तथा अञ्जनं प्रतीतं, तद्वत्प्रभा यस्येति सः, तथा अक्षालितोऽधौतः सन्, शुचिः पवित्रः, अत एवाऽद्भुतः, सर्वेषां द्रष्टॄणां, मुदं दत्ते प्रमोदमुत्पादयतीत्यर्थः ॥ १८१ ॥

यस्याऽऽस्यश्वासः कर्पूरकस्तूरीकमलादिजित् ।
सेव्यते भ्रमरैर्मर्त्यामरैरिव समीपभूः ॥ १८२ ॥

यस्याऽर्हतः, आस्यश्वासः किं०, कर्पूरकस्तूरीकमलादिसुगन्धिपदार्थजित्, आदिशब्दाद् बालककुमुदकुन्दविचिकिलपाटलाप्रमुखपरिमलजेतृत्वेन प्रतीत इति, अत एव भ्रमरैः सेव्यते मर्त्यामरैर्नरसुरैः, यथा समीपभूः पार्श्वं, सेव्यत इति दृष्टान्तः ।१८२।

यस्य गोदुग्धदुग्धाब्धिफेनवत् पाण्डुरप्रभः ।
प्रवाह इव गङ्गाया मांसासृक्पटलः शुचिः ॥१८३॥

यस्य मांसाऽसृक्पटलो मांसशोणितपूरः, गङ्गायाः प्रवाहइव शुचिरस्तीति, किं०, गोदुग्धदुग्धाब्धिफेनवत् पाण्डुरा धवला प्रभा यस्येति सः, पटलशब्दस्त्रिलिङ्ग इति ॥ १८३ ॥

यस्य नाहारनीहारविधिर्दृग्गोचरो नृणाम् ।
लोकोत्तरचरित्रात्मवाससेव तिरोहितः ॥ १८४ ॥

तथा यस्य आहारनीहारयोर्विधिः करणं, नृणां दृग्गोचरो नास्तीति, उत्प्रेक्ष्यते—लोकोत्तरचरित्रस्वरूपवाससा तिरोहितइवाऽऽच्छादित इवेति ॥ १८४ ॥

यस्येति सन्ति चत्वारोऽतिशयाः सहजा अमी ।
मुखा इव पयोजन्मजन्मनो विस्मयावहाः ॥१८५॥

इत्यनया रीत्या वर्णिताः, चत्वारोऽतिशया अमी, यस्याऽर्हतः, सहजा जन्मना सह जाताः सन्तीत्यन्वयः । उत्प्रेक्ष्यते—

पयोजन्मजन्मनो ब्रह्मणः, मुखा इव विस्मयावहाश्चमत्कृतिकारिण इति ॥ १८५ ॥

अथ कर्मक्षयोत्थपातकांशात्यन्ताभावव्यञ्जकानेकादशाऽतिशयान् दर्शयति–

योजनोर्व्यां नरा देवास्तिर्यञ्चश्चापि यज्जुषि ।
तिष्ठन्ति कोटिशः कामं परस्परमबाधया ॥ १८६ ॥

यज्जुषि योजनप्रमितोर्व्यां यदाश्रितयोजनामितभुवि, नरा देवास्तिर्यञ्चः कोटिशः कोटिसंख्याकाः, तिष्ठन्तीत्यन्वयः । चकारः पुनरर्थे, अपिर्विस्मयार्थे, ये च तिष्ठन्ति ते परस्परमबाधया, काममत्यर्थमपीति ॥ १८६ ॥

तिर्यञ्चस्त्रिदशा मर्त्या यस्य योजनगामिनीम् ।
भाषां भाषामिव स्वां स्वां विदन्ति विगतभ्रमाः॥१८७॥

यस्य भगवतः, भाषां तिर्यञ्चस्तथा त्रिदशा देवास्तथा मर्त्याः स्वां स्वां भाषामिव विदन्ति; विगतभ्रमा भ्रमरहिताः, जानन्तीति, भाषां किं०, योजनगामिनीं योजनावधिक्षेत्रविस्तारिणीमित्यतिशयद्वयी ॥ १८७ ॥

भामण्डलं च यन्मौलिपृष्ठे तिष्ठत्यतिस्फुरत् ।
ह्रीणः प्रतापतः स्तोम इवैषोऽतुहिनत्विषाम् ॥१८८॥

चकारस्तुर्यातिशयख्यापनार्थः, यन्मौलिपृष्ठे यस्य शिरःप्रदेशपृष्ठे, भामण्डलं ज्योतिःसमूहः, तिष्ठति; किंभूतं, अतिस्फुरद् देदीप्यमानं, इवेत्युत्प्रेक्ष्यते–प्रतापतो ह्रीणो लज्जितः, एषः, अतुहिनत्विषां सूर्याणां, स्तोमः पृष्ठे तिष्ठतीति ॥ १८८ ॥

रोगवृष्ट्यतिवृष्टीतिवैरदुर्भिक्षमारयः ।
साग्रगव्यूतिद्विशत्यां भीश्चात्मपरचक्रयोः ॥ १८९ ॥

न भवन्ति सदा यस्य महिम्नाऽमी उपद्रवाः ।
कर्मघातभवा एकादशैतेऽतिशयाः प्रभोः ॥ १९० ॥

यदाश्रितभूमेः सार्धशतद्वयगव्यूतिप्रमिते क्षेत्रे भगवत्प्रभावेण रोगाश्चाऽवृष्टिश्चातिवृष्टिश्चेतिश्च वैरं च दुर्भिक्षं च मारिश्चेत्यादयः, तथा स्वपरचक्रयोर्भीर्भयं चेति ॥ १८९ ॥ यस्य महिम्ना यथोक्ता अमी उपद्रवा न भवन्ति, लोकानामिति गम्यं, इत्येकादशाऽतिशयाः प्रभोः कर्मघातभवाः केवलज्ञानोत्पत्तिप्रभावसूचकाः ॥ इति युग्मव्याख्या ॥ १९० ॥

अथार्हतः सुरकृतातिशयानुपदिशन् गुरुः परमात्मनो गौरवं निर्दिशति–

आतपत्त्रत्रयं मूर्ध्नि परितो वरणत्रयम् ।
यस्य चिह्नं जगत्त्रय्यैश्वर्यपालनयोरिव ॥ १९१ ॥

यस्य परमेश्वरस्य, मूर्ध्नि आतपत्त्रत्रयं छत्रत्रयं, तथा परितो वरणत्रयं वप्रत्रयं, भातीत्यध्याहारः, उत्प्रेक्ष्यते–जगत्त्रय्या ऐश्वर्यं पालनं चेत्युभयोश्चिह्नमभिज्ञानमिव, अयं प्रभुरैश्वर्यत्रयीसद्भावाज्जगत्त्रयीश्वरः, पुनर्वप्रत्रयीसद्भावाच्च जगत्त्रयीपालकश्चास्तीति ॥ १९१ ॥

चक्रं रुग्दीप्रदिक्चक्रं महांश्चेन्द्रध्वजः पुरः ।
यस्य राज्ययशोलक्ष्मीपुण्ड्रग्रैवेयके इव ॥ १९२ ॥

यस्य पुरश्चक्रमिति धर्मचक्रं; किं०, रुग्भिः प्रभाभिर्दीप्रं दिक्चक्रं यस्मात् तत्, चः पुनरर्थे, महानुच्चैस्तर इन्द्रध्वजश्चलतीत्यन्वयः । उत्प्रेक्ष्यते–राज्यलक्ष्म्या धर्मराज्यलक्ष्म्याः यशोलक्ष्म्याश्च पुण्ड्रग्रैवेयके भालभूषणकण्ठभूषणे इव, पुण्ड्रस्थानीयं चक्रं वृत्तत्वात्, ग्रैवेयकाकारश्चेन्द्रध्वज इति ॥ १९२ ॥

नवानि नव यस्यांह्रिन्यासे पद्मानि भान्त्यलम् ।
स्वामिन्नादत्स्व नो वक्तुमित्यागुः किं कुनाभयः? ॥१९३॥

यस्यांह्रिन्यासे पदस्थापने, नवानि नवसंख्याकानि च, पद्मानि भान्ति शोभन्ते, किमित्युत्प्रेक्षायाम् , उत्प्रेक्ष्यते—कुनाभयो नवाऽपि निधयः, इति वक्तुं आगुः आगताः, इति किं०, हे स्वामिन्! नोऽस्मान् आदत्स्व त्वं गृहाणेति ॥ १९३ ॥

घनच्छायः स्फुरत्पत्रश्चैत्यद्रुर्यस्य भासते ।
प्रभुप्रीत्यै समायातो नन्दनस्येव नन्दनः ॥ १९४ ॥

शिरसि इत्यध्याहार्यं, यस्य शिरसि चैत्यद्रुरशोकवृक्षः, भासते इति, कीदृशः, घना निचिता च्छाया यस्य सः, पुनः, स्फुरन्ति पत्राणि यस्य सः, उत्प्रेक्ष्यते—प्रभुप्रीत्यै नन्दनाख्यस्य वनस्य, नन्दनः पुत्रः, समायातः प्राप्त इति ॥ १९४ ॥

यः सिंहासनमध्यास्ते स्वर्णरत्नविनिर्मितम् ।
चण्डांशोर्मण्डलमिव काञ्चनाचलचूलिकाम् ॥१९५॥

यः प्रभुः, सिंहासनं स्वर्णरत्नाभ्यां विनिर्मितं रचितं, अध्यास्तेऽधितिष्ठति, यथा—चण्डांशोः सूर्यस्य, मण्डलं काञ्चनाचलस्य मेरोश्चूलिकां अध्यास्ते इति दृष्टान्तालङ्कृतिः ॥ १९५ ॥

भवन्त्यधोमुखा यस्य कण्टकाः पथि गच्छतः ।
विद्यया दलितोन्मादा वादिव्राता इवाऽधिकम्॥१९६॥

यस्य पथि मार्गे, गच्छतः कण्टका अधोमुखा नीचैःकृतानना भवन्ति, उत्प्रेक्ष्यते—विद्यया ज्ञानातिशयेन, दलितः खण्डित उन्मादो येषां ते, एवंविधा वादिव्राताः परवादिसमूहा इव, ये हि दलितदर्पास्तेऽधोमुखा एव भवन्तीत्युत्प्रेक्षा,

अथवा, इव यथा, विग्रया दलितोन्मादा वादिनोऽधोवदना भवन्तीति दृष्टान्तालङ्कारोऽपि ॥ १९६ ॥

भातो यस्येन्दुरुचिरे चामरे पार्श्वयोर्द्वयोः ।
आस्याऽम्भोरुहसेवायै राजहंसाविवागतौ ॥ १९७ ॥

यस्य द्वयोः पार्श्वयोरिन्दुरुचिरे चामरे भात इति, उत्प्रेक्ष्यते–आस्यं मुखमेवाम्भोरुहं कमलं तत्सेवायै राजहंसावागताविव, औज्ज्वल्येन राजहंसोपमानं, तथा हंसानां कमलसेवापि संगतैवेति ॥ १९७ ॥

धर्मोपदेशप्रस्तावे भवेद् यश्चतुराननः ।
चतुर्गतिपुरद्वारो द्राक् पिधातुमिवोत्सुकः ॥ १९८ ॥

यः प्रभुः, धर्मोपदेशप्रस्तावे चतुराननश्चतुर्मुखः, भवेत्; उत्प्रेक्ष्यते–चतुर्गतिरेव पुरं तस्य द्वारो द्वाराणि मुखानि द्राक् शीघ्रं, पिधातुं लोकानां गतिचतुष्टयीमाच्छादयितुमुत्सुक इव, यो हि भगवद्धर्मोपदेशं शृणोति स प्रायश्चतुर्गतिद्वाराणि पिधत्ते ॥ १९८ ॥

सचेतनाः सन्तु दूरे यं नमस्यन्त्यसंज्ञिनः ।
द्रुमा अप्यनुभावेन महता नामिता इव ॥ १९९ ॥

सह चेतनया वर्तन्ते ये ते सचेतनाः, ते दूरे सन्तु, ते तु भगवन्तं नमन्त्येव, परमसंज्ञिनो द्रुमा अपि ये अचेतनास्तरवस्तेऽपि, यं नमस्यन्ति, उत्प्रेक्ष्यते–महताऽनुभावेन भगवदतिशयेन, नामिता नम्रीकृता इति ॥ १९९ ॥

यस्याग्रतो नदत्युच्चैर्दिवि दैवतदुन्दुभिः ।
विश्वविश्वाधिपत्यस्य प्रथिमानं वदन्निव ॥ २०० ॥

यस्याऽग्रतः पुरतः, दैवतदुन्दुभिर्देवदुन्दुभिः, दिवि नभसि,

नदति शब्दायते, उत्प्रेक्ष्यते—विश्वस्य समस्तस्य विश्वस्य जगतो यदाधिपत्यं प्रभुत्वं तस्य, प्रथिमानं विस्तारं, वदन् कथयन्निवेति, अयं प्रभुः समग्रजगदाधिपत्यभोक्ताऽस्तीत्युत्प्रेक्षालङ्कारः॥२००॥

देवा मनुष्यास्तिर्यञ्चः सन्तु दूरे सचेतनाः ।
यस्याऽऽनुकूल्यं कुरुते स्पर्शग्राह्योऽपि मारुतः ॥२०१॥

देवा इति पूर्वार्धं सुबोधं, यस्य भगवतः स्पर्शग्राह्यः स्पर्शानुमेयः,मारुतोऽपि वायुरपि,आनुकूल्यमनुकूलचारित्वं, कुरुते।२०१।

जानुदघ्नी प्रसूनानां नानावर्णविराजिनाम् ।
अधोवृन्तात्मनां वृष्टिर्यत्स्थाने जायतेऽभितः ॥२०२॥

यत्स्थाने यदाऽऽश्रिते स्थाने समवसरणे, नानावर्णविराजिनां दशार्धवर्णशोभिनां, प्रसूनानां पुष्पाणां, वृष्टिर्जायतेऽभितः, सर्वतः, वृष्टिः किं०, जानुदघ्नी जानुप्रमाणेति ॥ २०२ ॥

सत्सौरभ्यैरपां पूरैः पतद्भिः परितः प्रभोः ।
प्रशमं रजसां स्तोमो नीयते वचनैरिव ॥ २०३ ॥

प्रभोः परितः पतद्भिरपां जलानां, पूरैः, किं०, सद् विद्यमानं वा साधु वा सौरभ्यं सुरभित्वं येषु तैः, रजसां स्तोमः समूहः, प्रशमं नीयते उपशाम्यत इति, इवेति दृष्टान्ते, यथा प्रभोर्वचनै रजसां पापानां, स्तोमः प्रशमं नीयते ॥ २०३ ॥

महतीं महिमां यस्य वयं वक्तुं न हि क्षमाः ।
यद् व्रजन्त्यनिशं यस्य पक्षिणोऽपि प्रदक्षिणम् ॥२०४॥

यस्य महिमां, कीदृशीं, महतीं, वक्तुं न हि वयं क्षमाः, यदिति यतो हेतोः, पक्षिणोऽपि विवेकविकलाः, प्रदक्षिणं यस्य व्रजन्ति भगवन्माहात्म्यबोधिता इवानुकूल्येन संचरन्तीत्यर्थः॥२०४॥

नखानां श्मश्रुणो रोम्णां केशानां च जगत्प्रभोः ।
न वृद्धिर्जायते यस्य सततं पाप्मनामिव ॥ २०५ ॥

यस्य जगत्प्रभोः, नखानां श्मश्रुणः कूर्चस्य, रोम्णां तनुरुहाणां, च पुनः, केशानां शिरोजानां, वृद्धिर्न जायते, एते न वर्धन्ते, यथा देहशोभा भवति तथैव तेऽवतिष्ठन्ते, यथा पाप्मनां पापानां, वृद्धिर्न जायते तथेति दृष्टान्तः ॥ २०५ ॥

कोटिस्तिष्ठति सोत्कण्ठा निर्जराणां जघन्यतः ।
यस्याऽभ्यर्णे सुधारश्मेर्भानां राशिरिवाऽनिशम् ॥२०६॥

तथा यस्याभ्यर्णे समीपे, निर्जराणां देवानां, कोटिस्तिष्ठति कथं, जघन्यतो यदेवं विज्ञायते— सांप्रतं भगवतो विजनं पार्श्वमस्ति, तदापि समीपे चतुर्निकायवर्तिदेवानां एका कोटिर्भवत्येव, इवेत्युपनये, यथा सुधारश्मेश्चन्द्रस्य सन्निधौ, भानां नक्षत्राणां, राशिरनिशं नित्यं, तिष्ठति उडुपतित्वादिति भावार्थः ॥२०६॥

इन्द्रियार्थाश्च पञ्चापि ऋतवः षडपि प्रभोः ।
यस्याऽऽनुकूल्यं कुर्वन्ति स्वामिनः सेवका इव ॥२०७॥

तथा यस्य प्रभोरिन्द्रियार्थाः पञ्चापि पञ्चसंख्याका अपि इन्द्रियार्था इन्द्रियविषयाः, चकारः पुनरर्थे, षडपि ऋतवो हेमन्ताद्याः, आनुकूल्यमनुकूलत्वं कुर्वन्ति, यथा स्वामिनः सेवका इति ॥ २०७ ॥

अमी अतिशया यस्यैकोनविंशतिरद्भुताः ।
देवैः कृताः समीपे स्युः सहस्रांशोरिवांशवः ॥२०८॥

यस्याऽर्हतः, अमी तावदनन्तरोक्ताः, एकोनविंशतिरतिशया देवैः कृता अद्भुता आश्चर्यकारिणः, समीपे स्युः, इवेति

उपनयालङ्कारे, यथा सहस्रांशोः सूर्यस्य, अंशवः किरणाः, समीपे भवन्तीति ॥ २०८ ॥

अप्येकं वचनं यस्य पञ्चत्रिंशद्गुणास्पदम् ।
युगपज्जगतां हन्ति शङ्कां तापमिवैणभृत् ॥ २०९ ॥

तथा यस्यैकमपि वचनं युगपत् समकालं, जगतां जगद्वर्तिजन्तूनां, शङ्कां संशयं, हन्ति; वचनं किं०, पञ्चत्रिंशत्संख्याका गुणाः संस्कारवत्त्वाद्योऽखेदित्वपर्यन्तास्तेषामास्पदं स्थानं, उक्तमर्थमुपनयेन समर्थयति–यथा तापं निदाघादिदाघं, एणभृच्चन्द्रमाः, हन्तीति ॥ २०९ ॥

इति परमार्थयुक्तयुक्त्या परमात्मस्वरूपं निरूपणविषयीकृत्य शाहेः पुरस्तादुपसंहारवचनमाह–

त्रिलोकीतिलकाकारमनन्तगुणभाजनम् ।
मन्यामहे तमीदृक्षं भवस्थं परमेश्वरम् ॥ २१० ॥

हे शाहे! तं यथावर्णितं, भवस्थं समवसरणस्थं, साकारं परमेश्वरं, ईदृक्षं वयं मन्यामहे; किं०, त्रिलोक्यास्तिलकाकारं तिलकभूतमिति सावधारणं विशेषणमाह, यतोऽनन्तानां गुणानां भाजनं पात्रमिति ॥ २१० ॥

द्विधास्ति परमेश्वर इत्यादिमभेदभाव्यभवस्थपरमेश्वरस्वरूपं प्रकाश्य सूरिः शाहेः पुरस्ताद् द्वितीयभेदभावनीयं वर्णयति–

सदानादिमजन्मानं मुक्तात्मानं च चिन्मयम् ।
द्वितीयमद्वितीयं तं वदामः परमेश्वरम् ॥ २११ ॥

तं कमप्यचिन्त्यं, द्वितीयं परमेश्वरं वदामः कथयाम इति, तं किं०, अनादिं न विद्यते आदिर्यस्येति तं, पुनरजन्मानं अत एव मुक्तात्मानं मुक्तः संसाराद्व्युच्छिन्न आत्मा यस्येति तं, तेनैव

हेतुना चिन्मयं ज्ञानमयं पञ्चविधशरीरपरित्यागात्, तथाऽद्वितीयमनुपममित्यर्थः ॥ २११॥

इत्यभूद् वचसा सूरेः शाहिचित्तमसंशयम् ।
मार्तण्डमण्डल इवाऽजडिमा मधुनर्तुना ॥ २१२ ॥

इतीति प्रकाशितरीत्या, सूरेर्वचसा शाहिचित्तं असंशयं निःसंदेहं, अभूज्जातमिति, इव यथा, मार्तण्डमण्डलः सूर्यबिम्बः, मधुना ऋतुना वसन्तेन, अजडिमा अजाड्यभाग्, भवतीति तथेदमपीति ॥ २१२ ॥

वादिनामेव सर्वेषां वदनानि विसारिणा ।
सद्यः पिदधिरे सूरेः स्फूर्जन्महात्म्यवाससा ॥२१३॥

यथावस्थितपरमेश्वरस्वरूपप्रकटीकरणाच्छाहिचेतसो निःशङ्कीभवने किं जातम् ?, इह एवेति निश्चये, सर्वेषां वादिनां वदनानि मुखानि, सूरेः स्फूर्जद् जाग्रद् यन्माहात्म्यं तदेव वासो वस्त्रं तेन विसारिणा प्रसरणशीलेन, सद्यः शीघ्रं, पिदधिरे च्छन्नानीति ॥ २१३ ॥

असत्प्रलापिभिः किं फलं लब्धमित्याह—

अर्हन्मतैकप्रासादपिप्पलाः कुप्रलापिनः ।
धिक्चक्रिरे द्विजन्मानः सर्वेऽमी शाहिनाऽमुना ॥२१४॥

अमी द्विजन्मानो विप्राः, अमुना प्रत्यक्षेण शाहिना, धिक्चक्रिरे धिक्कृता इति, किंलक्षणा इत्याह—अर्हन्मतं जिनमतं तद्रूप एकोऽद्वितीयो यः प्रासादस्तत्र विनाशहेतुत्वात् पिप्पला इव पिप्पलाः, अत एव कुप्रलापिनः, ये च कुप्रलापिनस्ते धिक्कारं लभन्तएव, इति जगत्प्रतीतोऽयं न्याय इति ॥ २१४ ॥

धिक्कृताः कथं ज्ञायन्त इत्याह—

पृथौ शाहिसभापूर्वदिशि सूर्यायिते गुरौ ।
नश्यन्ति स्म समे भट्टा निशाटा इव दुर्दृशः॥२१५॥

शाहेः सभैव पूर्वदिक् तस्यां सूर्य इवाचरितः सूर्यायितस्तस्मिन् सूर्यायिते, गुरौ सति, समे सर्वे, भट्टा निशाटा घूका इव, नश्यन्ति स्म प्रणेशुरिति; भट्टाः किं०, दुष्टा दृग् मतिर्येषां ते, घूकाः किं०, दुष्टा अन्धत्वभवनाद् दोषदूषिता दृग् दृष्टिर्येषां ते इति ॥ २१५ ॥

सूरिणा निर्जिता जाता अबला वादिनस्तदा ।
चित्रं न तेऽत्र पौराणां कामानन्दनिबन्धनम् ॥२१६॥

तदा तत्रावसरे, सूरिणा निर्जिताः सन्तः, वादिनोऽबला-निर्बलाः, स्त्रियश्च जाता इत्यन्वयः, तथापि ते अबला सन्तोऽपि पौराणां न कामानन्दनिबन्धनं भवन्तीति चित्रं, पक्षे काममत्यर्थमानन्दस्तस्य निबन्धनं निदानमिति ॥ २१६ ॥

श्रीअकब्बरभूपस्य सभासीमन्तिनीहृदि ।
तत्कीर्तिर्मौक्तिकीभूता वादिवृन्दजयाब्धिजा ॥२१७॥

अथ दुर्वादिनिर्मदीकरणेन तत्कीर्तिर्गुरोः कीर्तिः, अकब्बरभूपस्य सभैव सीमान्तिनी रमणी तस्या हृदि, मौक्तिकीभूता मुक्ताफलोपमा जातेति, अत एव कीर्तिः किं०, वादिवृन्दस्य जय एव अब्धिः समुद्रस्तज्जा तस्मादुद्भूता, अन्यदपि मौक्तिकं समुद्रादुद्भवतीति सुस्थम् ॥२१७॥

जित्वा द्विजान् पुरः शाहेः कैलास इव मूर्तिमान् ।
तैरुदीच्यां यशःस्तम्भः स्वो निचख्ने सुधोज्ज्वलः॥२१८॥

शाहेः पुरः शाहिसमक्षं, द्विजान् विप्रान् , जित्वा, तैः सूरिभिः, स्वो यशःस्तम्भ उदीच्यां उत्तरस्यां, दिशि निचख्ने निखात इति, उत्प्रेक्ष्यते–मूर्तिमान् कैलास इव, अत एव सुधोज्ज्वलः सुधाधवल इति ॥ २१८ ॥

शाहिना सत्कृताः सम्यक् संस्तुताश्च मुहुर्मुहुः ।
साडम्बरमलञ्चक्रुरनूचानाः प्रतिश्रयम् ॥२१९॥

अथेति गम्यं, अथानूचानाः श्रीआचार्याः, साडम्बरं प्रतिश्रयमुपाश्रयम् , अलञ्चक्रुरलङ्कृतवन्तः, किं०, शाहिनाऽकब्बरेण, सत्कृता दुर्वादिजयोद्भूतप्रभूतावस्मयादेव, मुहुर्मुहुर्वारं वारं, संस्तुता इति ॥ २१९ ॥

यमीहितकरश्छायापेशलः कान्तिसंकुलः ।
मङ्गलौकसि तत्रैष माहात्म्यमिन ईयिवान् ॥२२०॥

तत्र तस्मिन् लाभपुरे, इनः स्वामी, एष श्रीसूरिः, माहात्म्यं प्रौढिरूपं, ईयिवान् गतवानिति, तत्र कीदृशे, मङ्गलानां कल्याणानां ओकसि गृहे, इनः किं०, यमिनां व्रतिनां ईहितं करोतीति सः, पुनः किं०, छाया शोभा तया पेशलो मनोज्ञः, पुनः, कान्त्या संकुलो व्याप्त इति, पक्षे, इनः सूर्यस्तत्र विवक्षिते मङ्गलौकसि मङ्गलग्रहगेहे मेषे, माहात्म्यमीयिवान् मेषस्थितः सूर्य उच्चत्वेन प्रतीयते "मेषादीशाः कुजः शुक्रः" इति वचनाद्, मेषः कुजगेहं तथा "अर्काद्युच्चानि अजवृष-" इति वचनादुच्चस्थानीयत्वात् प्रौढिं प्राप्नोत्येव, इनः सूर्यः, किं०, यमीहितकरो यमी यमुना तस्या हितकरस्तज्जनकत्वादिति, पुनः, छायानाम्नी स्वपत्नी तया पेशलः, कान्तिसंकुलश्चेति प्राग्वदिति श्लेषालङ्कारः ॥२२०॥

तत्र तस्य कलावन्तं राजानं पश्यतः सतः ।
सौम्यस्याऽभूद् रतिर्बह्वी चित्रं चेतसि चाऽस्ति नः।२२१।

तत्र तस्मिन्नगरे, तस्य सौम्यस्याक्रूरस्य शुभात्मनोऽर्थाद् गुरोरिति, तं राजानं, किं०, कलावन्तं दयार्द्रत्वाद् धर्मकला-शालिनं श्रीअकब्बरं, पश्यतोऽवलोकयतः सतो मिलनादिना, बह्वी रतिरभूत्, तदित्यध्याहारे, नोऽस्माकं चेतसि, तच्चित्रमस्ति, यतः शब्दश्लेषे राजानं चन्द्रं कलावन्तं पश्यतोऽपि सौम्यस्य बुधस्य, रतिर्लेशतोऽपि न भवति, बुधापेक्षया चन्द्रस्य शत्रुत्वाद् "बुधस्य मित्रे शुक्रार्कौ शत्रुरिन्दुः"इति वचनात्, अथैतस्य सौम्य-स्यापि राजानं पश्यतो रतिरुत्पन्नेति चित्रमाश्चर्यमस्तीति॥२२१॥

महेलाभावमापन्ना स्थितिस्तत्र व्रतीशितुः ।
हन्ति स्म कामशक्तिं यद् वादिनामेष विस्मयः ॥२२२॥

तत्र पुरे, व्रतीशितुरनूचानस्य, स्थितिर्महेलाभावं स्त्रीत्वं, पक्षे, महती या ईडा स्तुतिस्तद्भावो लीला डलयोरैक्याद्, महेला-भावमापन्नापि प्राप्तापि, यद्वादिनां कामशक्तिं हन्ति स्मैष वि-स्मयः, महेला हि कामशक्तिं प्रगुणीकुर्वन्ति, परमेषा तथाभू-तापि न तथा, तदर्थे काममत्यर्थं, शक्तिं सामर्थ्यं, प्रतिवचःप्र-दानेऽपीति ॥ २२२ ॥

तत्र स्थिताः किं किं सुकृतकृत्यं चक्रुरित्यादि द-र्शयति—

तत्राऽथ भानुचन्द्राणां वाचकानां महोत्सवैः ।
आनन्दिमनसा नन्दिश्चक्रेऽनूचानचक्रिणा ॥ २२३ ॥

अथास्मिन्नवसरे, भानुचन्द्राख्यवाचकानां महोत्सवैः अनूचानचक्रिणा नन्दिर्वाचकपदस्येति चक्रे कृतेति ॥२२३॥

शेखाख्यो धीसखः शाहेः प्रभुमाहात्म्यरञ्जितः ।
तत्रोत्सवे जगद्वित्तं वित्तव्ययमजीघटत् ॥ २२४ ॥

तत्रोत्सवे तस्मिन्नन्दिमहे, शाहेः धीसखः पातिशाहिमन्त्री, शेखाख्यः शेखश्रीअबजलफयजनामा, जगद्वित्तं विश्वज्ञातं, वित्तव्ययं अजीघटदकार्षीदित्यन्वयः । कथमेष शेखो वित्तव्ययं चकारेत्याह–प्रभोर्गुरोः माहात्म्यं तेन रञ्जित इति ॥ २२४ ॥

विदां मूलं मघोनेव प्रवृत्तिं प्रीतचेतसा ।
सृजतः शाहिना सार्धमव्रजन् वासरा गुरोः ॥२२५॥

तथा शाहिनाऽकब्बरेण, किं०, प्रीतचेतसा संतुष्टमनसा, सार्धं प्रवृत्तिं धार्मिकवार्तां, सृजतः कुर्वतः, गुरोर्वासरा अव्रजन् जग्मुरित्यन्वयः, प्रवृत्तिं किं०, विदां ज्ञानानां, मूलं, पक्षे इवेत्युपनये यथा, गुरोर्बृहस्पतेः, मघोना शक्रेण, सार्धं प्रवृत्तिं सृजतो वासरा व्रजन्तीति ॥ २२५ ॥

धर्मप्रवृत्तितः प्रीतचेतस्कत्वफलमुपदर्शयति–

अथैकदा कृपाप्रेमवल्लभं वल्लभं भुवाम् ।
दृष्ट्वाऽभाषिष्ट स गुरुर्गिरा पीयूषपुण्यया ॥ २२६ ॥

अथेति करुणारसोल्लासकसदुपदेशवार्ताप्रस्तावे सति, एकदा स गुरुर्भुवां वल्लभं नृपं, कीदृशं, कृपायाः प्रेमवल्लभं प्रेमप्रियं, दृष्ट्वा पीयूषपुण्यया गिरा वाण्या, अभाषिष्टाऽभाषतेति ॥ २२६ ॥

किमभाषतेत्याह–

सुरभ्याः सौरभेयस्य सैरिभ्याः सैरिभस्य च ।
न हिंसा नः प्रमोदाय पृथिव्याः पातरि त्वयि॥२२७॥

हे शाहे ! त्वयि पृथिव्याः पातरि पालके सति, सुरभ्याः सौरभेयस्य सैरिभ्याः सैरिभस्य च, हिंसा नोऽस्माकं, प्रमोदाय नेति नास्ति, गोवृषभमहिषीमहिषाणां हिंसा हननं न हर्षायाऽस्तीति ॥ २२७ ॥

तत् ते नैषाममन्तूनां जन्तूनां हतिरर्हति ।
दुग्धवीवधनिर्वाहैर्जगतामुपकारिणाम् ॥२२८॥

तत्तस्मात् कारणात्, ते तव, शाहे! एषां सुरभ्यादीनां जन्तूनां किं०, अमन्तूनां निरपराधानां, हतिर्हिंसा, नाऽर्हति न योग्याऽस्तीति, यत एषां कथं भूतानां, दुग्धवीवधनिर्वाहैर्दुग्धदानं च वीवधो भारस्तन्निर्वाहश्चेति, सुरभीमहिषीणां दुग्धदायित्वं, वृषभमहिषाणां भारनिर्वाहित्वं तैः कृत्वा, जगतामुपकारिणां विश्वोपकारकारिणामिति ॥ २२८ ॥

मृतानां द्रविणादानं बन्धे च ग्रहणं नृणाम् ।
न ते निर्लोभसौम्यस्य सार्वभौमस्य कीर्तये ॥२२९॥

तथा हे राजन्! ते तव, निर्लोभश्चासौ सौम्यश्चेति तस्य तथारूपस्य, सार्वभौम इव सार्वभौमस्तस्य, मृतानां नृणां द्रविणादानं द्रव्यग्रहणं, तथा बन्धे नृणां ग्रहणं बन्दिग्रहणम्, इति न कीर्तये ख्यातये नास्ति ॥ २२९ ॥

एतत् कृत्यद्वयं शाहे! तत् तवाञ्चति नौचितीम् ।
अत्याजि भवता शुल्को जीजिआख्यश्च यत् करः॥२३०॥

हे शाहे! तत् ततः कारणात्, एतदनन्तरोक्तं, कृत्यद्वयं श्लोकद्वयप्रणीतं, तव नौचितीमुचितत्वमञ्चति गच्छति नोचितमिति, यद् यतो हेतोर्भवता शुल्को लोके दांगनामा, अत्याजि त्यक्तः, चकारः पुनरर्थे, भवता जीजिआख्यः करो मुक्तश्चेति, ततो येन बहुद्रव्योत्पत्तिनिमित्तं जीजिआशुल्कयोस्त्यजनं कृतं तस्यैतत् कियदिति ॥ २३० ॥

सूरिणाऽभिहिता जल्पा अमी षडपि भूभुजः ।
अभवंस्तुष्टये जीवलोकस्य ऋतवो यथा ॥२३१॥

सूरिणाऽभिहिताः प्रोक्ताः, अमी सुरभ्यादिवधनिषेधरूप-मृतस्वमोचनबन्दिच्छोटनरूपाः, षडपि जल्पाः भूभुजः नृपस्य, तुष्टयेऽभवन् जाता इति, यथा जीवलोकस्य षडपि ऋतवो हेमन्ताद्याः, तुष्टये भवन्तीति ॥ २३१ ॥

एतत्षड्जल्पपिशुनं स्फुरन्मानं स्फुरद्गुणम् ।
श्रीअनूचाननाम्नैव सर्वत्र प्राहिणोद् नृपः॥ २३२ ॥

नृपः श्रीअनुचाननाम्ना, एवेति निश्चये, एतेषां प्राग्भणितानां षण्णां जल्पानां पिशुनं सूचकं, स्फुरन्मानं सर्वत्र स्वाज्ञावर्तिषु देशेषु, प्राहिणोत् प्रेषयामासेति ॥ २३२ ॥

एषां षण्णां च जल्पानां पत्रं तत् सकलामिलाम् ।
व्यानशे सुन्दरं बिन्दुस्तैलस्य सलिलं यथा ॥२३३॥

षण्णां जल्पानां पत्रं स्फुरन्माननामकं तत् सकलामिलां व्यानशे समग्रभूमौ व्याप्तमिति, अत्र सप्तम्यर्थे द्वितीयेति, यथा तैलबिन्दुर्जलं व्याप्नोतीति ॥ २३३ ॥

इत्यादिबहुलाभप्राप्तौ किं कृतवानिति निर्दिशति—

कृपापुटकिनीपूष्णा शाहिना बहुमानितः ।
तच्चतुर्मासकं चक्रे पुरे तत्रैव सूरिराट् ॥ २३४ ॥

तत्रैव पुरे लाभपुरे, तच्चतुर्मासकं सूरिराट् चक्रे, कीदृशः, कृपैव पुटकिनी पद्मिनी, तस्यां पूष्णा सूर्येण, शाहिना श्रीमदकब्बरेण, बहुमानितोऽत्यर्थं संमानभाजनं कृतः, संमानिताः सन्तो लाभहृष्टास्तिष्ठन्त्येवेति ॥ २३४ ॥

विद्याविनोदवैराग्यविज्ञानवसुवारिधेः ।
गुरोः परिचयात् प्राप्तप्रसिद्धेः पृथिवीपतेः ॥ २३५ ॥

आग्रहादथ गुरुणा श्रीसंघप्रीतिकारिणा ।
तत्रैव नगरे चक्रे चतुर्मासं द्वितीयकम् ॥ २३६ ॥

अनयोर्द्वयोर्व्याख्या— अथेति प्रथमचतुर्मासककरणानन्तरं वर्षान्तरे गुरुणा तत्रैव नगरे द्वितीयकं चतुर्मासकं चक्रे कृतमित्यन्वयः, ननु किमर्थं द्वितीयमपि चतुर्मासकं तत्रैव कृतमित्याह—पृथिवीपतेर्भूभर्तुराग्रहात्, अहो ! सोऽपि कथमेतावन्तमाग्रहं कृतवानित्याह— पृथिवीपतेः किंविशिष्टस्य, विद्याया विनोदो वैराग्यं च विज्ञानं विशिष्टज्ञानं तद्रूपवस्तूनां वारिधेः समुद्रस्य गुरोः परिचयात् प्राप्ता प्रसिद्धिः सार्वत्रिकख्यातिर्येनेति कृत्वा, यो हि यस्मात् प्रसिद्धिं प्राप्नोति स तमाग्रह्य रक्षत्येवेति, यथा पुरा श्रीहेमसूरिं श्रीकुमारपालक्ष्मापाल इति ॥ इति युग्मम् ॥२३५॥२३६॥

अधिकतरावस्थाने किं जातमित्याह—

दिदीपेऽथ दया शाहेराचार्यवचनामृतैः ।
संसिक्ता पयसां पूरैर्वल्ली विद्युत्वतो यथा ॥ २३७ ॥

अथेति प्रचुरतरप्रसङ्गे सति, आचार्यवचनामृतैः शाहेर्थन्मनसि, दया दिदीपे दीप्तिमाप्तेति, यथा विद्युत्वतो मेघस्य, पयसां पूरैः संसिक्ता वल्ली दीप्तिमाप्नोतीति दृष्टान्तः ॥२३७॥

साग्रया श्लोकद्विशत्या सर्गं निर्मायाऽथ मालिन्योपसंहरति—

गगनमिव हिमांशौ कौशिकानन्दिमूर्तौ
नलिनवनमिवोष्णज्योतिषि स्मेरपद्मे ।
तदनघमनघश्रीसंघराजीवसूर्ये
स्थितवति यतिराजे पत्तनं चारु रेजे ॥२३८॥

तत्पत्तनं लाभपुरं, चारु यथा स्यात्तथा, यतिराजे सूरौ, स्थितवति सति, रेजेऽशुभदित्यन्वयः । कस्मिन् सति किमिवेत्याह—

यथा हिमांशौ चन्द्रे सति, गगनमिव, कीदृशे चन्द्रे गुरौ चेत्याह– कौशिकस्य घूकस्य आनन्दिनी मूर्तिर्यस्य तस्मिन्, गुरुपक्षे, कौशिकस्य शक्रस्यानन्दिनीति, शेषं स्पष्टम्, पुनः, उष्णज्योतिषि सूर्ये सति, नलिनवनं यथा, कीदृशे सूर्ये गुरौ च, स्मेराणि पद्मानि पङ्कजानि यस्मात् तस्मिन्, गुरुपक्षे, स्मेरा पद्मा श्रीर्यस्मात् तस्मिन्निति समानधर्मोपनयालङ्कृतिरिति ॥ २३८ ॥

* * * * * * * * * * * * * * * * * * * * * * * * *

इतीति सकलं कण्ठ्यम् ।

इति सकलसुविहितसभासार्वभौमसमानपण्डितमण्डलीमौलिमौलीयमानपण्डितश्रीकमलविजयगणिसुशिष्यमुख्यपण्डितपुरन्दरप्रख्यपण्डितश्रीविद्याविजयगणिविनेयवाचकश्रीगुणविजयगणिविरचितायां विजयप्रदीपिकाभिधानधारिकायां सुखावबोधिकायां श्रीविजयप्रशस्तिमहाकाव्यटीकायां द्वादशः सर्गोऽर्थतः समर्थितः ॥

अर्हम्

## अथ त्रयोदशः सर्गः ।

अथ त्रयोदशः सर्गः समारभ्यते, तत्र श्रीहीरविजयसूरिवृत्तवर्णनात्मकं प्रथमं वृत्तं यथा–

इतश्च भट्टारककोटिकोटी-
कोटीरहीरप्रभुसूरिहीरः ।
कृत्वोत्सवोत्साहविलासवर्यां
ज्येष्ठस्थितिं पत्तननामपुर्याम् ॥ १ ॥

अत्यर्तिकृद्दुर्गतिदुःखहन्त्रीं
कैवल्यकान्तारतिरङ्गदूतीम् ।
श्रीतीर्थशत्रुञ्जयशैलराज-
यात्रां विधातुं प्रगुणीबभूव ॥ २ ॥

इतश्चेति श्रीअनूचाने लाहोरनगरे स्थितिशालिनि सत्य-स्मिन्नवसरे, भट्टारककोटिकोटिषु कोटीरतुल्या ये भट्टारकास्तेषु भूषकत्वाद् हीर इव हीरः प्रभुश्चासौ हीरश्च प्रभुसूरिहीरः श्री-हीरविजयसूरिः, पत्तननामपुर्यां पत्तननगरे, ज्येष्ठस्थितिं चतुर्मा-सीरूपां, किं०, उत्सवोत्साहयोः पत्तनवासिलोकसंबन्धिनोर्यो विलासस्तेन वर्यां, कृत्वा विधायेति ॥ १ ॥ किं कृतवानित्यग्रे-तनवृत्ते प्राह—अत्यर्तिकृत् अतिपीडाकारिणी या दुर्गतिस्तस्या दुः-खानां हन्त्रीं, पुनः,कैवल्यं मुक्तिः सैव कान्ता तया समं यो रतिरङ्गः प्रेमरङ्गस्तत्र दूतीं दूतीतुल्यां तत्संयोजकत्वात्, एवंभूतां श्रीतीर्थ-शत्रुञ्जयशैलराजयात्रां विधातुं निर्मातुं, प्रगुणीबभूव सोद्यमः संजातः ॥ इति युग्मव्याख्या ॥ २ ॥

अथ षड्भिरिन्द्रवज्रावृत्तैः शत्रुञ्जयं वर्णयति—

देवेन्द्रवृन्दप्रणतांह्रिपद्मः
श्रीमारुदेवप्रभुरादिदेवः ।
यं नन्दनन्दाङ्कितपूर्ववारान्
सर्वाद्रिश्रृङ्गारमलञ्चकार ॥ ३ ॥

यं विमलाचलं, मरुदेव्याया अपत्यं मारुदेवः प्रभुः, श्रीआ-दिदेवोऽलञ्चकार भूषयामासेत्यन्वयः; कति वारान्, नन्दन-न्दाङ्कितानि नवकद्विकप्रमितानि पूर्वाणि तद्गतवर्षसत्कवास-रमितवारान्, कोऽर्थः ?—नवनवतिपूर्वैर्यावन्तः संवत्सराः स्यु-

स्तावतां संवत्सराणां यावन्तो दिनास्तत्प्रमाणवारानिति निर्ग-
लितार्थः, प्रभुः किं०, देवेन्द्रवृन्देन प्रणतांह्रिपद्मः, शत्रुञ्जयं किं०,
सर्वाद्रीणां सकलगिरीणां शृङ्गार इव शृङ्गारस्तमिति ॥ ३ ॥

उत्तुङ्गता यस्य न धीनिधीना-
मध्वानमायाति सरस्वतीनाम् ।
संस्पृश्यते यल्लघुकैरपीह
लोकाग्रभूमिस्तरसाऽधिरूढैः ॥ ४ ॥

यस्याऽद्रेः, उत्तुङ्गता उच्चैस्तरता, धीनिधीनां पण्डितानां
सरस्वतीनां, गिरामध्वानं मार्गं, नायाति; यद् यतो हेतोः, इह
गिरावधिरूढैर्लघुकैरपि, तरसा वेगेन, लोकाग्रभूमिः संस्पृश्यते,
इहाऽधिरूढा लघवो हि कर्मणा लघवो लोकाग्रभूमिं मुक्तिं
जवाद् यान्तीति भावः ॥ ४ ॥

पूतः प्रकामं हरशेखराया-
अद्भ्यः सदा यत्पथपांसुपूरः ।
आत्मानमन्तः कुरुते पवित्रं
स्पृष्टः शरीरेऽध्वनि गच्छतां यः ॥५॥

यत्पथपांसुपूरो यस्य गिरेर्मार्गस्य रजोव्रजः, हरशेखराया
गङ्गायाः, अद्भ्यः पानीयेभ्यः, पूतः पवित्रः, प्रतीयत इति योगः।
कथमित्याह—यो गिरिपथपांसुपूरः, अध्वनि गच्छतां मार्गे व्रजतां,
शरीरे स्पृष्टः सन्नन्तः आत्मानं, पवित्रं कुरुते, अन्यो हि गङ्गाप्र-
वाहो देहनैर्मल्यमात्रमेव कुरुते परमयं अभ्यन्तरात्मानं, तेनायं
प्रकामं पूत इति ॥ ५ ॥

यद्वर्त्मरेणुस्तरणेः प्रकाशा-

दप्यस्ति विस्तारमितः प्रशस्तः ।
श्यामं तमोमण्डलमर्तिकृद् यद्
येनाऽङ्गलग्नेन समूलमस्तम् ॥ ६ ॥

तरणेः सूर्यस्य, प्रकाशादपि यद्वर्त्मरेणुर्विस्तारमितो विस्तृतिं प्राप्तः, प्रशस्तोऽस्तीत्यन्वयः । निदानमाह—यद् यतः कारणाद्, येनाऽङ्गलग्नेन तमोमण्डलं समूलमस्तं अपुनर्भावेन तमसः पापस्य मण्डलं ध्वस्तमिति, कीदृशं, श्यामं कृष्णं, पुनः, अर्तिकृत् पीडाकरं, सूर्यप्रकाशेन हि समूलं तमो न निरस्यते पुनरप्यन्धकाराविर्भावात्, तथा गिरिगह्वरादीनां तमसस्तादवस्थ्यात्, अनेन तु गिरिमार्गरेणुना स्पृष्टेनापि समूलं तमो निहन्यते, ततस्तरणितेजसोऽपि प्रशस्तो यत्पथरेणुरिति तात्पर्यम् ॥ ६ ॥

गङ्गाप्रवाहादपि यस्य वर्त्म-
पांसुप्रपञ्चोऽस्त्यधिकत्वशाली ।
योऽभूच्छिवोल्लासकविप्रमोद-
श्रीपत्यदभ्रोत्सवमूलमुच्चैः ॥ ७ ॥

यस्य वर्त्मपांसुप्रपञ्चः गङ्गाप्रवाहादपि अधिकत्वशाली अतिशयवान्, अस्तीत्यन्वयः । यतोऽयं शिवस्य मोक्षस्योल्लासः शिवोल्लासः, पुनः, कवीनां पण्डितानां प्रमोदः कविप्रमोदः, पुनः, श्रीपतीनां धनिनां अदभ्रोत्सवो महोत्सवस्तेषां शिवोल्लासकविप्रमोदश्रीपत्यदभ्रोत्सवानां मूलमासीदिति, श्लेषपक्षे तु शिवोल्लासो महादेवोल्लासः, कवेर्ब्रह्मणः प्रमोदः कविप्रमोदः, श्रीपतेर्नारायणस्यादभ्रोत्सवस्तन्मूलमभूदित्याधिक्यभाक्, गङ्गाप्रवाहस्तु शिवोल्लासः श्रूयते, न तु कविप्रमोदश्रीपत्यदभ्रोत्सवमूलमिति न्यूनत्वभाक् ॥ ७ ॥

आरोहमार्गोऽत्र विभाति शैले
आरोढुमुच्चैस्तरसिद्धिसंज्ञम् ।
सौधं धुताबाधमनाधिमाशु
निश्रेणिसोपानपरम्परेव ॥ ८ ॥

अत्र शैले श्रीशत्रुञ्जये, आरोहमार्गः पद्यारूपः, विभातीत्यन्वयः। इवोत्प्रेक्ष्यते—उच्चैस्तरं सिद्धिसंज्ञं सौधं, किं०, धुता आबाधा वपुर्व्यथा यत्र तत्, तथाऽनाधिं न विद्यते आधिर्मानसी व्यथा यत्रेति, अत्र सौधशब्दस्य पुंक्लीबलिङ्गत्वादनाधिमित्यदुष्टम्, आरोढुं, निश्रेणेः सोपानपरम्परा तया हि सुखेन सौधमारुह्यते ॥८॥

तारोत्करैरिन्दुरिवातिसौम्यो
भासां भरैरर्क इव प्रतापी ।
भूयोभिरागादृषिभिर्वृतः श्री-
सूरिस्ततस्तत्तलहट्टिकायाम् ॥ ९ ॥

ततः श्रीपत्तनतः प्रस्थानादनुक्रमेण, तस्याऽद्रेस्तलहट्टिकायां, भूयोभिर्बहुभिर्ऋषिभिर्वृतः श्रीसूरिः आगादित्यन्वयः । कैः क-इव, तारोत्करैरिन्दुरिव, गुरुरिन्दुश्च कीदृशः, अतिसौम्यः, पुनः, भासां भरैरर्क इव, गुरुरर्कश्च कीदृशः, प्रतापी, इति समानधर्मोपमेति ॥ ९ ॥

दानैरमानैर्धनकाञ्चनानां
गीतैः सुगीतैः कुलकामिनीनाम् ।
तूर्यैश्च वर्यैर्मुरजानकाद्यैः
कुर्वद्भिरुत्साहकृदुत्सवालीम् ॥ १० ॥

मेवातसन्मालवमेदपाट-

श्रीगूर्जरत्रामरुमुख्यसंघैः ।

सार्धं महस्वी मघवेव देवै-

रध्यारुरोहाऽद्रिमसौ मुनीशः ॥ ११ ॥

अनयोर्व्याख्या यथा–असौ मुनीशः श्रीहीरसूरिः, अद्रिं गिरिं श्रीशत्रुञ्जयाह्वं, अध्यारुरोहेत्यारूढ इत्यन्वयः। कथं, सार्धं, कैः, मेवातमालवमेदपाटश्रीगूर्जरत्रामरुस्थलीप्रमुखसंघैः प्रतीतैः, यदैते संघास्तत्र प्राप्तास्तदानीमेव श्रीगुरवोऽपि चैत्र्यां तत्रारूढाः, अतस्तैः सार्धं, संघैः किं कुर्वद्भिः, उत्साहकृत्सवालीं कुर्वद्भिः उत्सवाद्वैतं कुर्वाणैरिति, कैः कृत्वा, धनकाञ्चनानां अमानैर्दानैः, अर्थादर्थिनामिति, तथा कुलकामिनीनां कुलस्त्रीणां, सुष्ठुतया गीतैः सुगीतैः, गीतैः, तथा मुरजो मृदङ्ग आनको दुन्दुभिस्तदाद्यैर्वर्यैस्तूर्यैरिति जैनं शासनं प्रभावयद्भिः संघैः समं विमलाचलमारूढवान् गुरुरिति ॥ इति युग्मव्याख्या ॥१०॥११॥

त्रिस्तत्र नाथं प्रथमं परीय

नत्वा च नुत्वा च यथाप्रमोदम् ।

स्थित्वा पुनः कत्यपि वासराणि

श्रीतीर्थसेवामसमां च कृत्वा ॥ १२ ॥

तत्र शत्रुञ्जये, प्रथमं नाथं श्रीऋषभदेवं, त्रिः परीय त्रिवारं प्रदक्षिणीकृत्य, तथा नत्वा कायेन प्रणम्य, चः पुनरर्थे, नुत्वा वाचा स्तुतिस्तोत्रादिभिः स्तुत्वा, कथं, यथाप्रमोदमिति क्रियाविशेषणं, पुनः, कत्यपि वासराणि स्थित्वाऽधिकारात् पादलिप्तपुरादौ, अत्र पुंनपुंसकत्वाद् वासराणीत्यदुष्टं, तथाऽसमां तीर्थसेवां कृत्वेति ॥ १२ ॥

ततः किं कृतवानित्याह–

सौवर्णटङ्कादिभिरर्चितः श्री-

संघेन सद्भक्ति सहस्रसंख्यैः ।
भट्टारकेन्द्रो विजहार हीरः
शत्रुञ्जयात् तीर्थवरात् ततोऽथ ॥ १३ ॥

भट्टारकेन्द्रो हीरः श्रीहीरसूरिः, किं०, श्रीसंघेन सहस्रसंख्यैः सौवर्णटङ्कादिभिः आदिशब्दाद् मालवदेशसंघेन महार्घ्याभरणैर्नवाङ्गेषु सद्भक्तिर्यथा स्यात् तथाऽर्चितः पूजितः, सति समये ततः श्रीशत्रुञ्जयात् तीर्थवरात्, विजहार विहारं कृतवानित्यर्थः ॥ १३ ॥

विहृत्य कां दिशं पवित्रयामासेत्याह—

मत्वा प्रभूताग्रहमुन्नताह्व-
द्रङ्गस्थसंघस्य सदाऽनघस्य ।
हंसः शरत्कालमकालबर्हः
क्ष्मायामिव स्मैति गुरुः स तत्र ॥ १४ ॥

स गुरुस्तत्रोन्नतद्रङ्गे, स्मैति प्राप्त इत्यन्वयः। किं कृत्वा, उन्नताह्वद्रङ्गस्थसंघस्य उन्नतपुरीयश्राद्धवर्गस्य प्रभूतं बहुतरमाग्रहं मत्वा ज्ञात्वा, यथा हंसः क्ष्मायां इहत्यतटाकतटिनीभूमौ शरत्कालं मत्वा मानसादभ्येति, गुरुर्हंसश्च कीदृशः,अकालबर्हो धवलच्छदः, गुरुपक्षेऽकालबर्हो निर्मलपरिवारः "बर्हः पर्णे परीवारे कलापे च" इत्यनेकार्थ इति ॥ १४ ॥

ज्ञात्वा लाभमदभ्रमभ्रतटिनीरङ्गत्तरङ्गोल्लस-
त्कीर्तिस्फूर्तिपयःप्रवाहपटलप्रक्षालितक्ष्मातलाः।
ते भट्टारककोटिकोटिमुकुटाश्चक्रुश्चतुर्मासकं
तत् तत्रैव पुरे पुरन्दरपुरप्रख्ये सुपर्वप्रिये॥१५॥

ते प्रागुपवर्णिता भट्टारकाणां कोटिकोटयस्तासां तासु वा मुकुटाः श्रीसूरयः, पुरन्दरपुरममरावती तत्प्रख्ये तत्तुल्ये, अतएव सुपर्वणां देवानां प्रिये, पक्षे शोभनपर्वभिः सुमहोत्सवैः प्रिये, तत्रैव पुरे उन्नताख्यपुरे, चतुर्मासकं चक्रुरित्यन्वयः। तत्र कथमतिष्ठन्नित्याह—लाभं धर्मोन्नतिविशेषं, ज्ञात्वा, ते किं०, अभ्रतटिन्या गङ्गाया रङ्गन्तश्च ते तरङ्गाश्च तद्वदुल्लसन्ती या कीर्तिस्तस्या या स्फुर्तिस्तद्रूपो यः पयःप्रवाहपटलस्तेन प्रक्षालितं क्ष्मातलं यैस्ते तथा ॥ १५ ॥

अजस्रं दस्राभ्यामिव वरतरैर्वैद्यककरै-

भिषग्भिर्भूयोभिः सततयतनैर्भेषजभरैः ।

विबुध्याऽसाध्यां स्वां रुजमिति निदानेन महता

द्वितीयां ज्येष्ठास्यां पुनरकृत तस्यां पुरि गुरुः॥१६॥

पुनः, वर्षान्तरे गुरुस्तस्यां पुरि, महता निदानेन कारणेन, द्वितीयां ज्येष्ठास्यां द्वितीयं चतुर्मासकं, अकृत कृतवान्, किमिति निदानं तदाह—दस्रौ अश्विनीपुत्रौ, दस्रशब्दो द्विवचनवाची, ततस्ताभ्यामिव भूयोभिर्भिषग्भिर्वैद्यैः, किं०, वरतरैः श्रेष्ठतरैः, पुनः, वैद्यकं कुर्वन्तीति, तैः कैः कृत्वाऽसाध्यामित्याह—भेषजानां तद्रोगोपशामकौषधानां भरैः, अत एव भिषग्भिः सततं नित्यं, यतना सत्यापना, अर्थाद् गुरोर्येषां तैर्बहुभिरप्युपचारैः, निजतनुरोगमसाध्यं, विबुध्य ज्ञात्वा, इति कारणाश्रयणेन तत्रोन्नतद्रङ्ग एव तस्थुरिति ॥ १६ ॥

सरसि जलजस्तोमः सूर्यादिवोदयदिग्जुषो

वनभुवि तरुव्रातः सर्वोऽनिलादिव मालयात् ।

निवसतिकृतः कामं कस्मात् प्रसत्तिभराद् गुरोः

समजनि पुरे पौरस्तस्मिन् सुखी सकलोऽपि हि॥१७॥

गुरोः श्रीहीरसूरेः, किं०, निवसतिकृतः स्थितिकारिणः, प्रसत्तिभरात् प्रसादातिशयात्, तस्मिन् पुरे सकलोऽपि पौरः पुरवासी लोकः, सुखी समजनि, प्रसत्तिभरात् कथं, काममत्यर्थं, कस्माद् मनोज्ञात्, कस्मात् क इव कस्मिन्नित्याह—सूर्यात् किं०, उदयदिग्जुषोऽभ्युदिताद्, यथा सरसि सरोवरे, जलजस्तोमः कमलपटलः, पुनः, यथा मालयाद् मलयाचलोद्भवाद्, अनिलाद् वायोः, वनभुवि सर्वस्तरुव्रात इव, तथा गुरोः प्रभावात् पौरवर्गः सुखभाग् जात इत्यर्थः ॥ १७ ॥

अत्रेन्द्रवज्रा प्रायः, अन्त्ये वृत्तत्रये तु शार्दूलविक्रीडितं शिखरिणी हरिणीति पृथक् पृथक् छन्दांसि ज्ञेयानीति, तेषां लक्षणानि तु पूर्वमुक्तानीति ।

. . . . . . . . . . . . . . . . . . . . . . . .

इतीति स्पष्टम् ।

इति सकलसुविहितसभासार्वभौमसमानपण्डितमण्डलीमौलिमौलीयमानपण्डितश्रीकमलविजयगणिसुशिष्यमुख्यपण्डितपुरन्दरप्रख्यपण्डितश्रीविद्याविजयगणिविनेयवाचकश्रीगुणविजयगणिविरचितायां विजयप्रदीपिकाभिधानधारिकायां सुखावबोधिकायां श्रीविजयप्रशस्तिमहाकाव्यटीकायां त्रयोदशः सर्गोऽर्थतः समर्थितः ॥



अर्हम्

# अथ चतुर्दशः सर्गः ।



अथ चतुर्दशः सर्गः समारभ्यते–

अथो विशां भर्तुरकब्बरस्य

मनःपयोजन्मविलासहंसः ।

ततः पुरादर्जितवर्यकीर्त्ति-

र्विहर्तुकामोऽजनि सूरिसिंहः ॥ १ ॥

अथाऽस्मिन्नवसरे श्रीहीरविजयसूरयो वपुरपाटवादुन्नतपुरे ज्येष्ठस्थितिं कर्तुकामा आसंस्तत्रावसरे, सूरिसिंहः श्रीविजयसेनसूरिः, ततः पुराल्लाभपुराद्, विहर्तुकामोऽजनि, कीदृशः, विशां नृणां भर्तुरकब्बरशाहेः, मन एव पयोजन्म कमलं तस्मिन् यो विलासस्तत्र हंसः, पुनः, अर्जिता वर्या कीर्त्तिर्येन सः ॥ १ ॥

धराधिपं नीतिलतावितान-

पयोदमापृच्छ्य सदाऽऽदराढ्यम् ।

बुधं च नन्देर्विजयोत्तराह्वं

विमुच्य तत्राऽवनिपोपरोधात् ॥ २ ॥

जयेन्दिरासुन्दरदोर्लताभ्यां

निकामनिष्पीडितकण्ठपीठः ।

गुरुर्व्यहार्षीत् पुरतस्ततोऽथ

कृपाक्षिकाम्भोदभिदासमीरः ॥ ३ ॥

अनयोर्व्याख्या यथा–अथावसरे शुभे सति, ततः पुराद्

लाहोरनराद्, गुरुर्व्यहार्षीद् विहारमकरोत्, किं कृत्वा, नीतिरेव लता तस्या विताने पयोदं मेघं, धराधिपं नृपं, आपृच्छय पृष्ट्वा, कथं तस्य प्रश्न इत्याह—सदादराढ्यं बह्वादरवन्तं, तर्हि कथं विहारानुज्ञां दत्तवानित्याह—नन्देर्विजयाद्वं बुधं, तत्र शाहिसमीपे, अवनिपोपरोधाद् नृपाग्रहाद्, विमुच्येति, गुरुः कथं०, जयेन्दिराया जयलक्ष्म्याः सुन्दरे दोर्लते ताभ्यां निकाममत्यर्थं निष्पीडितः कण्ठपीठो यस्येति सः, मिथ्यात्वव्याथिताऽन्यतीर्थिकाहङ्कारतिरस्कारकरणादर्जितजयश्रीक इति, अत एव कुपाक्षिकाम्भोदभिदायां समीरो वायुरिति ॥ इति युग्मव्याख्या ॥ २ ॥ ३ ॥

निजैः पदाम्भोजरजोभिरुच्चैः
शुचिं सृजन् भूमिमिमामशेषाम् ।
गुरुः क्रमाच्छ्रीमहिमाभिधानं
पुरं पुरप्रष्ठमलञ्चकार ॥ ४ ॥

निजैः पदाम्भोजरजोभिः इमां अध्यक्षां, अशेषां समस्तां, भूमिं शुचिं पवित्रां, सृजन् कुर्वन्, गुरुः श्रीसूरिः, क्रमाद् लाभपुरात् प्रस्थितोऽनुक्रमेण, महिमनामकं नगरमलञ्चकार चतुर्मासकतिष्ठासया तत्र तस्थाविति शेषः ॥ ४ ॥

इतश्च भट्टारकहीरसूरेः
पुरोत्तमादुन्नतनामधेयात् ।
इयाय लेखो वपुषोऽसमाधे-
रुदन्तवादी च हवात्मकश्च ॥ ५ ॥

इतश्चेत्यस्मिन्नवसरे, श्रीहीरसूरेरुन्नतनामधेयाद् नगराद्, लेखः, किं०, वपुषः शरीरस्याऽसमाधेः उदन्तवादी वपुष्पीडासमाचारकथकः, पुनः, गुरोर्हवात्मक आकारणात्मकः, इया-

याऽऽगतवानिति, अत्र चकारद्वयमसमाधेराकारणस्य चाधिक्यसूचकमिति ॥ ५ ॥

ततः पुरादात्मगुरोः स पाद-
द्वयीं दिदृक्षुर्नलिनीमिवाऽली ।
प्रदत्तखेदं तदुदन्तमेतं
विचिन्त्य चित्तेऽचलदार्यवर्यः ॥ ६ ॥

तल्लेखोदन्तं किं०, एतं प्राप्तं, पुनः, प्रदत्तखेदं गुरुबाधासूचकत्वादिति, चित्ते विचिन्त्य ततः पुराद् महिमनगरात्, आत्मगुरोः श्रीहीरसूरेः, पादद्वयीं, नलिनीमिवाऽली भृङ्ग इव, दिदृक्षुर्द्रष्टुमिच्छुः, आर्यवर्यः सः, अचलच्चचालेति ॥ ६ ॥

अतः परमर्थतः सूत्रतश्च पञ्चभिः कुलकेन गुरुं वर्णयन्नाह—

पदे पदेऽतुच्छमहोत्सवौघां
विभूषयन्नंह्रिरजोभिरुर्वीम् ।
जनं समग्रं सुखयन् मनोज्ञा-
गमस्तडित्वानिव गोविलासैः ॥ ७ ॥

भयं सृजन् वादिनिशाचराणां
स्वतेजसा पङ्कजिनीशितेव ।
पुरे पुरे श्रावकसंघमुच्चैः-
श्रियं नयन् सिन्धुमिवौषधीशः ॥ ८ ॥

स्फुरद्दशो दीप इवाऽङ्गभाजां
हरंश्च मिथ्यात्वतमःसमूहम् ।
पथि स्मयं घ्नन् कुमतिव्रजानां

महामृगाणामिव सिंहशावः ॥ ९ ॥

मलं दलन्नध्वनि दैवताध्व-
धुनीव सर्वज्ञमनोज्ञवृत्तिः ।
समूलमुत्तालमहार्यवीर्यः
प्रकम्पयन् पापतरून् करीव ॥ १० ॥

मुदां निदानं गुरु गूर्जरत्रा-
वधूललाटे तिलकायमानम् ।
श्रियां निधानं सुकृतप्रधानं
प्रभुः क्रमात् पत्तनमाससाद ॥ ११ ॥

स्थाने स्थाने अतुच्छा महान्तश्च ये उत्सवास्तेषामोघः समूहो यस्यां तां, गुर्वागमादिति शेषः, उर्वी पृथ्वीं, अंह्रिरजोभिर्विभूषयन्, पुनः, गोविलासैर्वाग्विलासैः, समग्रं जनं सुखयन्, क इव, तडित्वानिव मेघ इव, तत्पक्षे, गोविलासैर्जलविलासैः, "गौरुदके" इत्यनेकार्थत्वादिति, गुरुर्मेघश्च किं०, मनोज्ञागमः प्रियागमन इति ॥ ७ ॥ पुनः, पङ्कजिनीशिता सूर्य इव, वादिन एव निशाचरा उलूकाश्चौरा वा तेषां भयं सृजन्, तथा पुरे पुरे श्रावकसंघमुच्चैरतिशयेन, श्रियं शोभां, नयन् प्रापयन्, कः कमिवेत्युपनयमाह—सिन्धुं समुद्रं, औषधीशश्चन्द्रमाः, इव यथेति ॥ ८ ॥ च पुनः, दीप इव किं०, स्फुरन्ती दशाऽवस्था यस्येति सः, पक्षे दशा वर्तिर्यस्येति सः, अङ्गभाजां मिथ्यात्वमेव तमस्तत्समूहं हरन्, पुनः, पथि मार्गे, कुमतिव्रजानां स्मयमहंकारं, घ्नन् विनाशयन्, यथा सिंहशावः केसरिकिशोरकः, महामृगाणां हस्तिनां, स्मयं हन्ति तथेति ॥ ९ ॥ पुनः, दैवताध्वधुनीव गङ्गेव, किं०, सर्वज्ञस्य महादेवस्य, पक्षे सर्वेषां ज्ञानां पण्डि-

तानां मनोज्ञवृत्तिः, मलं दलन् स्वपदन्यासैरध्वानं निर्मली-कुर्वन्निति, पुनर्गुरुः किं०, अहार्यवीर्यः, अत एव करीव गज-इव, समूलमुत्तालं चेति क्रियाविशेषणद्वयं, पापतरून् प्रकम्पयन् उन्मूलयन्निति ॥ १० ॥ प्रभुः श्रीअनूचानः, क्रमात् पत्तनं पत्तननामकं नगरं, आससाद प्रापेति, किंलक्षणं, मुदां हर्षाणां, निदानं, गुरु महत् , गूर्जरत्रावध्वा ललाटे तिलकसमानं, तथा श्रियां निधानं, पुनः, सुकृतेन प्रधानं, एतावन्नगरवर्णनं पुण्य-प्रधानत्वाद् गुरुपावितत्वाच्चेति ॥ इति पञ्चानां वृत्तानां व्या-ख्यानम् ॥ ११ ॥

महोत्सवोत्साहसमुत्सुकस्या-
ऽनघस्य संघस्य सदादरस्य ।
वरं पुरं तद् गुरुणाऽऽग्रहेण
कियद्दिनान् पट्टधरोऽधितष्ठौ ॥ १२ ॥

तद् वरं पुरं पत्तननाम, कियद् दिनान् यावत् , पट्टधरः सूरिः, अधितष्ठौ स्थितः, केन, संघस्य गुरुणाऽऽग्रहेण, संघस्य किं०, महोत्सवानामुत्साहः करणलक्षणस्तत्र समुत्सुकस्य, पुनः, सदा सर्वदाऽनघस्य निष्पापस्य, अत एव सन् विद्यमान आदरो-ऽर्थाद् देवगुरुभक्तौ यस्येति ॥ १२ ॥

अत्रान्तरे किं जातमित्याह–

तपाधिराजः प्रभुहीरसूरिः
पुरे वसन्नुन्नतनाम्नि तत्र ।
सुपर्वशाखीव मनोऽभिलाषान्
प्रपूरयामास महाजनस्य ॥ १३ ॥

तपागणस्वामी प्रभुहीरसूरिः, तत्रोन्नतद्रङ्गे वसन्, महा-

जनस्य संघस्य, सुपर्वशाखी कल्पद्रुरिव, मनोऽभिलाषान् प्रपूरयामासाऽपूरयदिति ॥ १३ ॥

रुजं दुरन्तामधिगम्य सम्यक्
तथाऽऽयुषोऽत्यन्तसुखस्य चान्तम् ।
प्रभुश्चकार प्रमनाश्चरित्र-
गृहध्वजाराधनयाऽन्त्यकृत्यम् ॥ १४ ॥

प्रभुः श्रीहीरगुरुः, स्ववपुषि दुरन्तां दुःसाध्यां, रुजं रोगम्, अधिगम्य मत्वा, तथाऽत्यन्तसुखस्याऽऽयुषोऽपि, चकारोऽप्यर्थः, भवति हि संयमजीवितव्यादत्यन्तसुखं मुक्तिसुखादि, तेन सार्थकमिदं विशेषणं; अन्तं प्रान्तसमयं ज्ञात्वा, प्रमनाः सन्, अन्त्यकृत्यं चतुरशीतिलक्षजीवयोनिक्षामणचतुःशरणस्वीकरणरूपं, चकाराऽकरोत्, कया, चरित्रं चारित्रधर्मः स एव गृहं तत्र ध्वजोपमा याऽऽराधना तया, निरतीचारं चारित्रं प्रपाल्य प्रान्तसमयोचितयाऽऽराधनया चारित्रमन्दिरं सध्वजीस्यादिति तत्त्वम् ॥१४॥

व्यधाद् विभुः स्वं तपसाऽग्निनेव
सुवर्णमात्मानमतीद्धभासम् ।
तदा बभौ चाऽस्तमलोऽस्य कायः
खरत्विषो बिम्ब इवाऽभ्रमुक्तः ॥ १५ ॥

विभुः हीरः, स्वमात्मानं, अतीद्धा दीप्ता भाः कान्तिर्यस्य तं, व्यधात्, केन, तपसा द्वादशविधेनापि, यथाऽग्निना सुवर्णमिति, तदा चाऽस्य प्रभोः, कायः किं०, अस्तमलः सन् बभौ, यथाऽभ्रमुक्तः खरत्विषो रवेः, बिम्बः शोभते, बिम्बशब्दः पुंनपुंसक इति ॥ १५ ॥

स सर्वथा क्षीणबलं विचिन्त्य

सितेतरे पक्ष इवोडुपं स्वम् ।
मुनीन् समग्रान् गृहमेधिनश्च
प्रभुः प्रभूताद्भुतधीरिमाऽवक् ॥ १६ ॥

संलेखनातपोनिर्मापणेन स्वं आत्मानं, सर्वथा क्षीणबलमबलं, विचिन्त्य यथा सितेतरे कृष्णे पक्षे, उडुपं चन्द्रं, तथा विज्ञाय स प्रभुः समग्रान् मुनीन् निजनिकटस्थान्, च पुनः, गृहमेधिनो गृहस्थांश्चाऽऽकार्य, प्रभूताद्भुतधीरिमाऽवक् विस्मयकारिधैर्यः सन्नुवाचेति ॥ १६ ॥

यदुवाच तदाह—

अवश्यभाविन्यवसानकेऽस्मिन्
न मेऽस्ति चिन्ता विहितात्मवृत्तेः ।
इदं भयं भेत्तुमलं निरन्त-
बला अपि स्युर्न हि तीर्थनाथाः ॥ १७ ॥

हे मुनयः! हे श्रद्धालवः!, अवश्यं निश्चयेन, भाविन्यस्मिन् अवसानके मे मम, चिन्ता नास्ति, यतो मे किं०, विहिता आत्मनो वृत्तिरर्थाद् धर्मानुष्ठानादौ येनेति पूर्वार्धम् । उत्तरार्धेनाऽवश्यभावित्वमेवाह—हि यतः, इदं मरणभयं भेत्तुं निरन्तबला-अनन्तबलाः, तीर्थनाथा अर्हन्तोऽपि, नाऽलं समर्थाः स्युः यदार्षम्—

"तित्थयरा गणहारी सुरवइणो चक्किकेसवा रामा ।
संहरिआ हयविहिणा का गणणा इयरलोगाणं?" ॥१॥

इत्याद्युक्तेरिति ॥ १७ ॥

पुनः किमाहेत्याह—

अमुत्र सर्वत्र हितोद्यमानां

न कापि चिन्ता भवतामिहास्ति ।
प्रभुः स वः पट्टधरो मदीयो
महानुडूनामिव कौमुदीशः ॥ १८ ॥

इह सांप्रतीनसंयमाराधने, भवतां न कापि चिन्ताऽस्ति यतो भवतां किं०, अमुत्र भवान्तरनिमित्तं सर्वत्र विधेये हितानुष्ठानादावुद्यमो येषां तेषां, येन भवन्तो हितोद्यमिनस्तेन भवतां न काप्यर्तिरस्ति, पुनरपि हितार्थकं वचनम्—यतः स मदीयः पट्टधरः श्रीविजयसेनसूरिः, वो युष्माकं, प्रभुरस्ति; इवेत्युपनये, यथा उडूनां नक्षत्राणां, कौमुदीशः प्रभुर्वर्तते तथा भवतामसौ महान् प्रभुरिति ॥ १८ ॥

भवद्भिराचार्य उदारधीर-
स्ततोऽभिगम्योऽहमिवाभिरूपैः ।
अनुप्लवानामयमस्ति पन्था-
निषेव्यते यत् तनयः पितेव ॥ १९ ॥

ततः कारणाद् भवद्भिः, किं०, अभिरूपैः पण्डितैः, उदारश्चासौ धीरश्चेत्युदारधीरः, आचार्योऽहमिव अभिगम्यः सेवनीयो यथाऽहं भवद्भिरभिगम्ये तथा मदाचार्योऽपि भवद्भिरभिगम्य- इति, यद् यतो हेतोः, अनुप्लवानां सेवकानां, अयं पन्था अस्ति यत्तनयः पुत्रः, पितेवाऽनुगम्यते निषेव्यते चेति ॥ १९ ॥

गुरोर्वचस्तच्छिरसा समस्तैः
प्रतिश्रुतं माल्यमिवेद्धवर्णम् ।
सुखं प्रसूते दिविषद्गवीव
प्रपालिताऽऽज्ञा प्रसभं प्रभूणाम् ॥ २० ॥

तदनन्तरोक्तं, गुरोर्वचः माल्यमिवेद्धवर्णं दीप्तवर्णं वचः, पक्षे, वर्णा अक्षराणि, माल्यपक्षे वर्णाः शुक्लादयः, समस्तैः शिरसा प्रतिश्रुतं प्रतिपेदे, यत इति हेतोः, प्रभूणां आज्ञा प्रपालिता सती, प्रसभं हठेन, दिविषद्गवीव कामधेनुरिव, सुखं प्रसूते ॥ २० ॥

तदाऽभिधायेति हितान्यमीषां
वचांसि भूयांसि विभुः समेषाम् ।
उवाच संसारविकारकार-
स्करद्विपः सोऽनशनं विधित्सुः ॥ २१ ॥

तदाऽस्मिन् समये, अमीषां मुनीनां श्रद्धालूनां, समेषां सर्वेषाम्, इति हितानि वचांसि अभिधाय स प्रभुरनशनं विधित्सुरुवाच, स कथं, संसारविकार एव कारस्करस्तरुस्तत्र द्विपो हस्ती, निरीहो भूत्वाऽनशनेच्छुरित्यूचिवान् ॥ २१ ॥

अधीतनानाविधवाङ्मयानां
महामुनीनामिदमस्ति वर्त्म ।
विधीयतेऽभ्यागत आयुषोऽन्ते
यदर्तिहन्ताऽनशनाधिकारः ॥ २२ ॥

अधीतं पठितं नानाविधं वाङ्मयं यैस्तेषां महामुनीनां महर्षीणां, इदं वक्ष्यमाणं, वर्त्म मार्गोऽस्ति, किमिदं, यदायुषोऽन्तेऽभ्यागते भवार्तिहन्ताऽनशनाधिकारो विधीयते प्रान्तेऽनशनं क्रियत इति ॥ २२ ॥

इह क्षणे सांप्रतमन्धसां मे
निरोध उच्चैः सुकृताभिबोधः ।

इतीरितं मे शृणुताऽऽश्रवा भो

निराश्रवाः ! संयमिशर्वरीशाः ! ॥ २३ ॥

सांप्रतमिह क्षणे मे मम, अन्धसां भक्तानामशनादीनां, निरोधः, किं०, सुकृतस्याऽभिबोधो जागरणं यस्मादिति, अस्तीत्यन्वयः । भोः संयमिषु शर्वरीशाश्चन्द्राः ! पुनः, भो आश्रवा वचसि स्थिताः कथितकारिण इति, पुनः, भो निराश्रवा निर्गता-आश्रवाः कर्मद्वाराणि येभ्यस्ते साधवः! मे मम,इतीरितं जल्पितं, शृणुतेति ॥ २३ ॥

शिवात्मकृत्याय कृतोद्यमस्य

भवन्तु विघ्ना मम मा भवन्तः ।

जगत्प्रमोदार्थमुपागतस्य

घनाघनस्येव मरुत्प्रवाहाः ॥ २४ ॥

भो महात्मानः ! मम शिवात्म शिवहेतुर्यत् कृत्यं तस्मै कृतोद्यमस्य, भवन्तो विघ्ना मा भवन्तु निषेधनादिद्वारेणेति, जगतः प्रमोदाय उपागतस्य, घनाघनस्य मेघस्य, मरुत्प्रवाहा इव यथेति दृष्टान्तः ॥ २४ ॥

वचोभिरित्यद्भुतभेषजाभैः

शनैः शनैः शुद्धरसायनज्ञः ।

गुरुर्भिषक् सौवपरिच्छदस्य

कदाग्रहव्याधिमपाचकार ॥ २५ ॥

इत्युक्तैर्वचोभिः, किं०, अद्भुतभेषजाभैः, गुरुर्भिषक् वैद्यः, किं०, शुद्धरसायनं समतामार्गरूपं जानातीति सः, सौवपरिच्छदस्य स्वपरिवारस्य, कदाग्रहोऽनशननिवारणरूपस्तद्रूपव्याधिम् , अपाचकाराऽपाकृतवानिति ॥ २५ ॥

अथ षड्भिर्वृत्तैः सूत्रार्थौ सङ्कलयति–

गुरुं निरीक्ष्याऽनशनक्रियायां
सुमेरुचूलामिव धैर्यपात्रम् ।
विनेयवृन्देषु शुगात्मशङ्कु-
निविद्धमूर्तिष्विव मूर्च्छितेषु ॥ २६ ॥

इति प्रभोर्व्याहरणाप्रमाण-
समीरणश्रेणिभवानुभावात् ।
विनेयपूगप्रमदप्रदीपे
रुचां चयं मुञ्चति सुप्रकाशम् ॥ २७ ॥

इति प्रभोर्वाग्रजनीकरस्यो-
दयात् समुल्लासितपुण्यवार्धेः ।
विनेयवर्गेक्षणचन्द्रकान्त-
मणीषु मुञ्चत्सु जलानि बाढम् ॥ २८ ॥

इति प्रभूक्त्या शरदा समन्ताद्
विनिर्मितानल्पकपङ्कहान्या ।
कृते समस्तान्तिषदां विषाद-
तुषाररश्मावतिदीप्रदीप्तौ ॥ २९ ॥

तदेति सूरेर्वचनप्रपञ्च-
पयोमुचां संचयतः सपङ्काम् ।
विनेयचेतःसरसीं विहाय
गतेषु शर्मात्मसितच्छदेषु ॥ ३० ॥

भवार्त्यकूपारपयस्तितीर्षुः
प्रभुः प्रचेताः परमेष्ठिसाक्ष्यम् ।
चरित्रचैत्योपरि हेमकुम्भं
स्वयं निरीहोऽनशनं चकार ॥ ३१ ॥

गुरुं श्रीहीरम्, अनशनक्रियायां सुमेरुचूलामिव धैर्यपात्रं धीरं, निरीक्ष्य विनेयवृन्देषु शिष्यसमूहेषु, मूर्च्छितेषु, उत्प्रेक्ष्यते—शुक् शोकः श्रीगुरोरनशनकरणात् तदात्मा तत्स्वरूपः शङ्कुः कीलकस्तेन विद्धा मूर्तिर्येषां तेष्विव, अन्योऽपि बाणादिविद्धो मूर्च्छत्येवेति ॥२६॥ प्रभोर्गुरोः, इतीत्यनशनक्रियारूपं व्याहरणं भाषणं तल्लक्षणोऽप्रमाणः समीरणो वायुस्तस्य या श्रेणिस्तद्भवानुभावात्, विनेयानां पूगः प्रकरस्तस्य यः प्रमद एव प्रदीपस्तस्मिन्, सुप्रकाशं रुचां चयं कान्तिभरं, मुञ्चति सतीति ॥ २७ ॥ इति प्रभोः सूरेः, अनशनत्वस्वीकाररूपा या वाग् तद्रूपो रजनीकरश्चन्द्रमास्तस्योदयात्, किं०, समुल्लासितः पुण्यवार्धिर्येन तस्मात्, विनेयवर्गस्य ईक्षणानि नेत्राणि तान्येव चन्द्रकान्तमणयस्तेषु, बाढं जलानि मुञ्चत्स्विति गुरोरशनत्यागश्रवणसमुत्पन्नशोकाद् रुदत्सु ॥ २८ ॥ इति प्रागुक्तप्रभूक्त्या शरदा शरत्कालेन, समस्तान्तिषदां सर्वशिष्याणां, विषाद एव तुषाररश्मिश्चन्द्रस्तस्मिन्, अतिदीप्रदीप्तौ देदीप्यमाने कृते सति, प्रभूक्त्या शरदा किं०, समन्ततो विनिर्मिताऽनल्पकस्य पङ्कस्य पापस्य कर्दमस्य च हानिर्ययेति ॥ २९ ॥ तदा सूरेरिति प्राग्व्याख्यातवचनप्रपञ्चा एव पयोमुचो मेघास्तेषां, संचयतो विनेयानां चेतःसरसीं सपङ्कां शोकरूपकर्दमकलुषां, विहाय त्यक्त्वा, शर्मात्मानः सुखरूपाः सितच्छदा हंसास्तेषु, गतेष्विति, हंसा हि वर्षतौ सपङ्कं सरो विमुच्याऽन्यतो यान्तीति प्रसिद्धिरिति, ततो गुरूणामनशनगिरा संजातशुचा विगलत्सुखेषु शिष्ये-

ष्वित्यर्थः ॥ ३० ॥ प्रभुः सूरिः, प्रचेता प्रमनाः सन्, परमेष्ठिसाक्ष्यं पञ्चपरमेष्ठिसाक्षिकं, अनशनं चकार, कथमौत्सुक्यात्तदकरोदित्याह--भवार्तिरूपो यः अकूपारः सागरस्तस्य पयो जलं तितीर्षुस्तरीतुमिच्छुः, अत एव किं०, निर्गता देहादेरपि ईहा यस्येति सः, तथाऽनशनं किं०, चरित्रं चारित्रं तद्रूपं चैत्यं प्रासादस्तदुपरि हेमकुम्भं प्रान्तेऽनशनस्वीकाराच्चारित्रमति शोभते ॥ इति षण्णां व्याख्या ॥ ३१ ॥

अकारि यः श्राद्धजनैर्महीयां-
स्तदोत्सवः प्रीणितविश्वविश्वः ।
तमीक्षितुं वर्णयितुं च शक्तौ
पुलोमजाराजभुजङ्गराजौ ॥ ३२ ॥

तदा तत्र समये श्रीगुरूणां अनशनाङ्गीकारावसरे, यः श्राद्धजनैरुत्सवः, किं०, महीयान्, अकारि कृतः, तमुत्सवं, ईक्षितुं वर्णयितुं च पुलोमजाराजभुजङ्गराजौ शक्रशेषनागौ तावेव, शक्तौ समर्थौ, एकः सहस्राक्षत्वात्, एकः सहस्रजिह्वत्वात्; नान्ये केचनाऽप्यस्मदादय इति ॥ ३२ ॥

स्मरन् नमस्कारमपारपापा-
पहं महानन्दसुखावहं च ।
मनोवचःकायकृतानि निन्दन्
पुनः पुनः पुण्यमना अघानि ॥ ३३ ॥

महोदयस्त्रीरतिदानदूतीं
भजन् समस्तेष्वसुमत्सु मैत्रीम् ।
जराजनुर्मृत्युभियां निदानं

त्यजन् शरीरेऽपि ममत्वमुच्चैः ॥ ३४ ॥

भुजाशुगर्तुद्विजराण्मितेऽब्दे

श्रियां पदे भाद्रपदे च मासे ।

तिथौ तथा शङ्करसंमितायां

सितद्युतेर्दीधितिबन्धुरायाम् ॥ ३५ ॥

विहाय नित्यं मलिनामिहत्यां

तनुं मनोज्ञां च सुपर्वयोनेः ।

गुरुर्गुणी ग्रामधुनीं विमुच्य

नभोनदीं हंस इव प्रपेदे ॥ ३६ ॥

चतुर्णां युगपद् व्याख्या यथा—अपारपापापहं, पुनः, महानन्दस्य मोक्षस्य सुखावहं, नमस्कारं स्मरन्, च पुनः, मनोवचःकायकृतानि अघानि पापानि, निन्दन् ॥ ३३ ॥ पुनः, महोदयश्री मुक्तिकान्ता तस्या या रतिस्तद्दाने दूतीव दूती तां, दूतीद्वारा हि स्त्रियः सुखं लभ्यन्ते । तस्माद् मुक्तिवधूरतिदानदूतीं, समस्तेषु असुमत्सु प्राणिषु, मैत्रीं भजन्, पुनः, जरा च जनुश्च जन्म च मृत्युर्मरणं चेत्येषां भीर्भीतिस्तासां, निदानं, शरीरे ममत्वं त्यजन्निति ॥ ३४ ॥ भुजौ द्वौ, आशुगा बाणाः पञ्च, ऋतवः षट्, द्विजराट् चन्द्र एकः, ततोऽङ्कानां वामगत्या १६५२ वर्षे, च पुनः, श्रियां पदे भाद्रपदे मासे, तथा शङ्करा रुद्रा एकादश, तत्संमितायां तिथौ सितद्युतेश्चन्द्रस्य, दीधितिभिः कान्तिभिर्बन्धुरायां तिथौ शुक्लायामेकादश्यामिति ॥ ३५ ॥ गुरुः श्रीहीरसूरिः, इहत्यां इहभवसंबन्धिनीं, नित्यं मलिनां तनुं विहाय त्यक्त्वा, सुपर्वयोनेर्देवयोनेश्च, मनोज्ञां तनुं प्रपेदे प्रतिपन्नवान्, अत्र मध्यस्थस्तनुशब्द उभयत्र योजनां

लभते देहलीप्रदीपवदित्यन्वयः । दृष्टान्तमाह—यथा हंसो राजहंसः, ग्रामधुनीं सामान्यनदीं, विमुच्य नभोनदीं गङ्गां, प्रपद्यते तथेत्यर्थः ॥ इति चतुर्भिरर्थः समर्थितः ॥ ३६ ॥

सुगन्धसारैर्घनसारमिश्रैः
सकुङ्कुमैर्बन्धुरगन्धधूल्या ।
युतैश्च धूपैरभिरूपरूपै-
श्चतुःसमैर्मञ्जुलमौक्तिकैश्च ॥ ३७ ॥

ससौरभैः पेशलपुष्पपुञ्जै-
र्मुहुर्मुहुः काञ्चनरूप्यरूपैः ।
तदा च तादृग् वपुरार्यभर्तुः
सदर्चमानर्च समस्तसंघः ॥ ३८ ॥

अनयोर्व्याख्या—तदा च श्रीहीरगुरौ दिवं प्राप्ते सति, तादृगवशिष्टं आर्यभर्तुः सूरेः, वपुः समस्तसंघो द्वीपबन्दिरवास्तव्यस्तत्रत्यश्च, सदर्चं यथा स्यात् तथा, घनसारमिश्रैः सुगन्धसारैः शोभनचन्दनैः, च पुनः, चतुःसमैश्चन्दनागुरुकस्तुरीकुङ्कुमलक्षणैः पूर्वोक्तैः, पुनर्वारं वारं, काञ्चनरूप्याणां रूपैर्नाणकैः, इत्यादि शेषं सुगमम् ॥ इति युग्मव्याख्या ॥ ३७॥३८ ॥

अगारिवर्गः शिबिकां विशालां
वरैर्दुकूलै रचयाञ्चकार ।
प्रभोः शरीरस्य कृते सुधर्मा-
ऽनुजामिवोच्चैः सुमनोमनोज्ञाम् ॥ ३९ ॥

प्रभोः शरीरस्य कृते निवेशनायेति, अगारिवर्गः श्राद्धवर्गः, वरैर्दुकूलैः पट्टकूलैः, विशालां विस्तीर्णां, विशालानाम्नीं

वा, शिबिकां,रचयाञ्चकाराऽरचयदित्यन्वयः, उत्प्रेक्ष्यते–सुधर्मा शक्रसभा तस्या अनुजामिव, तत एव कीदृशीं, सुमनोभिः पुष्पैर्मनोज्ञां, सभापक्षे देवैरिति ॥ ३९॥

अगारिणश्चन्दनचर्चिताङ्गं

यथोचितन्यस्तमहर्षिवेषम् ।

हृदीव जीवन्तमनिन्द्यमूर्तिं

न्यवेशयंस्तच्छिबिकान्तरे तम् ॥४०॥

तस्याः शिबिकाया अन्तरे, तं गुरुं, हृदीव अगारिणो न्यवेशयन् अस्थापयन्, तं किं०, जीवन्तमिव, अनिन्द्या मूर्तिर्यस्येति तं, पुनः, चन्दनेन चर्चितमङ्गं हस्तादि यस्येति तं, तथा यथोचितं न्यस्तो महर्षिवेषो यत्रेति तं, कालधर्मप्राप्तस्य मुनेर्मुनिवेषवत एव संस्कार इति ॥ ४० ॥

पदे पदे मूर्च्छदपारबाष्पा

महेभ्यमुख्या गृहमेधिनश्च ।

महोत्सवाडम्बरसुन्दरं ते

सुरा इवैनां शिबिकामथोहुः ॥ ४१ ॥

अथेति प्रस्तावे, महेभ्यमुख्या महाव्यवहारिणः, समीपस्थद्वीपबन्दिरवासिनश्चकारादन्येऽप्यल्पर्धयो गृहमेधिनः, महोत्सवाडम्बरसुन्दरं यथा स्यात्तथेति, एनां शिबिकां, सुरा इव ऊहुरवहन्निति, ते किं०, पदे पदे महर्षिशोकाद् मूर्च्छन्त उद्भवन्तोऽपारा बाष्पा येषां ते मूर्च्छदपारबाष्पा इति ॥ ४१ ॥

सगन्धसाराऽगुरुमुख्यदारु-

भराचितायां शुचिमञ्चितायाम् ।

तदाऽथ संस्कारमकार्षुरेते
प्रभोस्तनोः किं तमसो निजस्य ? ॥ ४२ ॥

तदेति संस्कारभूमिप्राप्त्यनन्तरं, अथेति चतुरतरनरनिकरनिर्मापितशरीरार्चाविरामे, प्रभोः सूरेः श्रीहीरस्य, तनोः शरीरस्य, एतेऽगारिणः, सगन्धसाराऽगुरुमुख्यदारुभरैराचितायां व्याप्तायां, शुचिमती अग्निमती या चिता तस्यां, संस्कारं अकार्षुः, उत्प्रेक्ष्यते—किं०, निजस्य स्वकीयस्य, तमसः पापस्य, संस्कृतिं कृतवन्त इति ॥ ४२ ॥

ततः पुरादुन्नतनामधेया-
दुदन्तमेतं प्रथयन् पृथिव्याम् ।
श्रियां खनौ पत्तनराजधान्या-
मियाय लेखः कृतदुःखलेखः ॥ ४३ ॥

ततस्तस्मादुन्नतनाम्नः पुरात्, एतं उदन्तं पृथिव्यां प्रथयन् श्रीहीरस्वर्गगमनसमाचारं विस्तारयन्, कृता दुःखानां लेखा श्रेणिर्येन सः, लेखः, पत्तनराजधान्यां पत्तननगरे, इयायाऽऽगत इति ॥ ४३ ॥

अथाक्षरैर्लेखगतैरुदन्ता-
वबोधतः श्रीयुवराजराजः ।
भुजङ्गमालोकनतः प्रदीप-
शिखेव विच्छायरुचिर्बभूव ॥ ४४ ॥

अथ लेखगतैरक्षरैरुदन्ताऽवबोधतः श्रीहीरस्वःप्राप्त्युदन्ताकलनतः, श्रीयुवराजराजः किं०, विच्छाया रुचिर्यस्य सः, एवंविधो बभूव, कस्मात् क इव, भुजङ्गमालोकनतः सर्पेक्षणात्, दीपशिखेवेति ॥ ४४ ॥

स्वकः किमप्येष बभूव लेखो
रवेरसौ चेतसि नोऽस्ति तर्कः ।
अभूदनूचानदृगुत्पलश्री-
भरं हरन् यज्जगदिन्दुभाहृत् ॥ ४५ ॥

एष श्रीगुरूदन्तसूचको लेखः, किमपि रवेः सूर्यस्य, स्वकः स्वकीयः, बभूव; असौ तर्को नोऽस्माकं, चेतस्यस्तीति कविवचः, यो यस्य स्वकः स्यात् स तदुचितकर्मनिर्माता भवेत्, तत आह– यद् यस्माद्धेतोः, अनूचानस्य दृगेवोत्पलं तस्य श्रीभरं हरन्, तथा जगदेवेन्दुस्तस्य भां हरतीति जगदिन्दुभाहृत्, अभूत्; सूर्यो हि उत्पलश्रियं चन्द्रविकाशिकमलशोभां, तथेन्दोर्द्युतिं हरति तथै-षोऽपि लेखस्तथा जात इति ॥ ४५ ॥

तदाऽभवद् योऽसुखदो विषादो
मनस्यनूचानमहीमघोनः ।
अलं स एवाऽवगमे तदीये
समे समेताऽमलकेवलो वा ॥ ४६ ॥

तदा श्रीगुरुविरहोदन्तपिशुनलेखाक्षरदर्शनावसरे, यो विषादः, किं०, असुखदः, अनूचानमहीमघोनः श्रीआचार्यराजस्य, मनसि अभवज्जातः, तदीये समे समग्रे, अवगमे तद्विषादावबोधे, स एव प्रभुरलं समर्थः, नान्यः कश्चिदिति, वा अथवा, समेतामलकेवलः प्राप्तोज्ज्वलकेवलः केवल्येव, अलं समर्थ इति तत्त्वम् ।४६।

अथाचार्यधुर्यो विषादोद्गाररचनानि यानि वचनान्यवा-दीत्, तानि काव्यद्वात्रिंशिकया प्रदर्शयति–

ममानिशं यत् त्वमवोच ईश !
सुत ! त्वमास्से मम चेतसीति ।

यथावजाकण्ठकुचोपमां तत्

समस्तमुच्चैरभिजात! तात! ॥ ४७ ॥

अये सुत! त्वं मम चेतसि मच्चित्ते, आस्से वर्तसे, इति यत् त्वं हे ईश! ममाऽनिशं अवोचः अब्रवीः, तत् समस्तं, हे अभिजात! कुलीन!, हे तात! अजाकण्ठकुचोपमां ययौ निरर्थकं जातमित्यर्थः ॥ ४७ ॥

कथं ज्ञातं तदित्यग्रेतनवृत्तेनाह—

यदर्धनिर्वर्णितमङ्गनानां

दिवो दिदृक्षुः प्रसभं प्रसन्नम् ।

भवामि यावत्पदपद्मभृङ्ग-

स्तवात्र तावद् न विलम्बितस्त्वम् ॥ ४८ ॥

यद् यतः कारणात्, हे तात! यावदहं तव पदपद्मभृङ्गो भवामि दूरदेशादागत्य त्वत्सेवां करोमि, तावत् त्वं न विलम्बितः, यद्यहं भवच्चित्ते भवामि तदा त्वं विलम्बं करोष्येव । औत्सुक्यनिदानं निरूपयन्नाह—त्वं कथं, दिवोऽङ्गनानां स्वर्गाङ्गनानां, अर्धनिर्वर्णितं अर्धालोकनं कटाक्षोत्क्षेपरूपमिति यावत्, दिदृक्षुर्द्रष्टुमिच्छुरिति ॥ ४८ ॥

ममाऽभवद् या भगवंस्त्वदंह्रि-

सरोजयोः श्रीः पुरतः स्थितस्य ।

त्वदाननन्यस्तविलोचनस्य

सुदुर्लभा साऽथ नभोलतेव ॥ ४९ ॥

हे भगवन्! त्वदंह्रिसरोजयोः पुरतः स्थितस्य, पुनस्त्वदाननन्यस्तविलोचनस्य भवन्मुखस्थापितनेत्रस्य मम, या श्रीः

शोभा, अभवत्; सा श्रीः, अथ त्वद्विरहे नभोलतेव गगनवल्लीव, सुदुर्लभा ॥ ४९ ॥

विधाय भूमीस्पृशि भालभागे-
ऽञ्जलिं मम प्राञ्जलमञ्जुलस्य ।
भवन्निदेशं सृजतोऽभवद् मुत्
क्व साऽथ नाथाऽमृतभुग्लतेव ? ॥ ५० ॥

हे नाथ ! प्राञ्जलः सरलश्चासौ मञ्जुलश्च, उत प्राञ्जलेषु मञ्जुलस्तस्य मम, भूमीस्पृशि भालभागे अञ्जलिं विधाय भवन्निदेशं त्वच्छासनं, सृजतो या मुत् अभवत्, निर्देश इव निदेशशब्दोऽपि शासनवाचकोस्तीऽति, अथ त्वन्मुक्तस्य सा मुत्, अमृतभुग्लतेव कल्पवल्लीव, क्व ? न क्वापीत्यर्थः ॥ ५० ॥

पुरातनर्षिव्रजराजराजं
विना भवन्तं भुवनैकदीपम् ।
कमत्र तातेति भणन्नभीक्ष्ण-
महं भविष्यामि विनीतविद्यः ? ॥ ५१ ॥

हे भगवन् ! भवन्तं विनाऽत्र भवे, अभीक्ष्णं वारं वारं, तात तातेति कं प्रति भणन्, विनीतविद्योऽभ्यस्तविद्यः, भविष्यामि, अपि तु न कोऽप्येवंभूतोऽस्ति यमित्थं भणामि, भवन्तं किं०, पुरातनाः पुराणा ऋषिव्रजास्तेषु राजराजो नृपेन्द्रश्चन्द्रो वा तं प्रकृष्टत्वेन तदाचारचारित्वात्, अत एव पुनर्भुवने जगति एकोऽद्वितीयो दीपस्तमिति ॥ ५१ ॥

रतिर्ममासीदममेश ! योच्चैः
प्रपश्यतस्त्वन्मुखपुण्डरीकम् ।

अथाब्जिनीवाऽश्मनि सा भवित्री

कथं कथं नाथ! हृदीति मन्ये ? ॥ ५२ ॥

हे अममेश निर्ममेश! त्वन्मुखपुण्डरीकं प्रपश्यतो मम या रतिरासीत्, अथ हे नाथ! सा रतिर्मम कथं कथं भवित्री? अपि तु न कथमपि, इति हृदि मन्ये, केव, अब्जिनीव यथा अश्मनि दृषदि, अब्जिनी कमलिनी, कथं भवति, तथेति ॥ ५२ ॥

करोत्करस्येव रविं भवन्त-

मभूद् मम श्रीरनुगच्छतो या ।

लतेव सिक्ताऽम्बुधरैः कदा सा

पुरा भवत्युन्नतिभाक् प्रकामम्? ॥५३॥

हे तात! भवन्तमनुगच्छतो मम या श्रीरभूत्, यथा रविं सूर्यं, अनुगच्छतः करोत्करस्य किरणगणस्य, सा श्रीः, उन्नतिभाक् कदा पुरा भवति, अत्र वर्तमानापि पुरायोगाद् भविष्यदर्थं समर्थयति, केव, अम्बुधरैः सिक्ता लतेव यथा मेघसिक्ता लतोन्नतिभाग् भवति, तथा सा कदा पुरा भवति, अपि तु न भाविनीत्यर्थः ॥ ५३ ॥

व्रजाऽभिधेह्येहि भणेति भव्यै-

र्वचोभिरासंस्तव या मुदो मे ।

न तल्लवोऽप्यर्थिजनप्रणीतै-

स्त्वमेधिथा जीव जयेतिवाक्यैः ॥ ५४ ॥

हे गुरो! त्वं व्रज, अभिधेहि, एहि, भण, इति तव वचोभिर्या मम मुद आसन्, अथ त्वं एधिथाः, जीव, जयेति अर्थिजनप्रणीतैर्वाक्यैः, न तल्लवोऽपि, विद्यत इति शेषः ॥ ५४ ॥

विना तवाज्ञामथ मुक्तिकान्ता-

निषङ्गदूतीं निजमूर्ध्नि कस्य ।

निदेशमेणीनयनेव पुण्ड्रं

श्रियः पदं नित्यमहं निधास्ये ? ॥ ५५ ॥

हे तात ! अथ तवाज्ञां विना कस्य निदेशं निजमूर्ध्नि नि-धास्ये, तवाज्ञां किं०, मुक्तिरेव कान्ता तस्या निषङ्गः सङ्गस्तत्र दूतीं, केव, एणीनयनेव कामिनीव, पुण्ड्रं तिलकं, निदेशं तिलकं च किं०, श्रियः पदमिति स्पष्टम् ॥ ५५ ॥

त्वयि प्रयातेऽस्तमनन्तकान्तौ

पयोजिनीभर्तरि भव्यपद्मे ।

ध्रुवं भवित्री भरतावनीयं

कुपाक्षिकोल्लूकतमःप्रसारा ॥ ५६ ॥

हे प्रभो ! त्वयि पयोजिनीभर्तरि सूर्ये, अस्तं प्रयाते सति, कीदृशे त्वयि, अनन्ता कान्तिर्यस्य तस्मिन्, पक्षे अनन्ते आकाशे कान्तिर्यस्येति तस्मिन्, पुनः किं०, भव्या श्लाघ्या, अथवा भव्यानां प्राणिनां, अथवा भव्यस्य भद्रस्य पद्मा श्रीर्यस्मात् तस्मिन्, पक्षे भव्यानि पद्मानि यस्मादिति तस्मिन्, इयं भरता-वनी, कुपाक्षिका एवोलूकास्तमांसि च तेषां प्रसारो यस्यां सेति, ध्रुवं भवित्रीति ॥ ५६ ॥

विना भवन्तं गृहरत्नमीश !

सुदीप्तमाधाय कमुत्प्रकाशः ।

शिवाध्वनीनो हृदि धाम्नि भावी

जनः समस्तो भरतावनीजः ? ॥ ५७ ॥

हे ईश! भवन्तं सुदीप्तं गृहरत्नं दीपं, विना शिवाऽध्वनीनः परमपदपथिकः, भरतावनीजो भरतक्षेत्रोद्भवः, जनो हृदि धाम्नि कमपरं नरमाधाय स्थापयित्वा, उत्प्राबल्येन प्रकाशो यस्याऽसावुत्प्रकाशः, भावी, अपि तु न कमपि, शिवाध्वनीन इति पदेन मिथ्यात्विनिरास उक्तः ॥ ५७ ॥

सुधर्ममुख्यर्षिमतङ्गजानां
धृता त्वया वामगतेन या धूः ।
कथं मयैकेन च दक्षिणेन
धरिष्यते सा ननु तर्णकेन? ॥ ५८ ॥

हे गुरो! सुधर्मस्वामिमुख्यर्षयः सूरयस्त एव मतङ्गजास्तेषां, वामगतेन वामांसस्थेन, मनोज्ञगतिना वा; या धूर्धृता, नन्विति प्रश्ने, सा धूः, एकेन दक्षिणेन दक्षिणांसस्थेन, सरलेन वा; तर्णकेन वत्सकेन, कथं धरिष्यते? ॥ ५८ ॥

अचिन्तयित्वेति मदाकृतिं द्राक्
त्वमप्सरःकेलिरसानसेवीः ।
न चेद् भवादृग्हितकारिपित्रा
विमुच्यते किं पृथुको लघीयान्? ॥ ५९ ॥

इति पूर्वोक्तां, मदाकृतिं लघीयोभावरूपां, अचिन्तयित्वाऽविचार्य, हे गुरो! त्वं अप्सरसां केलिरसान् असेवीः, इत्थं चेद् न स्यात् तदा मादृक् पृथुको बालः, किं०, लघीयानतिशयेनाऽणुः, भवादृग् हितकारी चाऽसौ पिता चेति तेन, किं विमुच्यते? अपि तु नेति ॥ ५९ ॥

अकब्बरोऽयं नरराजरत्नं

भवांश्च सर्वर्षिजनावतंसः ।
मिथश्च योऽभूद् युवयोर्निषङ्गः
सुवर्णमण्योरिव वर्णनीयः ॥ ६० ॥

हे गुरो ! एकतोऽयमकब्बरो नरराजरत्नं, परतश्च सर्वर्षिजनाऽवतंसो भवान् , अनयोर्युवयोर्मिथोऽन्योन्यं, यो निषङ्गः सङ्गः, कीदृशः, सुवर्णमण्योरिव वर्णनीयो वर्णनार्ह इति, अभूत् संजातः ॥ ६० ॥

स जातवान् दत्तसमस्तसंपद्
नृणां कृषीणामिव वारिवाहः ।
प्रकाशभाग् भानुमतेव लोको
महस्विना तेन बभूव सर्वः ॥ ६१ ॥

स युवयोः सङ्गः, नृणां दत्ता समस्ता संपद् येनेति सः, यथा वारिवाहो मेघः, कृषीणां दत्तसमस्तसंपद् भवति,अत्र पुनरित्यध्याहार्यं, तेन पुनस्तेन युवयोः सङ्गेन, भानुमतेव महस्विना सर्वो लोको भव्यजनः, प्रकाशभाग् धर्मोद्द्योतेन स्फुटः, बभूवेति ॥ ६१ ॥

मरुष्विवामर्त्यमहीरुहः स
जनेषु चासीत् सततं हिताय ।
कदाऽथ भावी सुखकृत् प्रजानां
पयोरुहां पूष्ण इवोदयः सः ? ॥ ६२ ॥

तथा स सङ्गो जनेषु सततं हिताय आसीत् , चकारोऽपरार्थाक्षेपे, यथाऽमर्त्यमहीरुहः कल्पद्रुः, मरुषु मरुस्थलेषु, अथ त्वयि दिवं प्राप्ते, स युवयोः सङ्गः, प्रजानां लोकानां, कदा सुखकृद्

भावी ? अपि तु तत्संभावनापि नेति, सुखकृत् क इव, पयोरुहां पङ्कजानां, पूष्णः सूर्यस्य, उदय इवेति ॥ ६२ ॥

शशीव पक्षेण सितेतरेण
कलाकलापं क्रमतो घ्नतेह।
स नाशितस्त्वां हरता विधात्रा
जगत्पयोराशिविलासमूलम् ॥ ६३ ॥

हे गुरो ! त्वां हरता विधात्रा स युवयोः सङ्गः, इह क्षेत्रे, नाशितः, केन कमिवेत्याह—इव यथा, शशी सितेतरेण पक्षेण ह्रियते, पक्षेण किं कुर्वता, क्रमतः कलाकलापं घ्नता, सङ्गः शशी च कीदृक्, जगदेव पयोराशिः समुद्रस्तस्य विलासानां मूलम् ॥ ६३ ॥

विवाहिता श्रीमदकब्बराय
वराय तात? त्वयका द्विजेन।
कृपाकनी रूपबलर्द्धिबीजं
तथा यथार्थाद्भुतमन्त्रभाजा ॥ ६४ ॥
यथा युतौ नित्यमिमावभूतां
सुदम्पती भावरसान् प्रपन्नौ।
विनाऽस्ति न त्वां स परत्र मन्त्रः
स्मरन्नदस्तापमुपैम्यहं ह्रीं! ॥ ६५ ॥

हे तात! त्वयका त्वया, द्विजेनेव द्विजेन श्रीअकब्बराय वराय कृपारूपा कनी, कीदृशी, रूपबलर्द्धीनां बीजं, त्वया किं०, यथार्थोऽद्भुतो मन्त्रो विवाहमन्त्रस्तं भजतीति तेन तथा, विवाहिताऽस्तीति ॥ ६४ ॥ यथा इमौ सुदम्पती वधूवरौ, नित्यं युतौ

निर्वियोगिनौ, अभूताम्, गुरोर्मिलनाद् नृपमनसः कृपा न कदापि दूरीभूताऽस्तीति,इमौ किं०, भावश्चित्तोन्नतिस्तद्रसान् प्रपन्नौ, अथेत्यध्याह्रियते, अथ स विवाहमन्त्रः, त्वां विना परत्र परस्मिन्, नास्ति; ततश्चादः प्रत्यक्षं, स्मरन् अहं तापमुपैमीति, हीति खेदवाचकोऽव्ययः ॥ अर्थतो युग्मम् ॥ ६५ ॥

अकब्बरो बब्बरवंशजन्मा
त्वयीद्धबुद्धिर्भृशमस्ति भूपः ।
सुभक्तिभाजस्त्वयि येऽसुभाजः
स तानसून् स्वानिव पाति नित्यम् ॥६६॥

हे गुरो! बब्बरवंशजन्माऽकब्बरः शाहिः, त्वयि भृशं इद्धबुद्धिर्दीप्तमतिः, अस्ति; तस्माद् येऽसुभाजः प्राणिनः, त्वयि सुभक्तिभाजः सन्ति स भूपस्तान् स्वान् असूनिव निजप्राणानिव, पाति रक्षतीत्यनिष्टोपद्रवेभ्य इति ॥ ६६ ॥

अभूद् यदारोह इहास्तिकानां
सुदुर्लभः कल्प इवाऽनयानाम् ।
स सिद्धशैलो भगवन्! भवद्वाक्-
प्रदीपसोद्द्योतहृदा व्यधायि ॥ ६७ ॥
अकब्बरेणाऽवनिवल्लभेन
यदार्हतानां करसाद् नितान्तम् ।
सुधांशुतुल्या तव कीर्तिरेषा
विशेषविद्भिर्लिखिताऽर्कबिम्बे ॥ ६८ ॥

अनयोर्व्याख्या–हे भगवन्! अनयानां अभाग्यानां नराणां, कल्पतरुरिव, अथवाऽनयानां नयहीनानां, कल्प आचार इव,

यदारोहो यस्यारोहः, इह आस्तिकानां श्रद्धालूनां, सुदुर्लभोऽभूत्, स सिद्धशैलः श्रीशत्रुञ्जयः, अकब्बरेणाऽवनिवल्लभेन राज्ञा, किं०, भवद्वाक्प्रदीपेन सोद्द्योतं हृद् यस्येति तेन, यन्नितान्तं आर्हतानां जैनानां, करसाद् हस्तायत्तः, व्यधायि कृतः, एषा तव कीर्तिः सुधांशुतुल्या शशिसमा, विशेषविद्भिरर्कबिम्बे लिखिता, एतावताऽर्के यावत् तव कीर्तिरपि स्थास्यतीत्यर्थः ॥ इति युग्मम् ॥ ६७ ॥ ६८ ॥

कुपाक्षिकव्यूहवचोऽम्बुवाहात्
सपङ्कमासीज्जनचित्ततोयम् ।
विभो ! भवद्वाक्कतकाऽच्छचूर्ण-
प्रयोगतस्तद् विमलं बभूव ॥ ६९ ॥

ततस्तदन्तः सदसच्च वस्तु
जिनोदितं तात ! तवाऽनुभावात् ।
उपैति सर्वं प्रतिबिम्बभावं
पयोनिधौ बिम्बमिवाऽमृतांशोः ॥ ७० ॥

हे विभो ! यज्जनचित्ततोयं, कुपाक्षिकाणां व्यूहः समूहस्तस्य वच एव अम्बुवाहस्तस्मात्, सपङ्कमासीत्, तद् भवद्वागेव कतकस्य कतकफलस्य अच्छं चूर्णं तत्प्रयोगतः, विमलं बभूव; जनचित्ततोयामित्यत्र एकत्वं जात्यपेक्षयेति ॥६९॥ ततो हेतोः, जिनोदितं सद्रूपं असद्रूपं च सर्वं वस्तु, हे तात ! तवाऽनुभावात् तदन्तस्तन्मध्ये, प्रतिबिम्बभावं उपैति—भगवदुक्तं वस्तुजातं भवद्वचसा सर्वं तेषां मनासि प्रतिभातिः कस्मिन् किमिव, पयोनिधौ-समुद्रे, अमृतांशोश्चन्द्रस्य, बिम्बमिवेत्यर्थः ॥ इति युग्मम् ॥७०॥

त्वयि प्रदीपे प्रकटप्रभावे

गतेऽस्तमस्तान्ध्यभरप्रसारे ।
अथातिमात्रं कलिकालदोषा-
गमात् तमो भूरि भविष्यतीह ॥ ७१ ॥

हे प्रभो ! प्रकटप्रभावे त्वयि प्रदीपे, अस्तङ्गते सति, कीदृशे, अस्त आन्ध्यभरप्रसारो येनेति, अथेह कलिकालदोषागमाद् भूरि तमो भविष्यतीति, यतः प्रदीपे विध्याते हि तमोऽतिमात्रं प्रसरत्येवेति ॥ ७१ ॥

मुदं मम त्वन्मुखपुण्डरीकं
निपीय या दृग्भ्रमरी बभार ।
अनन्यवृत्तेस्तदभावतोऽस्या
मरौ मराल्या इव किं रतिः स्यात् ? ॥७२॥

हे गुरो ! मम या दृग्भ्रमरी त्वन्मुखमेव पुण्डरीकं, निपीयेति पीत्वा, मुदं बभार; अथाऽस्यास्तदभावतः किं रतिः स्यात्? अपि तु न स्यादेवेत्यर्थः, यतोऽस्याः किं०, अनन्यवृत्तेर्न विद्यतेऽन्यस्मिन् अन्या वा वृत्तिर्यस्यास्तस्या इति। दृष्टान्तोऽत्र—यथा मरौ मरुस्थलीदेशे, मराल्या हंस्याः, किं रतिः स्यात्? इति॥७२॥

चिरं शुचिर्या मम दृक्चकोर-
द्वयी पपौ त्वद्वदनेन्दुबिम्बम् ।
अथेयमस्याः प्रलयं प्रयाता
कथं पिपासा बहुकालजन्मा ? ॥ ७३ ॥

हे नाथ ! या मम दृक्चकोरद्वयी त्वद्वदनेन्दुबिम्बं चिरं पपौ, अथ त्वद्विरहे, अस्या इयं बहुकालजन्मा पिपासा, कथं प्रलयं प्रयाता सा पिपासा कथमुपशमिष्यति ? इति ॥ ७३ ॥

पितस्तवाऽत्यद्भुतसंयमस्य
फलं स्फुरद् निर्वृतिरेव वच्मः ।
यदप्सरोभूसुखभूरभूस्त्वं
कलेर्बलीयः किल जृम्भितं तत् ॥ ७४ ॥

हे पितः! तवाऽत्यद्भुतो यः संयमस्तस्य तावकस्य चारित्रस्य, निर्वृतिर्मुक्तिरेव,स्फुरत् फलं वच्मः, तवैवंविधात्युग्रचारित्रस्याऽस्मिन्नेव भवे निर्वृतिसंभवात् ; परं यत् त्वं अप्सरोभूसुखभूः सुराङ्गनाजातसुखस्थानं, अभूः; तत्किलेति संभावये, कलेः कलिकालस्य,बलीयो बलिष्ठं, जृम्भितं विलसितमिति।।७४।।

तपो जपो ब्रह्म च हर्षकृद् मे
मुमुक्षुधर्मः सुभगः प्रियश्च ।
यदित्यभाणीर्भगवन्! मुधा तद्
विहाय सर्वं यदभूः स्वरिच्छुः ॥ ७५ ॥

हे भगवन्! मे मम, तप उपवासादि, जपो जापः, ब्रह्म च ज्ञानं, ब्रह्मचर्यं वा ; मोक्षो वा हर्षकृद् वर्तते, तथा मुमुक्षुधर्मः साधुधर्मः सुभगः प्रियश्च लगतीत्यादि यत् त्वं अभाणीर्भणन्नासीः, तत्सर्वं मुधा जातमेव, यतो हेतोः,त्वं स्वरिच्छुरभूः, यदि तव तपःप्रभृतीनि प्रियाणि स्युस्तदा दिवि कथं यासि? इति ॥ ७५ ॥

नवो भवच्छोचनदन्दशूको
दुरन्तसंतापविषापहारि ।
तवाभिधानं स्मरतां निहन्ति
यदाशु चैतन्यमशेषमेषः ॥ ७६ ॥

हे गुरो! भवतः शोचनदन्दशूकः शोकपन्नगः, नवो नवी-

नः, अस्ति; यद्व यतो हेतोः, दुरन्तो यः संतापस्तद्रूपविषापहारि, तवाऽभिधानं स्मरतां मादृशां विशां, चैतन्यं अशेषमप्येष निहन्ति, अपरो हि दन्दशूको विषापहारिमन्त्रस्मरणाच्चैतन्यं प्रकटयति नायं तथा, इति नव इति ॥ ७६ ॥

त्वया प्रदीपेन तमोहरेण

प्रकाशितं यज्जिनशासनौकः ।

न तत्र मिथ्यात्विभुजङ्गचक्षु-

र्हतिस्तदीयाहतये बभूव ॥ ७७ ॥

हे प्रभो ! तमोहरेण त्वया प्रदीपेन यज्जिनशासनमेव ओको गृहं, प्रकाशितं तत्र जिनशासनगृहे, मिथ्यात्विरूपो यो भुजङ्गस्तच्चक्षुर्हतिस्तन्नेत्रहतिः, तदीयाहतये तदुपघाताय, न बभूवेति ॥ ७७ ॥

यदीयहृद्यस्ति तवाभिधानं

मुनीन्द्र ! तेषां त्वमिहासि साक्षात् ।

निरीक्ष्य लेखाक्षरमत्र लोको

वयस्यमायातमिवाऽवगच्छेत् ॥ ७८ ॥

हे मुनीन्द्र ! यदीयहृदि तवाऽभिधानमस्ति ये त्वन्नाम स्मरन्तीति, तेषां त्वं साक्षादसि प्रत्यक्षोऽसि, हेतुरूपं वचनमाह-अत्र प्रत्यक्षे, लेखाक्षरं निरीक्ष्य लोको वयस्यं मित्रम्, आयातमिव अवगच्छेज्जानीयादिति ॥ ७८ ॥

इति द्वात्रिंशद्वृत्तैः खेदमेदुरविरहविलापवचांस्युपदर्श्याऽथ सौस्थ्यवचनानि निर्दिशति—

इति क्षरन्नक्षिजलं विलापा-

दवग्रहादब्द इवाऽम्बुवृष्टेः ।

समस्तसंघाग्रहतो व्यरंसीत्
सुधीरनूचानशिरोऽवतंसः ॥ ७९ ॥

इति पूर्वमपाश्रितविलापान्, समस्तसंघस्य चतुर्विधस्याग्रहतः, अनूचानशिरोवतंसः, किं०, सुधीः, अत एव व्यरंसीद् विरराम; यथाऽम्बुवृष्टेर्जलवर्षणात्, अब्दो मेघः, अवग्रहाद् विघ्नाद् मेघविघ्नरूपाद् वृष्टिरोधाद्, विरमतीति ॥ ७९ ॥

निवेदयन्नात्मसतत्त्वमेवं
तदा स शोकः शिथिलीबभूव ।
अहं महानप्यमहान् भवामि
सतां मनस्यद्रिरिवात्मदर्शे ॥ ८० ॥

तदा विलापविरामसमये, स शोक एवं आत्मसतत्त्वं निवेदयन्, अत्र इवेत्युत्प्रेक्षालक्षणं पदमध्याहार्यम्, शिथिलीबभूव, एवमिति किं०, अहं महानपि अमहान् भवामि, कस्मिन्, सतां मनसि महतां चेतसि, लघुर्भवामि यथात्मदर्शे दर्पणे, अद्रिर्गिरिः, इवेति दृष्टान्तः ॥ ८० ॥

अथ किं जातमित्याह—

गतेऽतिथित्वं त्रिदशाङ्गनानां
गुरावनूचानमियाय संपत् ।
तदोजसामस्तमिते सहस्र-
रुचाविवान्यैरहता हुताशम् ॥ ८१ ॥

गुरौ श्रीहीरे, त्रिदशाङ्गनानां देववधूनां, अतिथित्वं गते सति, तदोजसां तत्तेजसां, संपत् अनूचानमाचार्यं श्रीविजयसेनसूरिं, इयायाऽऽगता, इवेति दृष्टान्ते, यथा सहस्ररुचौ रवौ,

अस्तमिते सति, तत्तेजःश्रीः, अन्यैरहृता सती, हुताशं वह्निं, समेतीति ॥ ८१ ॥

गुरोरिताऽस्मिन् शुशुभेतरां श्री-
र्महस्विनी श्रीयुवराजि यूनि ।
किमत्र चित्रं वनिता नवीना
विभाति यत् पुंसि वयस्थवर्ये ? ॥ ८२ ॥

अस्मिन् गुरौ श्रीयुवराजि, पुनः, यूनि, इता प्राप्ता, गुरोः श्रीर्महस्विनी तेजस्वती, शुशुभेऽभात्, अत्रार्थे किं चित्रम्? यतो नवीना वनिता वयःस्थवर्ये पुरुषे, प्राप्ता सती, विभात्येवेति॥८२॥

निरस्य तं शोकमशेषमोको
मुदामुदासीनहृदां वरेण्यः ।
श्रियं बिभर्ति स्म समस्तपूर्व-
मुनीमघोनां महतीमघोनाम् ॥ ८३ ॥

तं शोकं अशेषं निरस्य निवार्य, अत एव मुदां हर्षाणां, ओको मन्दिरं, तथा, आसन्नशुगनिदानत्वादुदासीनहृदां वरेण्यः सूरिः, समस्तपूर्वमुनीमघोनां निःशेषप्राच्यमुनीन्द्राणां, मुनिरिव मुनीशब्दोऽप्यस्ति, श्रियं बिभर्ति स्म, कीदृशीं, महतीं, तथा अघेन पापेन ऊनां अघोनां निष्पापामिति ॥ ८३ ॥

अनेन गुर्वी तपगच्छधूर्वी
तरस्विना श्रीगुरुणेव दध्रे ।
हरेस्तनूजो हरिरेव यत् स्यात्
सतां प्रसूते न हि विस्मयं तत् ॥ ८४ ॥

अनेन सूरिणा, गुर्वी महीयसी, तपगच्छस्य धुरा श्रीगुरु-

णेव तरस्विना बलवता, दध्रे श्रीहीरसूरिणेव धृतेत्यर्थः, तत् सतां विस्मयं न प्रसूते, यद् यतः कारणात्, हरेः सिंहस्य, तनूजो हरिः सिंह एव स्यादिति ॥ ८४ ॥

यमाप्य नेतारमहार्यवीर्यं
न गच्छलक्ष्मीरितरेच्छुरासीत् ।
भुवः सुतैच्छद् न पतिं यदन्यं
विहाय रामं सतताऽनुकूलम् ॥ ८५ ॥

यं नेतारं स्वामिनं, आप्य प्राप्य, गच्छलक्ष्मीः इतरेच्छुर्नासीद् नापराभिलाषिणी जातेति, कथमिति, यं कथं, अहार्यं हर्तुमशक्यं वीर्यं बलं यस्येति तं, ईदृशं पतिं त्यक्त्वा कथमपरमिच्छेदिति, उक्तमर्थमुपनयेन समर्थयति—यत् सतताऽनुकूलं रामं दाशरथिं, पतिं विहाय त्यक्त्वा, भुवः सुता सीता, अन्यं नैच्छद् नावाञ्छदिति, युक्तोऽयमर्थो यत् अनन्यरमणीरते भर्तरि अनुकूले सति तद्भार्यापि नापरं वाञ्छति, तथा गच्छानुकूलमिममाचार्यं प्राप्य गच्छश्रीरप्यपरं न वाञ्छत्येवेत्यर्थः ॥८५॥

स्थितैतदंसे श्रियमेत्यसौ धू-
र्महीयसी मांसलतुङ्गवृत्ते ।
भगीरथांसेन विनेतरत्र
किमौचितीमञ्चति जह्नुकन्या? ॥ ८६ ॥

एतस्य सूरेरंसे स्कन्धे, स्थिताऽसौ धूस्तपागणभारोद्धरणरूपा धुरा, महीयसी महत्तरा, श्रियमेति, एतदंसे कथं, मांसलश्च तुङ्गश्च वृत्तश्चेति मांसलतुङ्गवृत्ते; इदं युक्तमेव, यतो भगीरथाख्यनृपस्य सगरचक्रधरपौत्रस्य, अंसेन विना जह्नुकन्या गङ्गा, किं इतरत्राऽपरस्थाने, औचितीमुचितत्वमञ्चति गच्छति? न गच्छतीत्यर्थः ॥८६॥

अथ वसन्ततिलकाभिधानेन च्छन्दसा श्रीसूरिराजराज्यं कविर्वर्णयति—

राज्ये विराजिकमले समभूद् मृषादृक्-
खद्योतपोतपटलं गतधाम कामम् ।
यस्योदयं श्रितवति द्युतिमालिनीव
प्रोल्लासिभासि दलिताखिलतामसौघे ॥८७॥

यस्य गुरो राज्ये द्युतिमालिनीव सूर्य इव, उदयं श्रितवति उदिते सति, कीदृशे राज्ये सूर्ये च, विराजिनी कमला ज्ञानादिश्रीर्यत्र तत्र, पक्षे विराजि कमलं यत्र यस्मादिति वा, पुनः, प्रोल्लासिभासि दीप्रमहसि, पुनः दलितस्तामसः पापसंबन्धी, पक्षे ध्वान्तसंबन्धी ओघो येन तत्र, मृषादृशो मिथ्यादृश एव खद्योतपोतास्तेषां पटलं मण्डलं, गतधाम निस्तेजः, समभूत्, मिथ्यात्ववतां हीनता जातेत्यर्थः ॥ ८७ ॥

यद्राज्यवारिमुचि काममितेऽपि नित्य-
मौन्नत्यमत्र मुदितव्रतभृन्मयूरे ।
चित्रं वितीर्णकमलेऽप्यजडं यदासीद्
विश्वं नितान्तपरितोषितविश्वविश्वे ॥८८॥

अत्र क्षेत्रे, यद्राज्यवारिमुचि यत्साम्राज्यमेघे, किं०, औन्नत्यं नित्यं इतेऽपि, पुनः किं०, मुदिता व्रतभृतः साधव एव मयूरा यस्मात् तस्मिन्, पुनः, वितीर्णा कमला येन, पक्षे कमलं जलं येन; तथापीदं चित्रमाश्चर्यं यद् विश्वं अजडं आसीद् न विद्यते जडो यस्मिन्निति, पक्षे डलयोरैक्याज्जलमिति, तथा च यद्राज्यमेघे पुनः किं०, परितोषिता विश्वविश्वा समस्तपृथ्वी येन तस्मिन्निति चित्रश्लेषालङ्कारः ॥ ८८ ॥

सद्बुद्धिसिद्धतटिनीतुहिनाचले श्री-
शालिन्यनीतिसहितेऽपि यदीयराज्ये ।
चित्रं न कस्यचिदभूदनयप्रवृत्ति-
र्भूच्छायसंस्थितिरिवोष्णमयूखबिम्बे ॥ ८९ ॥

यदीयराज्ये, कीदृशे, सद्बुद्धिरेव सिद्धतटिनी गङ्गा तस्यां तुहिनाचले हिमाद्रौ, तदुत्पत्तिहेतुत्वादिति, पुनः, श्रीशालिनीति स्पष्टं, इदं चित्रं यत् अनीतिसहितेऽपि कस्यचिदनयप्रवृत्ति-रन्यायस्य प्रवृत्तिर्नाऽभूत्, अनीतिसहिते हि अनयप्रवृत्तिः कथं न स्यात्? अपि तु स्यादेवेति, परमत्र कोऽर्थः? न ईतिः अनीतिः ईतेरभावस्तेन सहिते, यदीये राज्ये अनीत्यभावोऽप्यभूद्, यथा उष्णमयूखस्य रवेर्बिम्बे, भूच्छायस्य तमसः संस्थितिर्न स्यादिति दृष्टान्तश्लेषशब्दच्छलालङ्कारा इति ॥ ८९ ॥

जाता जिता यदबला अमुनैष नस्तद्
वेषोऽर्हति स्मितदृशां प्रविधाय वेषम् ।
यद्राज्य इत्यगुरदिव्यदृशः कुवादि-
व्राताः परं विषयमुद्धतकामचारम् ॥९०॥

अमुना सूरिणा जिताः सन्तो वयं यद् अबला निर्बलाः स्त्रियश्च जाताः, तत् ततः, नोऽस्माकं, एष वक्ष्यमाणवेषोऽर्हति योग्यतामेति, इति हेतोः, स्मितदृशां स्त्रीणां, वेषं प्रविधाय यद्राज्ये कुवादिव्राताः, किं०, अदिव्यदृशः असारमतयोऽसारदृशश्च, परं विषयं देशान्तरं, अगुः प्राप्ता इति, स्त्रीरूपा हि परं विषयं व्रज-न्त्येव, किं०, उद्धत उग्रः कामस्य चारः प्रचारो यस्मिन् । इति वीराद्भुतश्लेषाद्यलङ्कारसंकर इति ॥ ९० ॥

मा पश्यताद् यदितरः पितरं विना मां

मत्वा वृषाश्रयममर्त्यपतेस्तनूजः ।
यद्राज्यमात्मजनकप्रणयादिवैष
भेजेऽनिशं सुमनसां सुखमूलमुच्चैः ॥ ९१ ॥

पितरं विना इतरः कोऽपि मां मा पश्यतादित्यतोऽमर्त्यपतेस्तनूजो जयनामा, यद्राज्यपक्षे वृषः पुण्यं, पक्षे वृषा शक्र इति, यद्राज्यं वृषाश्रयं मत्वा आत्मजनकस्य प्रणयादिव भेजे, यद्राज्ये स्वजनकप्रणायिता कथमित्याह—यद्राज्यं किं०, सुमनसां सतां, पक्षे देवानां सुखस्य मूलम्। उत्प्रेक्षाश्लेषालङ्कारः ॥९१॥

यो हारतां दिगबलाहृदयेष्ववाप
श्यामात्मरन्ध्ररहितोऽपि गुणीह भूत्वा ।
नव्यो विभाति शुचिमौक्तिकराशिरुच्चै-
राज्यं यदीयमतिशायिमहस्समूहम् ॥ ९२ ॥

अतिशायिमहस्समूहं यद्राज्यं, नव्यः शुचिमौक्तिकराशिर्विभाति, नव्यत्वमेव भावयति—यः श्यामात्म यद् रन्ध्रं छिद्रं तद्रहितोऽपि, गुणी भूत्वा दिश एवाऽबला दिगबलास्तासां हृदयेषु, हारतामवाप, परो हि मौक्तिकराशिः श्यामरन्ध्रसहितो गुणी, हारपक्षे गुणस्तन्तुः, राज्यपक्षे गुणा ज्ञानादयस्तद्वान् भूत्वा हारत्वं प्राप्नोति नायं तथेति नव्यत्वम्, राज्यस्य हारोपमा तु चतुर्दिशां शोभाहेतुत्वादिति ॥ ९२ ॥

व्यापादनग्रहणभीतिदुरुक्तिहेतु-
रत्रापि यच्छबरधीवरभीरुसङ्गः ।
यद्राज्य इत्यसुखमस्ति वनेचरत्वे-
ऽप्युच्चैः कुवादिनिवहस्य मदावहस्य ॥९३॥

यद्राज्ये मदावहस्य कुवादिनिवहस्य वनेचरत्वेऽपि असुखमस्ति कोऽर्थः ? वनेचरत्वमरण्यचारित्वमेकोऽर्थः, वनेचरत्वं जलचारित्वं द्वितीयोऽर्थः, वनेचरत्वं गृहचारित्वमिति तृतीयोऽर्थः, अत्रार्थत्रयरूपे वनेचरत्वे शबरधीवरभीरुसङ्गः, कीदृशः, व्यापादनग्रहणभीतिदुरुक्तिहेतुरिति प्रत्येकं योजनीयं, यथा वनेचरत्वेऽरण्यचारित्वे शबरेभ्यो भिल्लेभ्यो व्यापादनभीर्मृत्युभीः, तथा वनेचरत्वे जलचारित्वे धीवरेभ्यो ग्रहणभीतिः, तथा वनेचरत्वे गृहचारित्वे भीरुभिः स्त्रीभिः कातरैश्च वा सङ्गो दुरुक्तिहेतुः कुवचनकारणमिति; यदीये राज्ये कुवादिनां वनेचरत्वेऽप्यसुखमस्तीति भावार्थः ॥ ९३ ॥

अस्माभिरत्र यदकारि तदेक एष-
चक्रे चतुर्दिगवनं सततं स्वराज्यात् ।
इत्यप्सरःपितृपयोधननायका य-
द्राज्यं विदन्त्यधिकमस्तसमस्तशत्रु ॥ ९४ ॥

यद्राज्यं इति हेतोः, अप्सरःपितृपयोधननायकाः क्रमेण शक्रयमवरुणकुबेराः, स्वराज्यात् अधिकं विदन्ति जानन्तीति, इति किमित्याह—अस्माभिश्चतुर्भिरपि संभूय यच्चतुर्दिशां अवनं रक्षणं, चतुर्दिगवनं अकारि कृतम्, तच्चतुर्दिगवनं "अवनं रक्षणे प्रीणने च" इत्यनेकार्थत्वात्, चतुर्दिशां अवनं प्रीणनं एष गुरुः, एक एव चक्रे इति हेतोर्माहात्म्यदर्शनादधिकं यद्राज्यमिति उत्प्रेक्ष्यते ॥ ९४ ॥

तन्वन् मनांसि जगतामतिविस्मितानि
यत्कीर्तिमौक्तिकततिष्वभवत् प्रवेशः ।
अच्छिद्रभृत्स्वपि गुणस्य नवीनराज्य-
क्षीराब्धिजासु सुमहोभरभासुरासु ॥ ९५ ॥

यत् कीर्तय एव मौक्तिकततयस्तासु गुणस्य प्रवेशोऽभवदित्यन्वयः, यत्कीर्तिमौक्तिकततिषु किं०, नवीनराज्यमेव क्षीराब्धिः क्षीरसमुद्रस्तस्माज्जायन्त इति तासु अन्यापि मुक्तालीसमुद्रजा भवतीति, तथाऽच्छिद्रभृत्सु कथं अपिर्विस्मये, यतः सच्छिद्रे एव प्रवेशः स्याद् न परमच्छिद्रे, ततो गुणस्य प्रवेशः किं कुर्वन् जगतां मनांसि अतिविस्मितानि तन्वन्, यत्कीर्तिः किं०, सुमहोभरेण भासुरासु एतावता यद्राज्ये गुणयुक्तैव कीर्तिरभूद् न तु दोषदुष्टेति भावः ॥ ९५ ॥

नैर्मल्यभृद्गुणगणैः कुमुदेन्दुकुन्द-
कर्पूरकम्बुविशदैः परिक्लृप्तयोच्चैः ।
यद्राज्यशोभनसिचापिहिता तथैषा
भूभामिनी नहि यथान्तरुदीक्ष्यतेऽस्याः ॥९६॥

यद्राज्यरूपशोभनसिचा, एषा भूभामिनी तथा पिहिता यथाऽस्या अन्तर्नह्युदीक्ष्यते एकत्र अन्तरवयवः, अन्यत्र अन्तर्मध्यं प्रान्तो वेति वास्तवार्थः, यद्राज्यसिचा कथं, नैर्मल्यभृद्गुणगणैः किं०, कुमुदेन्दुकुन्दकर्पूरकम्बुविशदैः परिक्लृप्तया रचितया, तथाऽन्यापि निर्मलगुणग्रथितवस्त्रेणाच्छादिता नान्तर्निरीक्ष्यत एवेति ॥ ९६ ॥

पञ्चत्वमाप स कुवादिगृहे तदीया-
मर्षाद् वृषः स्थितिमियाय यदीयराज्ये ।
श्रद्धावतां मतिमतां चतुरः प्रकारा-
नाधाय धामसु सदा भुवि दानमुख्यान् ॥९७॥

यदीयराज्ये श्रद्धावतां मतिमतां धामसु गृहेषु, दानमुख्यान् दानादिकांश्चतुरः प्रकारानाधाय यो वृषो धर्मः, स्थितिमियाय प्राप्तः, उत्प्रेक्ष्यते तदीयामर्षात् चतुष्प्रकारप्राप्तवृषाऽमर्षादुत

श्रद्धावदमर्षात्, कुवादिगृहे स वृषः पञ्चत्वमाप मृत इति, कुवादिनां गृहात् पुण्यं गतमिति तत्त्वम् ॥ ९७ ॥

माहात्म्यमञ्जुलमहाव्रतिचित्तवृत्ति-
मुल्लासिनीं वितनुतेऽनिशमुत्तमायाः ।
यद्राज्यनीतिरनघा रसराजरक्ता
भातीत्यनन्ततटिनीव पवित्रताढ्या ॥ ९८ ॥

इति हेतोर्यद्राज्यनीतिः अनन्ततटिनीव गङ्गेव, भातीति, कीदृशी, रसराजे शान्तरसे रक्ता, गङ्गापक्षे रसराजः समुद्रस्तत्राऽपरं स्पष्टं, इतीति कुत इत्याह—या राज्यनीतिर्माहात्म्यमञ्जुला-महाव्रतिनो यतयस्तेषां चित्तवृत्तिमुल्लासिनीं वितनुते, पक्षे महाव्रती महादेवः; शेषं सुगमम् ॥ ९८ ॥

सद्धर्मतर्णकमसूत विनैव गर्भं
याऽदाद् यशःशुचिपयश्च कुचैर्विना या ।
याति स्म याऽतिरुचिरं चरणोज्झितापि
यद्राज्यनीतिरजनीति जने नवा गौः ॥९९॥

यद्राज्यनीतिः, इति हेतोः, नवा नूतना गौः, अजनि; इतीति किं०, या गर्भं विनैव सद्धर्म एव तर्णको वत्सस्तमसूत, अपरा गौर्गर्भधारणादिना तर्णकादि प्रसूते, तथा या यश एव शुचिपयो दुग्धं कुचैर्विनाऽदात्, परा हि क्षीरं कुचैरेव दत्ते, तथा या चरणोज्झितापि कलहोज्झितापि, याति स्म शब्दच्छलाच्चरणोज्झितापीति चित्रम्, अन्या च चरणैरेव चलतीति नवीनत्वम् ॥९९॥

शाक्री सभेव विबुधस्थितिरुत्तमास्या
कान्तेव देवतटिनीव महाव्रतीहा ।
सिन्धोः सुतेव पुरुषोत्तमदत्तहर्षा

विभ्राजते जगति यद्गुरुराज्यनीतिः॥१००॥

यद्गुरुराज्यनीतिर्विभ्राजते, कथं शक्रस्येयं शाक्री सभेव कीदृशी, विबुधानां पण्डितानां, पक्षे देवानां स्थितिर्यस्यां सा, तथा कान्तेव उत्तमं आस्यं मुखं यस्याः सा, पक्षे उत्तमानां आस्या स्थितिर्यस्यां सा, तथा देवतटिनीव महाव्रतीहेति स्पष्टम् ; तथा सिन्धोः सुतेव पुरुषोत्तमानां दत्तो हर्षो यया, पक्षे पुरुषोत्तमस्य हरेरिति ॥ १०० ॥

यः प्राप्य हीरविजयव्रतिराजराज्यं
शोभां बिभर्ति भृशमस्ततमःसमूहः ।
स्तोमैर्गवां कुवलयोत्सवहेतुरुच्चैः
पक्षं शितीतरमिवौषधिजीवितेशः ॥ १०१ ॥

यः श्रीसूरिः श्रीहीरविजयव्रतिराजस्य राज्यं प्राप्य शोभां बिभर्ति,कः कमिव,शितीतरं शुक्लं पक्षं प्राप्य औषधिजीवितेशश्चन्द्र इव, सूरिश्चन्द्रश्च किं०, अस्तः तमसः पापस्य अन्धकारस्य च समूहो येन सः, तथा गवां वाचां किरणानां च स्तोमैर्वृन्दैः कुवलयस्य भूवलयस्य कुवलयानां चोत्पलानां उत्सवहेतुरिति; शेषं सुगमम् ॥ १०१ ॥

जज्ञे राज्ञि नवे प्रभौ व्रतवतां सद्योऽमृतध्वंसकृद्
नोद्वेगस्तमसो भियामयमभूद् न स्फूर्तिमान् विस्मयः।
एतच्चित्रमतीव विस्तरवतीं वार्त्तां वरां गाहते
यत् सङ्गं सकलाः कला विदधिरे कामोत्सवे हेतवः॥१०२॥

व्रतवतां मुनीनां प्रभौ अस्मिन्नव्ये राज्ञि सति, तमसो राहोः पापस्य च, भियां उद्वेगो न जज्ञे, कीदृशः, अमृतस्य मोक्षस्य, पक्षे सुधाया ध्वंसकृत् अयं न विस्मयोऽस्तीति, कथं नव्ये

राज्ञि चन्द्रे तमसो राहोर्भियामुद्वेगो न भवत्येव, दिने दिने वृद्धिमत्त्वादिति, परं एतच्चित्रं अतीव विस्तरवतीं वार्त्तां गाहते, एतदिति किं०, यन्नवे राज्ञि सकलाः कलाः सङ्गं विदधिरे, किं०, कामोत्सवे हेतवः कारणमिति नवं हि राजानं चन्द्रं कला युगपत् सर्वा अपि न गच्छन्ति कलाद्वयशेषभृत्त्वादित्यद्भुतम् ॥१०२॥

अभूदस्मिन् लक्ष्मीरतिरतिकरी हीरविजय-
व्रतीन्द्रस्यैश्वर्यं श्रितवति गुरौ गौरवगृहे ।
सहस्रांशोरुस्रोत्करमिव वरं दीपकलिका-
ङ्कुरे स्फाराकारे कलयति जनोल्लासजननी ॥१०३॥

अस्मिन् श्रीविजयसेनसूरौ, श्रीहीरविजयव्रतीन्द्रस्यैश्वर्यं प्रभुत्वं, श्रितवति लक्ष्मीर्जिनशासनप्रभुता रूपा, अतिरतिकरी, अभूद् जातेति, इवेति दृष्टान्ते, यथा सहस्रांशोः सूर्यस्य, उस्रोत्करं रुचिभरं, दीपकलिकाङ्कुरे कलयति सति, लक्ष्मीर्भवति, कीदृशी, जनोल्लासजननीति विशदम्, अत्र सर्गे उपेन्द्रवज्राख्यं छन्दः, अन्त्ययोर्वृत्तयोः प्रथमे शार्दूलविक्रीडितं द्वितीये शिखरिणी चेति, तल्लक्षणं तु प्रागुक्तमेव ॥ १०३ ॥

• • • • • • • • • • • • • • • • • • • • • • • • • •

इतीति सर्वमवदातम् ।

इति सकलसुविहितसभासार्वभौमसमानपण्डितमण्डलीमौलिमौलीयमानपण्डितश्रीकमलविजयगणिशिष्यमुख्यपण्डितपुरन्दरप्रख्यपण्डितश्रीविद्याविजयगणिविनयवाचकश्रीगुणविजयगणिविरचितायां विजयप्रदीपिकाभिधानधारिकायां सुखावबोधिकायां श्रीविजयप्रशस्तिमहाकाव्यटीकायां चतुर्दशः सर्गोऽर्थतः समर्थितः ॥

अर्हम्

# अथ पञ्चदशः सर्गः ।



अथ पञ्चदशः सर्गः प्रारभ्यते–

अथ गुरुस्तपगच्छपरम्परा-
पुटकिनीतुहिनेतरदीधितिः ।
विहरति स्म शुभेऽहनि पत्तना-
दतमसं विदधद् वसुधामिमाम् ॥ १ ॥

अथ भट्टारकत्वप्राप्तौ, गुरुः श्रीविजयसेनसूरिः, किं०, तपगच्छपरम्परैव पुटकिनी पद्मिनी तस्यां तुहिनेतरदीधितिरुष्णरश्मिः सूर्य इति यावत्, किं कुर्वन्, इमां वसुधां अतमसं सोद्द्योतां निष्पापां वा, विदधत् शुभेऽहनि पत्तनाद् विहरति स्मेत्यर्थः ॥ १ ॥

अथ त्रिभिर्वृत्तैरर्थं समर्थयति–

रय इव द्युसदां सरितो गवां
समुदयैः सुखिताखिलभूतलः ।
कृतमहाव्रतिचित्तसमुन्नतिः
सुमनसां प्रचुरप्रमदैकभूः ॥ २ ॥

स विचरन् क्रमतो वसुधावधू-
तिलकतुल्यमतुल्यमहोदयम् ।
क्षितिषु तीर्थमिति प्रिययाह्वया
प्रथितमुत्तमसंपदभङ्गुरम् ॥ ३ ॥

नगरमब्धितरङ्गविराजितं
सकलमङ्गलमञ्जुलमागमत् ।
तदतिलङ्कमकार्यजडादरं
पुरमसौ विशति स्म गुरूत्तमः ॥ ४ ॥

द्युसदां सरितो गङ्गायाः, रयः प्रवाह इव, गवां वाचां, समुदयैः, पक्षे गवां पाथसां, समुदयैः, सुखितं अखिलं भूतलं येन सः, कृता महाव्रतिनो महाव्रतिनां च चित्तसमुन्नतिर्येन सः, पुनः, सुमनसां सतां सुराणां च, प्रचुरप्रमदस्यैकं भूः स्थानम् ॥२॥ स क्रमतो विचरन् वसुधावध्वास्तिलकतुल्यं, पुनः, अतुल्यो महोदयो यत्रेति क्षितिषु तीर्थमिति स्तम्भतीर्थमिति, प्रियया आह्वया रुचिरया संज्ञया, प्रथितं, पुनः, उत्तमा या संपत् तया अभङ्गुरमविनाशि ॥ ३ ॥ गुरूत्तमः श्रीसूरिः, तन्नगरं स्तम्भतीर्थाख्यं, किं०, अब्धेः समुद्रस्य तरङ्गैर्विराजितं, पुनः, सकलमङ्गलैर्मञ्जुलं, पुनः, कार्ये जडाः कार्यजडा मूर्खा न विद्यते कार्यजडानां आदरो यत्र तत् अकार्यजडादरं, अत एव अतिलङ्कं अतिक्रान्ता लङ्का येनेति तत्, लङ्का हि कानां नीराणां अर्यः पतिः कार्यः समुद्रस्तस्य, जले न विद्यते आदरो यस्याः सा ईदृशी न स्यात्, विशति स्मेति प्राविशत् ॥ इति त्रयाणां व्याख्या ॥ ४ ॥

भवदतुच्छमहोत्सवपेशलं
नगरमेत्य तदद्भुतमङ्गलम् ।
प्रविदधे बृहतीं स्थितिमाग्रहाद्
गृहवतां स इहैव गुरुस्तदा ॥ ५ ॥

भवन्तो येऽतुच्छा महोत्सवास्तैः पेशलं, तन्नगरं तीर्थाख्यं,

अद्भुतमङ्गलं यथा स्यात्तथा, एत्यागत्य, गृहवतां अगारिणां, आग्रहाद् बृहतीं स्थितिं ज्येष्ठास्थितिं, प्रविदधे ॥ ५ ॥

अथ च तत्र पुरे वसतः प्रभो-
रजनि लाभ उदारमहा महान् ।
कुसुमकाण्डभिदः सुहृदो दिगो-
कसि तमिस्रारिपोरिव तस्थुषः ॥ ६ ॥

अथ चतुर्मासस्थित्या, तत्र प्रभोर्वसतः सतः, उदारं महस्तेजः उत्सवो वा यत्र सः, लाभो महान् अजनि जात इति, यथा तमिस्रारिपो रवेः, कुसुमकाण्डभिदः स्मरारेः, सुहृदो धनदस्य, दिगोकसि उत्तरस्यां, तस्थुषः स्थितवत इति उत्तरायणे हि सूर्यस्य तेजोवृद्धिः स्यादेवेति ॥ ६ ॥

पुरि च तत्र विधाय बहुस्थितिं
सततसुस्थितधर्मपथस्थितः ।
गुरुवरो विजहार ततः पुरात्
प्रमुदिताखिललोकपरम्परात् ॥ ७ ॥

तत्र पुरे, बहुस्थितिं विधाय बहून् मासान् स्थित्वा, गुरुवरः किं०, सततं सुस्थिते धर्मपथे मर्यादारूपे स्थितः, ततः पुरात् किं०, गुरुस्थितेरेव प्रमुदिताऽखिललोकपरम्परात्, विजहार विहृतवानिति ॥ ७ ॥

अथ च निर्जरनिर्झरिणीरया-
दतिपवित्रतया प्रथितैः सदा ।
भुवमिमां परितः परिपावयन्
पदपयोरुहपांसुभिरासरात् ॥ ८ ॥

सुमनसां प्रियवृत्तिरुदारदृक्
त्रिदशसाल इवेहितदायकः ।
क्रमत आर्यतमक्रमविक्रमो-
ऽकमिपुरं नगरं गुरुराययौ ॥ ९ ॥

अथ आप्तेषु राड् मुख्यः, किं कुर्वन् , पदपयोरुहपांसुभिः क्रमकमलरेणुभिः, किं०, निर्जरनिर्झरिणी गङ्गा तस्या स्यात्प्रवाहादतिपवित्रतया प्रथितैः ख्यातैः, भुवं पृथ्वीं, पावयन् पवित्रयन् ॥८॥ गुरुः किं०, सुमनसां प्रिया वृत्तिर्यस्य सः, त्रिदशसालः कल्पद्रुरिव, ईहितदायकः, पुनः, आर्यतमः प्रशस्यतमः क्रमविक्रमः परम्परासामर्थ्यं यस्य सः,क्रमतोऽनुक्रमात्,अकमिपुरं नगरं अहम्मदावादं नगरं, आययौ ॥ इति युग्मव्याख्या ॥९॥

शुशुभिरे कलसाः किल काञ्चनाः
प्रतिपथं पुरि तत्र महस्विनः ।
प्रचुररूपभृदर्क इवाभ्यगाद्
गुरुमुखात्मवयस्य दिदृक्षया ॥ १० ॥

तत्र तस्यां पुरि, सूरेः प्रवेशावसरे काञ्चनाः कलसाः प्रतिपथं शुशुभिरेऽशोभन्तेति । उत्प्रेक्ष्यते–गुरुमुख एव आत्मवयस्यः पद्मः, अथवा मुखस्यापि सूर्योपमासद्भावाद् गुरुमुख एव आत्मवयस्यो बन्धुस्तस्य, दिदृक्षया प्रचुररूपभृद् बहुरूपवान् , अर्कः सूर्य इव, अभ्यगात् प्राप्तः, अत एव कलसा महस्विनस्तेजस्विन इति ॥ १० ॥

विविधवर्णधरैर्वरतोरणैः
श्रियमवाप पुरं तदनर्गलाम् ।
जलधरस्य समागमनक्षणे

नभ इव त्रिदशाधिपधन्वभिः ॥ ११ ॥

तत् पुरं तदा विविधवर्णैर्वरतोरणैः श्रियं अनर्गलां अवाप, किमिव, नभ इव, यथा नभो जलधरस्यागमनावसरे त्रिदशाऽधिपधन्वभिरिन्द्रधनुर्भिरिति ॥ ११ ॥

स्मितदृशां मुदभूद् धवलध्वनिः

पुरि तदाऽत्र महोत्सवकारणम् ।

वनभुवीव वनप्रिययोषितां

मदभृतामतुलं कलकूजितम् ॥ १२ ॥

तत्प्रवेशोत्सवेऽत्र पुरि महोत्सवकारणं स्मितदृशां स्त्रीणां, धवलध्वनिः उदभूत् प्रकटित इति, यथा वनप्रिययोषितां कोकिलानां, कलकूजितं वनभूमौ वसन्तागमे भवतीति ॥ १२ ॥

श्रियमधात् पुरि तत्र मृगीदृशां

ततिरतीव तदाभरणाद्भुता ।

गुरुघनोदयदर्शनकाङ्क्षिणी

फणिभुजां सरसीजदृशामिव ॥ १३ ॥

तदा तत्प्रवेशोत्सवे, तत्र पुरि मृगीदृशां स्त्रीणां ततिः, अतीव श्रियं शोभां, अधात्; किं०, आभरणाद्भुता, पुनः, गुरोर्यो घनोदयस्तद्दर्शनस्य काङ्क्षिणी, यथा फणिभुजां मयूराणां, सरसीजदृशां स्त्रीणां मयूरीणां, ततिर्गुरुर्महान् यो घनोदयो मेघोदयस्तद्दर्शनकाङ्क्षिणी, श्रियं उत्साहरूपां, धत्ते तथेति ॥१३॥

विविधवर्णधरध्वजधोरणी

पुरि च तत्र विभातितमां तदा ।

वरदुकूलवती ततिरागता

गुरुमिवेक्षितुमप्सरसामियम् ॥ १४ ॥

तदा गुर्वागमक्षणे, तत्र पुरि विविधवर्णधरध्वजानां धोरणी श्रेणी, विभातितमां; उत्प्रेक्ष्यते–अप्सरसां ततिर्गुरुमीक्षितुमागतेव, कीदृशी, वरदुकूलवती प्रधानपट्टकूलपरिधाना सुराङ्गना एता इवेति । इति गुरुप्रवेशोत्सववर्णनम् ॥ १४ ॥

रजतकाञ्चनमुख्यधनार्पण-

प्रमुदितार्थिभिरास्तिकहस्तिभिः ।

भृतममर्त्यनगैरिव नन्दनं

विबुधरम्यमुदारवृषादरम् ॥ १५ ॥

इति मनोज्ञमहोर्मिपरम्परं

पुरमिदं पुरुषोत्तमवल्लभम् ।

गुरुरघौघहरो हरशेखरा-

रय इव प्रविवेश पयोनिधिम् ॥ १६ ॥

अनयोर्द्वयोर्व्याख्या यथा–इति वर्णितरीत्या, मनोज्ञा ये महा उत्सवास्तद्रूपा ये ऊर्मयो वीचयस्तेषां परम्परा यस्मिन् तत्, पुनः, पुरुषोत्तमैर्नरोत्तमैः, पक्षे पुरुषोत्तमस्य विष्णोः प्रियं अत एव पयोनिधिं, हरशेखरारय इव गङ्गाप्रवाह इव, गुरुः किं०, अघौघहर इति द्वयोर्विशेषणम्, इदं पुरं पूर्वोक्ताढं, प्रविवेशाऽविशत्; पुरं किं०, अमर्त्यनगैः कल्पवृक्षैः, नन्दनवनमिव आस्तिकहस्तिभिः श्राद्धवृद्धैः, भृतं, कीदृशैः, रजतकाञ्चनप्रमुखवित्तार्पणेन प्रमुदिता-अर्थिनो यैस्तैः, अतस्तेषां कल्पतरूपमेति, नन्दनं नगरं च किं०, विबुधैः पण्डितैः देवैश्च रम्यम्, अग्रगं स्पष्टम् ॥ इति युग्मव्याख्या ॥ १५ ॥ १६ ॥

संमणिभिः कनकैरनगारराड्

गुरुरपूजि गृहस्थमतङ्गजैः ।
अमरभूमिरुहः कुसुमोत्करै-
र्मखभुजामधिभूरिव भूरिभिः ॥ १७ ॥

स नगरमागतो गुरुः, अनगारराड् मुनीन्द्रः, गृहस्थेषु मतङ्गजा हस्तिनस्तैः, समणिभिः सरत्नैः, कनकैः स्वर्णटङ्ककैः, अपूजि पूजितः, इवेत्युपनये, यथा मखभुजां सुराणां, अधिभूः स्वामी शक्रः, अमरभूमिरुहः सुरद्रोः, कुसुमोत्करैः पूज्यत इति ॥१७॥

महसि तत्र तदा गृहमेधिभि-
र्वितरणं विदधेऽर्थिषु संपदाम् ।
अनशदाशु यथा सहरेर्वनाद्
मृग इवाऽधनता तदगारतः ॥ १८ ॥

तत्र महसि गृहमेधिभिर्गृहस्थैः, अर्थिषु संपदां वितरणं तथा विदधे मार्गणेभ्यः स्वर्णादि तथा दत्तं, यथा तदगारतस्तद्गेहात्, अधनता, दारिद्र्यं, आशु शीघ्रं, अनशद् नष्टेति, यथा सहरेः ससिंहात्, वनाद् मृगो नश्यति तथेति ॥ १८ ॥

स्थितिमितेऽथ गुरौ सुखमासमा-
सदृगभूत् सुषमासुषमास्पदम् ।
शरदपारसुखा पुरि तत्र सा
भवति शर्म पदे यदमूदृशाम् ॥ १९ ॥

तत्र पुरि गुरौ स्थितिमिते स्थिते सति, सा शरत् सुषमासमासदृक् अभूत् तद्वर्षे अतिसुखवज्जातं सर्वेषां लोकानामिति, तत एव शरत्, कथं०, सुषमायाः परमशोभायाः सुषमं रुचिरमास्पदम्, तथाऽपारं सुखं यत्र सा, यद् यतः, अमूदृशां महतां पदे शर्म भवत्येवेति ॥ १९ ॥

सुकृतदेशनया सुगुरोस्तदा
सुकृतधीर्जनताऽजनि भूयसी ।
प्रसरता मरुता मलयोद्भुवा
फलदलाभिमुखेव वनावली ॥ २० ॥

तदा तत्रस्थस्य सुगुरोः सुकृतदेशनया भूयसी जनता जनसंहतिः, सुकृते धर्मे धीर्यस्याः सा, अजनि जाता, यथा मलयोद्भुवा मरुता मलयाचलजेन पवनेन, प्रसरता सता, वनावली फलदलाभिमुखी भवति ॥ २० ॥

बहुरभूत् पुरि तत्र धनव्ययः
सुकृतकर्मणि मुक्तिफलस्तदा ।
सलिलवृष्टिरिवातुलतापहृत्
क्षितितले मधुरा मुदिरागमे ॥ २१ ॥

तदा गुरोस्तत्र स्थितौ सत्यां, तत्र सुकृतकर्मणि, धनव्ययो बहुरभूत्, इवेति दृष्टान्ते, यथा मुदिरागमे मेघागमे, सलिलवृष्टिः किं०, अतुलतापहृद् भवतीति ॥ २१ ॥

सुगुरुचारुवचोभिरुदञ्चितः
सुकृतभूमिषु वप्तुमनाः श्रियः ।
भविकभाजनभोटकसंज्ञकः
सशिवसाधुशिवान्वयचन्द्रमाः ॥ २२ ॥
निजभुजार्जितसुन्दरसंपदां
पदमहम्मदपूर्वपुरास्थितिः ।
बलिषु शालिषु शीलिषु चाग्रणी-

रिह विभाति भुवस्तलभूषणम् ॥ २३ ॥

अनयोर्व्याख्या–सुगुरोः चारुवचोभिः उदञ्चितो रोमाङ्कुरित उत्साहित इति, अत एव सुकृतभूमिषु धर्मस्थानेषु श्रियो वप्तुकाम इति, पुनः किं०, भविकस्य मङ्गलस्य भाजनम्, एवंभूतो भोटकसंज्ञः साधुभोटाख्यः श्राद्धः, पुनः किं०, सशिवः सकुशलो यः साधुः शिवस्तत्पिता तस्याऽन्वये चन्द्रमाः ॥ २२ ॥ पुनः किं०, निजभुजाभ्यां अर्जिता याः सुन्दराः संपदस्तासां पदं, पुनः, अहम्मदपूर्वं यत् पुरं अहम्मदपुरं तत्र स्थितिर्यस्येत्यहम्मदपुरवास्तव्य इति, तथा बलिषु बलवत्सु, शालिषु शोभनेषु, शीलिषु शीलवत्सु, अग्रणीर्मुख्यः ; अत एव भुवस्तलभूषणं, इहावसरे, विभातीति ॥ इति युग्मव्याख्या ॥ २३ ॥

अथ च तेन महेभ्यबिडौजसा

सुकृतिना कृतिनाऽऽशु विधापितम् ।

घनधनव्ययचारुमहोत्सवै-

र्यतिपतिर्जिनबिम्बमतिष्ठिपत् ॥ २४ ॥

अथेति लाग्निकदिवसे माघशुक्लपञ्चम्यां, तेन सा० भोटाख्येन, किं०, महेभ्येषु बिडौजसा इन्द्रेण, पुनः, सुकृतिना, पुनः, कृतिना, विधापितं जिनबिम्बं घनधनव्ययचारुभिर्महोत्सवैर्यतिपतिर्गुरुः, अतिष्ठिपत्प्रतिष्ठाविषयीकुरुते स्मेति ॥ २४ ॥

कुमतिकुञ्जरकेसरिणस्तदा

विबुधलब्धिपुरस्सरसागराः ।

विदधिरेऽथ तपस्विपुरन्दरै-

र्गुणगणप्रवरैः खलु वाचकाः ॥ २५ ॥

तदा सा०भोटाख्यव्यवहारिप्रतिष्ठादिने, गुणगणप्रवरैस्त-

पश्चिपुरन्दरैः सूरिभिः, विबुधलब्धिपुरस्सरसागराः पं०लब्धि-सागराः, वाचका विदधिरे, यतस्ते किं०, कुमतिकुञ्जरकेसरिण- इति, तेषां संघाग्रहात् श्रीगुरुभिरुपाध्यायपदं प्रदत्तमिति ॥२५॥

अथाहम्मदावादे प्रतिष्ठामाह—

पुरवरेऽत्र महेभ्यवछाभिधो

जवहरीर्हरिमन्त्रिसमो धिया ।

श्रियमियर्ति य आर्यमनोरथो

जिनवचस्सरसीरुहषट्पदः ॥ २६ ॥

अथाऽस्मिन् पुरवरेऽकमिपुरे, महेभ्यः वछाभिधो जवहरीः, श्रियं इयर्तीत्यन्वयः, कथं०, यो व्यवहारी आर्या मनोरथा यस्येति, पुनः किं०, जिनवच एव सरसीरुहं तत्र षट्पदो भृङ्गः, तत एव हरिमन्त्री बृहस्पतिस्तत्समो धियास्तीति ॥ २६ ॥

अथ च तेन विधापितमुत्तमं

जिनपबिम्बमघाब्धिघटोद्भवम् ।

सकलसूरिशिरोमणितां गतो

गुरुरुरूत्सवपूर्वमतिष्ठिपत् ॥ २७ ॥

तेन जवहरिवच्छाभिधानेन, विधापितं जिनपबिम्बं, किं०, अघाब्धौ पापपाथोधौ घटोद्भवोऽगस्तिस्तं, गुरुः किं०, सकलसू-रिषु शिरोमणितां गतः प्राप्तः श्रीविजयसेनसूरिः, उरूत्सवपूर्वं अतिष्ठिपत् ॥ २७ ॥

इतरदप्यनगारपुरन्दराः

सुकृतकृत्यमकृत्यगजाङ्कुशाः ।

विदधिरे बहु तत्र पुरे सुखं

दिनसमृद्धिमिवाम्बरकेतवः ॥ २८ ॥

तत्राकमिपुरे, अनगारपुरन्दराः श्रीगुरवः, इतरदपि नाना-विधं, सुकृतकृत्यं पञ्चमहाव्रताणुव्रतब्रह्मव्रतारोपणादि, विद्-धिरे; गुरवः किं०, अकृत्यरूपगजस्य अङ्कुशाः, यथा अम्बरके-तवः पूज्यत्वाद् बहुत्वं सूर्या दिनसमृद्धिं विदधत इति ॥२८॥

सुखमशेषमखण्डलविक्रमा
बुभुजिरे पुरि तत्र गुरूत्तमाः ।
प्रचुरपौरपयोजपरम्परा-
प्रणयपूरणपङ्कजिनीप्रियाः ॥ २९ ॥

तत्र पुरि गुरूत्तमाः किं०, अखण्डलविक्रमाः केनाप्यखण्डि-तपराक्रमाः, पुनः, प्रचुरेति स्पष्टम्, अशेषं सुखं बुभुजिरे सदैव सुखिनोऽभूवन्निति ॥ २९ ॥

गुरुमुदीक्ष्य सुपुण्यपयोनिधि-
प्रणयदं च महाव्रतिवल्लभम् ।
मुदमियाय जनोऽत्र महीयसीं
हिमरुचिं चलचञ्चुरिवोच्चकैः ॥ ३० ॥

अत्र नगरे गुरुमुदीक्ष्य दृष्ट्वा, जनो महीयसीं मुदं, इयाय, कः कमिव, चञ्चलचञ्चुश्चकोरो यथा हिमरुचिं चन्द्रं, गुरुं च चन्द्रं च किं०,सुपुण्यरूपः पयोनिधिः समुद्रस्तस्य प्रणयदं प्रीतिप्रदमिति, परोऽपि पयोधिप्रणयप्रदो भवति, तथा महाव्रतिनां वल्लभं, पक्षे महाव्रतिनो हरस्य तेन मूर्ध्नि धृतत्वादिति ॥ ३० ॥

द्रुतविलम्बितच्छन्दसा सर्गं निर्माय हरिण्योपसंहरति—

श्रितवति गुरौ चङ्गं द्रङ्गं तमुल्वणदोर्बले
दृगजनितमां द्राग् निस्तेजाः कुपाक्षिकभूस्पृशाम् ।

गगनमनघं पत्यौ भासां सभास्यधितष्ठुषि
प्रभवति महः काकारीणां कियान् यदघात्मनाम्?॥३१॥

गुरौ तं चङ्गं द्रङ्गं श्रितवति सति, कृपाक्षिका ये भूस्पृशः प्राणिनस्तेषां, दृग् दृष्टिः, द्राग् निस्तेजा अजनि जातेति, गुरौ किं०, उल्वणं दोर्बलं यस्येति, यद् यतो हेतोः, भासां पत्यौ रवौ, गगनं अधितष्ठुषि स्थिते, अघात्मनां पापिनां, काकारीणां घूकानां, कियान् मह उत्सवः, प्रभवति? अपि तु न भवतीत्यर्थ इति ॥३१॥

• • • • • • • • • • • • • • • • • • • • • • • • •

इतीति कण्ठ्यम् ॥

इति सकलसुविहितसभासार्वभौमसमानपण्डितमण्डलीमौलिमौलीयमानपण्डितश्रीकमलविजयगणिसुशिष्यमुख्यपण्डितपुरन्दरप्रख्यपण्डितश्रीविद्याविजयगणिविनेयवाचकश्रीगुणविजयगणिविरचितायां श्रीविजयप्रदीपिकाभिधानधारिकायां सुखावबोधिकायां श्रीविजयप्रशस्तिमहाकाव्यटीकायां पञ्चदशः सर्गोऽर्थतः समर्थितः ॥



अर्हम्

## अथ षोडशः सर्गः ।



अथ षोडशः सर्गः समारभ्यते—

श्रीमत्यत्र पुरे पुरन्दरपुरप्रख्ये सुपर्वादरे
विश्वोल्लासकरैर्घनैरिव महै रम्यं चतुर्मासकम् ।
कृत्वा कान्तसरस्वतीपरिचयः प्रान्तेऽथ वर्षास्थितेः

प्रापत् कृष्णपुरं मराल इव भूलोकं सपद्मं प्रभुः॥१॥

अत्राऽऽकमिपुरे पुरे, श्रीमति शोभावति, चतुर्मासकं कृत्वा वर्षास्थितेः प्रान्ते कृष्णपुरं कालूपुरं नाम शाखापुरं, प्रभुः प्रापत्; पुरे किं०, पुरन्दरपुरप्रख्ये स्वर्गतुल्ये, अतः सुपर्वादरे सु-शोभनानां पर्वणामुत्सवानामादरो यत्रेति, पक्षे सुपर्वाणो देवास्तेषामादरो यस्मिन्निति, चतुर्मासकं किं०, घनैर्मेघैरिव महै रम्यं, मेघैर्महैश्च किं०, विश्वोल्लासकरैरित्युभयोस्तुल्यत्वं, प्रभुः किं०, कान्तः सरस्वत्याः श्रुतदेव्या अर्थात् सर्वज्ञवाचां परिचयो यस्येति, क इव, मराल-इव, तत्पक्षे कान्तः सरस्वत्या नद्याः परिचयोऽथवा सरस्वत्याः वाग्देव्या वाहनत्वात् परिचयो यस्येति, यथा मरालो वर्षास्थितेः प्रान्ते भूलोकं प्राप्नोति, कृष्णपुरं भूलोकं च कथं०, सपद्मं सह पद्मया वर्तते यत् तत् सपद्मं, पक्षे सपद्मं सकमलमिति ॥ १ ॥

तत्र चित्रकृत् किं जातमित्याह—

सोऽश्रौषीद् नगरान्तरस्ति भगवान् श्रीपार्श्वचिन्तामणिः
प्रौढे ढींकुकपाटके विनिहितस्तत्रैकदेति स्थितः ।
जज्ञे स्वप्ननिमित्तशस्तशकुनैः पूरैरपां भूरिभि-
र्वृष्टिं वारिमुचामिवात्यविरलां सम्यक् च तत् सूरिराट्॥२॥

एकदा एकत्र समये, तत्र कृष्णपुरे, स्थितः स सूरिराट् परम्परया इत्यश्रौषीत् शुश्राव, इतीति किं ? तदाह—नगरान्तः श्रीअहम्मदावादमध्ये, ढींकुआख्ये पाटके, श्रीचिन्तामणिपार्श्वो भगवान् भूमध्ये केनापि पुरा विनिहितोऽस्ति, तच्च स्वप्ननिमित्त-शस्तशकुनैः सम्यक् सत्यं, जज्ञे ज्ञातवान्, यथा भूरिभिरपां पयसां नदीसंबन्धिनां, पूरैर्वारिमुचां घनानां दूरदेशान्तरवृष्टा-नामपि, वृष्टिं जानन्तीति तथेति ॥ २ ॥

प्रत्यर्थिक्षितिपालपङ्कजदृशां वैधव्यदीक्षागुरोः

शाहिश्रीमदकब्बरावनिभुजः प्रोच्चैःप्रसादास्पदम् ।
तत्रासन्नधिकारिणोऽथ पुरि ये काजीहुसेनादय-
स्तेषां संमतमास्तिकैः प्रविदधे प्रौढिः प्रभोश्चोक्तिभिः ॥३॥

अथेति समये, तत्र पुरि राजनगरे, प्रत्यर्थिक्षितिपाला वैरिराजानस्तेषां पङ्कजदृशः स्त्रियस्तासां वैधव्यं विधवात्वं तस्य दीक्षागुरोर्वैरिनारीरण्डात्वप्रापकस्येति समस्तशत्रुसंहारणादेवंभूतस्य, शाहिश्रीमदकब्बराऽवनिभुजोऽकब्बरनृपतेः, प्रोच्चैःप्रसादास्पदं अधिकारिणो ये काजीहुसेनादय आसन् बभूवुः, तेषां संमतं प्रभोर्गुरोश्चोक्तिभिर्वाग्भिः, आस्तिकैः प्रौढिः उद्यमोऽर्थात्मकटीकरणरूपः, प्रविदधे निर्मितेति ॥ ३ ॥

आरोग्यं बहुलं सुभिक्षमतुलं क्षेमं च राज्ञः सुखं
ज्ञात्वा गूर्जरमण्डलस्य नगरग्रामादिषु प्रत्यहम् ।
दत्त्वाऽब्दे युगपत्रिपार्थिवमिते यः स्वप्नमस्वप्नराट्-
पूज्यः प्रादुरभूद् मनोरथवनीविस्तारधाराधरः ॥ ४ ॥

गूर्जरमण्डलस्य नगरग्रामादिषु प्रत्यहं अहर्निशं, आरोग्यं नीरोगित्वं, बहुलं, च पुनः, सुभिक्षं, अत एवाऽतुलं क्षेमं, चः पुनरर्थे, तेन राज्ञः सुखं ज्ञात्वा युगानि चत्वारि, पत्रिणो बाणाः पञ्च, पार्थिवाः षोडश इति वामगतिगणितैरङ्कैः १६५४प्रमितेऽब्दे वर्षे, शिष्टपुंसां स्वप्नं दत्त्वा अस्वप्नराडिन्द्रस्तत्पूज्यः, पुनः किं०, मनोरथवनीनां विस्तारे धाराधरो मेघः, श्रीपार्श्वः प्रादुरभूत् प्रकटीबभूवेति ॥ ४ ॥

एतद्राज्यमकार्यपङ्कजवनव्रातैकचन्द्रातपः
स्फूर्जद् मन्महिमेव भूरि भविता स्थैर्यस्थितेरास्पदम् ।

इत्युच्चैरचलासु सूचनचणश्चिन्तामणिः श्रीजिनः
पार्श्वः प्रादुरभूत् प्रभावभवनं राज्येऽत्र यस्य प्रभोः ॥५॥

अत्र नगरे, यस्य प्रभोर्गुरोः, राज्ये श्रीचिन्तामणिः पार्श्वजिनः किं०, प्रभावस्य प्रतापस्य भवनं गृहं, प्रादुरभूत्, कथं०, अचलासु भूमिषु, इति सूचनचणः वक्ष्यमाणसूचकः, इतीति किं, एतद्राज्यं मन्महिमेव स्फूर्जत्स्थैर्यस्थितेरास्पदं भूरि भविता, कीदृशं, अकार्यमेव पङ्कजवनं तदत्राते चन्द्रातपः, यथा चन्द्रातपेन पङ्कजवनं संकुचति तथैतद्राज्येऽकार्यमिति ॥ ५ ॥

चक्राह्वो विहगोऽब्जिनीपतिमिवोल्लासं सृजन्तं दृशां
विश्वानन्दिनमौषधीप्रणयिनं पूर्णं चकोरो यथा ।
यद्वद् वारिदमञ्जनालिफलिनीश्यामं शिखण्डी शिशुः
पार्श्वं प्रेक्ष्य जनस्तथात्र समभूच्चिन्तामणिं मुन्मयः॥६॥

अत्र नगरे, जनश्चिन्तामणिं पार्श्वं प्रेक्ष्य तथा मुन्मयो हर्षितः, समभूत्, कथमित्याह—यथा चक्राह्वो विहगश्चक्रवाकः, अब्जिनीपतिं सूर्यमिव, पुनः, प्रेक्षकाणां दृशां उल्लासं सृजन्तं, अत एव विश्वानन्दिनं, पुनः, पूर्णं, औषधीप्रणयिनं चन्द्रं, चकोर इव, पुनः, अञ्जनालिफलिनीश्यामं कज्जलभ्रमरप्रियङ्गुश्यामलं, वारिदं मेघं, शिखण्डी शिशुर्मयूरार्भक इव, एतानेते दृष्ट्वा यथा हर्षुला भवन्ति तथा तं भगवन्तं निभाल्य भव्यजनः प्रमुदितोऽभूदिति ॥ ६ ॥

स्वस्मिन् स्वान्त इवाश्वसेनतनयं संघोऽनघोऽतिष्ठिपत्
तं तीर्थाधिपतिं सिकन्दरपुरे प्राज्यैरतुच्छोत्सवैः ।
तस्यासीद् महिमा महान् पुरवरे तस्मिन् प्रभोस्तस्थुषः
प्राप्तस्येव घनात्यये दिनपतेः स्फातिस्त्विषां भूयसी ॥७॥

तमश्वसेनतनयं पार्श्वं तीर्थाधिपतिं, सिकन्दरपुरे संघोऽतिष्ठिपत् स्थापयामास, कैः, प्राज्यैरतुच्छोत्सवैः, उत्प्रेक्ष्यते—स्वस्मिन् स्वान्ते मनसीव, तस्मिन् पुरवरे प्रभोः पार्श्वस्य तस्थुषः महान् महिमा आसीज्जात इति, यथा घनात्यये शरदि, प्राप्तस्य दिनपतेः त्विषां रुचां, भूयसी स्फातिर्भवति तथेति ॥ ७ ॥

श्रीभट्टारककोटिकोटिमुकुटोऽन्येद्युर्धियां मन्दिरैः
प्रौढैः प्राज्ञपुरन्दरैः परिवृतः प्राप्तः परप्रीतिभृत् ।
कम्रानम्रनरेन्द्रवासवशिरःकोटीरकोटीमणी-
शाणोद्घृष्टनखात्मदर्शनिकरं पार्श्वेशमित्यस्तवीत् ॥८॥

श्रीभट्टारककोटिकोटिमुकुटः श्रीविजयसेनसूरिः, अन्येद्युः एकत्र प्रस्तावे, धियां मन्दिरैः प्राज्ञपुरन्दरैः, परिवृतस्तत्र पार्श्वभवने, प्राप्तः सन्, परप्रीतिभृत्, पार्श्वेशं कीदृशं, कम्रा भक्तिमत्त्वात् आनम्रा नरेन्द्रवासवास्तेषां शिरांसि तेषु कोटीरकोटीमणीशाणे उद्घृष्टो नखात्मदर्शनिकरो यस्येति तमिति, अस्तवीत् स्तौति स्मेति ॥ ८ ॥

अथैकविंशत्या वृत्तैः पार्श्वप्रभोः स्तुतिं संकलयन्नाह—

श्रीपार्श्वं प्रणयिप्रसन्नमनसं पद्मावतीपन्नग-
स्वामिभ्यां सहितं समीहितहितश्रीदानचिन्तामणिम् ।
प्रीतिप्रह्वसुपर्वपुङ्गवमनोऽम्भोधित्रियामामणिं
श्रीचिन्तामणिसंज्ञमञ्जनघनश्यामाभिरामं स्तुमः ॥९॥

श्रीचिन्तामणिसंज्ञं श्रीपार्श्वं, स्तुम इत्यन्वयः; किं०, प्रणयिषु प्रसन्नं मनो यस्येति भक्तवत्सलत्वात्, तथा पद्मावती शासनदेवी, पन्नगस्वामी धरणेन्द्रस्ताभ्यां सहितं नित्यसेवकत्वेन समीपवर्तित्वात्, तथा समीहितहितश्रीणां दाने चिन्ता-

मणिरिव तं, पुनः, प्रीत्या प्रह्वस्तदासक्तः सुपर्वपुङ्गव इन्द्रस्तन्मन-एवाम्भोधिस्तत्र त्रियामामणिं चन्द्रं, पुनः, अञ्जनघनश्यामाः कज्जलजलदफलिन्यस्तद्वत् अभिरामं, कान्त्येति शेषः ॥ ९ ॥

कासश्वासभगन्दरज्वरकफश्लेष्मक्षयाद्या गदा
दुस्साध्या भिषजां भरैर्बहुतरैरप्यौषधैः सद्विधैः ।
यन्नामस्मरणात् प्रयान्ति निधनं सिंहादिवाशु द्विपाः
पार्श्वः पुण्यपयोजिनीदिनमणिश्चिन्तामणिः पातु वः॥१०॥

यस्य नामस्मरणात् कासश्वासभगन्दरज्वरकफश्लेष्मक्षयाद्या गदा रोगाः, भिषजां भरैर्वैद्यानां गणैः, सद्विधैर्बहुतरैरप्यौषधैर्दुस्साध्याः, तेऽपि निधनं प्रणाशं, प्रयान्ति; यथा सिंहाद् द्विपा गजाः, नश्यन्ति, स पार्श्वश्चिन्तामणिरितिनामा, किं०, पुण्यमेव पयोजिनी तत्र दिनमणिः सूर्यः, वो युष्मान्, पातु पायादिति।१०॥

कल्पान्तानिलचक्रवालबहलव्यालोलकल्लोलभृ-
त्पानीयेन नभोलिहं भयगृहं गाढोर्जितैर्गर्जितैः ।
यन्नामस्मरणाद् व्रजन्ति मनुजा उल्लङ्घ्य वारांनिधिं
पार्श्वः पुण्यपयोजिनीदिनमणिश्चिन्तामणिः पातु वः॥११॥

यन्नामस्मरणाद् मनुजा वारांनिधिं उल्लङ्घ्य व्रजन्ति, स्वस्थानं क्षेमेणेति गम्यं, वारांनिधिं किं०, कल्पान्तस्य योऽनिलचक्रवालो वायुविस्तारस्तेन बहलं व्यालोला अतिचपला ये कल्लोलास्तान् बिभर्तीति कल्पान्तानिलचक्रवालबहलव्यालोलकल्लोलभृद् यत्पानीयं तेन, नभोलिहं व्योमस्पृशं, अत एव गाढोर्जितैर्गर्जितैर्भयगृहं, शेषं प्राग्वत् सुबोधम् ॥ ११ ॥

ज्वालोल्काज्वलिताखिलद्रुमदलप्रोद्भूतधूमोद्धत-
ध्वान्तान्धीकृतवन्यजन्युनयनः प्रत्यम्बरं प्रोच्छलन् ।

यन्नामस्मरणेन शाम्यति जवाद् दावाग्निरद्भिर्यथा
पार्श्वः पुण्यपयोजिनीदिनमणिश्चिन्तामणिः पातु वः ॥१२॥

यन्नामस्मरणेन अद्भिः पानीयैः, इव यथा, तथा दावाग्निः शाम्यति, कीदृशः, ज्वालोल्काभिर्ज्वलितेभ्योऽखिलद्रुमदलेभ्यो यः प्रोद्भूतो धूमस्तेनोद्धतं यद् ध्वान्तं तेन अन्धीकृतानि वन्यजन्तूनां वनेचरजन्तूनां नयनानि येन सः, पुनः, अम्बरं अम्बरं प्रति प्रत्यम्बरं प्रोच्छलन्, स पार्श्व इति प्राग्वत् ॥ १२ ॥

द्वे दीर्घे रसने मुखौकसि वहन् द्वौ दीर्घपृष्ठाविव
स्फूर्जत्फूत्कृतिरुत्फणः स्फुरदुरुस्थामास्थिरक्रोधवान् ।
यन्नामस्मरणाद् न कीटक इव त्रासाय भोगी भवेत्
पार्श्वः पुण्यपयोजिनीदिनमणिश्चिन्तामणिः पातु वः ॥१३॥

यन्नामस्मरणात् कीटक इव भोगी सर्पः, त्रासाय न भवेदित्यन्वयः; भक्तानामिति, भोगी कथं०, मुखौकसि वदनगेहे, द्वे दीर्घे रसने जिह्वे, वहन्, इवोत्प्रेक्ष्यते—द्वौ दीर्घपृष्ठौ नागाविव, तथा स्फूर्जन्ती फूत्कृतिर्यस्येति, तथा उत्फणः, तथा स्फुरच्च उरु च स्थाम यस्य सः, तथा स्थिरः शाश्वतः क्रोधोऽस्यास्तीति, स पार्श्व इति० ॥ १३ ॥

उद्भिन्नद्विपकुम्भनिर्मलगलन्मुक्ताफलश्रेणिभि-
र्भूयोभूषितभूतलाद् बहुचलद्दृग्युग्मनुन्नाशनेः ।
यन्नामस्मरणाद् मृगादिव मृगारातेर्नृणां नैव भीः
पार्श्वः पुण्यपयोजिनीदिनमणिश्चिन्तामणिः पातु वः ॥१४॥

यन्नामस्मरणाद् मृगादिव यथा, तथा मृगारातेः सिंहात्, नृणां भीर्भयं, न भवतीति, मृगारातेः कथं०, उद्भिन्नेभ्यो द्विपकु-

म्भेभ्यो निर्मलानि गलन्ति च यानि मुक्ताफलानि तेषां श्रेणिभिर्भूयो भूषितं भूतलं येनेति तस्मात्, पुनः, बहुचलता दृग्युग्मेन नुन्ना निर्जिताऽशनिर्विद्युद् येन तस्मात्, पार्श्व इति० ॥ १४ ॥

स्फूर्जद्गर्जिततर्जितोर्जितपयोवाहोंह्रिघातानम-
त्क्ष्मापीठः प्रचुरक्षरन्मदजलव्यालोलगल्लस्थलः ।
यन्नामस्मरणाद् गजोऽङ्गज इव स्थाणोर्हतौजा भवेत्
पार्श्वः पुण्यपयोजिनीदिनमणिश्चिन्तामणिः पातु वः ॥१५॥

यन्नामस्मरणात् स्थाणोर्हरात्, अङ्गज इव, गजो हतौजा निर्बलो भवेदित्यन्वयः; कीदृशः, स्फूर्जता गर्जितेन तर्जित ऊर्जितः सजलत्वात् सबलः पयोवाहो मेघो येन सः, पुनः, अंह्रिघातेन आनमत् क्ष्मापीठं यस्मात् सः, पुनः, प्रचुरं क्षरच्च यद् मदजलं तेन व्यालोलं गल्लस्थलं यस्य सः, पार्श्व इति० ॥१५॥

हुङ्कारैर्बधिरीकृताखिलजगत्पादप्रहारोत्पत-
त्पांसूत्पूरतिरोहिताम्बरतला नानास्त्रविस्तारिणी ।
यन्नामस्मरणाद् मलिम्लुचचमूर्वायोरिवाऽब्दो मुधा
पार्श्वः पुण्यपयोजिनीदिनमणिश्चिन्तामणिः पातु वः ॥१६॥

यन्नामस्मरणाद् मलिम्लुचचमूस्तस्करसेना, वायोः अब्द इव मुधा भवेदिति योगः, कीदृशी, हुङ्कारैर्बधिरीकृतं अखिलं जगद् ययेति सा, तथा पादप्रहारैरुत्पतत्पांसूत्पूरस्तेन तिरोहितं अम्बरतलं यया सा, तथा नानास्त्रविस्तारिणीति, पार्श्व इति० ॥१६॥

उद्दण्डद्विपगण्डमुण्डनिपतत्खण्डप्रचण्डोच्छल-
त्स्रोतःशोणितपङ्किलक्षितितले भ्राम्यद्विहङ्गाकुले ।
यन्नाम स्मरतां सतां तनुमतां युद्धे जयो जायते

पार्श्वः पुण्यपयोजिनीदिनमणिश्चिन्तामणिः पातु वः॥ १७॥

यन्नाम स्मरतां युद्धे जयो जायत इति, कीदृशे, उद्दण्डा द्विपास्तेषां गण्डमुण्डानि गल्लस्थलमस्तकानि तेषां निपतन्ति यानि खण्डानि तेभ्यः प्रचण्डं च उच्छलच्च स्रोत इव स्रोतः प्रवाहरूपं यत् शोणितं रुधिरं तेन पङ्किलं क्षितितलं यस्मिन्निति, अत एव भ्राम्यन्तो ये विहङ्गास्तैराकुले, पार्श्वः० ॥ १७ ॥

कामं शृङ्खलकोटिकृष्टकरणक्लेशस्तृषार्तः क्षुधा-
क्षामाक्षो निगडैर्निबद्धचरणः काराधिकारार्दितः ।
यन्नामस्मरणाद् भवादिव भवी बन्धाद् द्रुतं मुच्यते
पार्श्वः पुण्यपयोजिनीदिनमणिश्चिन्तामणिः पातु वः॥१८॥

यन्नामस्मरणाद् भवी प्राणी, भवादिव यथा, तथा बन्धाद् मुच्यत इति, कीदृशः, शृङ्खलकोटिभिः शृङ्खलाग्रैः कृष्टः करणक्लेशो यस्येति सः, पुनः, तृषार्तः, पुनः, क्षुधाक्षामाक्षः बुभुक्षाग्लानेन्द्रियः, पुनः, निगडैर्निबद्धौ चरणौ यस्येति, पुनः, काराधिकारेण अर्दितः पीडितः, एवंभूतो भवी यत्प्रभावाद् मोक्षं लभत-इति, पार्श्व इत्यादि० ॥ १८ ॥

पित्रोः पादपयोजपांसुपटलीपूतोत्तमाङ्गान् कृपा-
पारावारतुषाररश्मिसदृशान् सौन्दर्यमीनध्वजान् ।
यन्नामस्मरणादपत्यरहिताः पुत्राँल्लभन्तेऽद्भुतान्
पार्श्वः पुण्यपयोजिनीदिनमणिश्चिन्तामणिः पातु वः॥१९॥

यन्नामस्मरणात् अपत्यरहिता नरा अद्भुतान् पुत्रान् लभन्ते, किं०, पित्रोः पादपयोजपांसुपटल्या पूतं उत्तमाङ्गं येषां तान् नित्यं प्रणामपरान् इति, पुनः, कृपापारावारे तुषाररश्मिश्चन्द्र-

स्तत्सदृशान् करुणापूर्णान् इति, पुनः, सौन्दर्येण मीनध्वजानङ्गा-
वतारानिति, पार्श्वः पात्विति० ॥ १९ ॥

भोगत्यागनिबन्धनं परिजनप्रेमप्रसादाऽऽस्पदं
वाल्लभ्यप्रसवा पुमर्थपृथिवीकन्दैककादम्बिनी ।
यन्नामस्मरणात् करोति कमला कान्तेव केलिं कुले
पार्श्वः पुण्यपयोजिनीदिनमणिश्चिन्तामणिः पातु वः ॥२०॥

यन्नामस्मरणात् कमला कान्तेव केलिं करोति, कमला किं०, भोगश्च त्यागश्च दानं तयोर्निबन्धनं कारणं, पुनः, परिजनस्य प्रेमप्रसादयोरास्पदं, पुनः, वाल्लभ्यस्य प्रसवो यस्याः सेति, पुनः, पुमर्था धर्मार्थकामास्त एव पृथिवीकन्दास्तेषु कादम्बिनी मेघ-माला, पार्श्वः० ॥ २० ॥

तन्वी त्रस्तकुरङ्गशावनयना मत्तेभकुम्भस्तनी
बिम्बोष्ठी कनकच्छविः कृशकटिः पूर्णेन्दुपुण्याऽऽनना ।
यन्नामस्मरणाद् गृहे सुगृहिणी स्याच्छीललीलाऽन्विता
पार्श्वः पुण्यपयोजिनीदिनमणिश्चिन्तामणिः पातु वः ॥२१॥

यन्नामस्मरणाद् गृहे सुगृहिणी शीललीलाऽन्विता शीलवती स्यादिति, पुनः कीदृशी, तन्वीत्याद्यशेषं सुगमम् ॥ २१ ॥

वल्गद्वाजिविराजितं गजघटाघण्टाटणत्कारभू-
रङ्गत्तुङ्गरथं पदातिपटलीपूर्णं प्रतापाऽऽस्पदम् ।
यन्नामस्मृतिमन्तमेति मनुजं राज्यं धुनीवाऽम्बुधिं
पार्श्वः पुण्यपयोजिनीदिनमणिश्चिन्तामणिः पातु वः ॥२२॥

यन्नामस्मृतिरस्याऽस्तीति यन्नामस्मृतिमन्तं मनुजं, राज्यं, किं०, वल्गन्तो ये वाजिनस्तैर्विराजितं, पुनः, गजानां घटास्तासां

घण्टास्तासां टणत्कारस्तस्य भूः स्थानं, पुनः, रङ्गन्तस्तुङ्गा रथा यत्र, तथा पदातिपटलीभिः पूर्णं, तथा प्रतापस्याऽऽस्पदं, एत्याऽऽगच्छति, अम्बुधिं समुद्रं, धुनी नदीवेति दृष्टान्तः, पार्श्व इति० ॥२२॥

भूतप्रेतपिशाचमुद्गलबलव्यालादिबाधाधुनी-
ग्रीष्मो भीष्मतमाऽऽमयादिविकृतिस्थामत्रियामाऽर्यमा ।
यन्नामस्मरणेन सिध्यति विधिः सन्मन्त्रतन्त्रादिगः
पार्श्वः पुण्यपयोजिनीदिनमणिश्चिन्तामणिः पातु वः ॥२३॥

यन्नामस्मरणेन सन्मन्त्रतन्त्रादिगो विधिः सिध्यति; किं०, भूतप्रेतपिशाचमुद्गलानां यद्बलं, पुनर्व्यालादीनां बाधा पीडा सैव धुनी नदी तस्यां ग्रीष्मस्तच्छोषकत्वात्, तथा भीष्मतमा ये आमयाऽऽदयस्तेषां यद्विकृतिस्थाम तद्रूपा त्रियामा रात्रिस्तत्र अर्यमा सूर्यस्तद्व्यपोहकत्वादिति, पार्श्वः० ॥ २३ ॥

श्रीस्पर्धासु पराङ्मुखी क्षितिभुजां चेतश्चमत्कारिणी
सर्वांशोदयिनी यशोधवलितब्रह्माण्डभाण्डोदरा ।
यन्नामस्मरणात् समेति वदने विद्याऽनवद्यादरा
पार्श्वः पुण्यपयोजिनीदिनमणिश्चिन्तामणिः पातु वः ॥२४॥

यन्नामस्मरणात् अनवद्यादरा विद्या वदने समेति; कीदृशी, श्रीस्पर्धासु पराङ्मुखी भगवन्नामस्मरणाद् या विद्या लभ्यते तद्विद्याऽनुभावेन श्रीरपि प्राप्यते इति श्रियोऽस्पर्धिता, तथा क्षितिभुजां राज्ञां, चेतश्चमत्कारिणी; पुनः, सर्वांशैरुदयिनी, यशसा धवलितं ब्रह्माण्डभाण्डोदरं ययेति सा, पार्श्व इति० ॥ २४ ॥

प्रत्यर्थिक्षितिराजवारिजदृशां वैधव्यदीक्षास्पृशां
सर्वैश्वर्यभुजां भुजार्जितलसन्निःशेषदिक्संपदाम् ।

यन्नामस्मरणाद् नृणामनुदिनं राज्ञां पुरो गौरवं
पार्श्वः पुण्यपयोजिनीदिनमणिश्चिन्तामणिः पातु वः ॥२५॥

यन्नामस्मरणाद् नृणां राज्ञां पुरोऽनुदिनं गौरवं भवति राजप्रसादः स्यादिति, राज्ञां किं०, प्रत्यर्थिक्षितिराजवारिजदृशां वैरिनृपनारीणां, वैधव्यदीक्षास्पृशां विधवत्वदायिनां, पुनः, सर्वैश्वर्यं समग्रप्रभुत्वं भुञ्जन्तीति तेषां, पुनः, भुजाभ्यामर्जिता लसन्त्यो निःशेषदिक्संपदो यैस्तेषामिति, पार्श्वः० ॥ २५ ॥

अष्टोत्कृष्टतपःसुरद्रुकुसुमं शक्तिस्फुरद्व्यक्तयो
देवानामपि दुर्लभाः सुमहिमानीरन्ध्रनीराब्धयः ।
यन्नामस्मरणाद् भवन्ति वशगाः सर्वर्द्धयः सिद्धयः
पार्श्वः पुण्यपयोजिनीदिनमणिश्चिन्तामणिः पातु वः ॥२६॥

यन्नामस्मरणात् अष्टसिद्धयो वशगा भवन्ति, किंलक्षणाः, उत्कृष्टं यत्तपस्तद्रूपो यः सुरद्रुः कल्पवृक्षस्तत्कुसुमं तपःप्रभावादेवैता जायन्ते, तथा शक्त्या स्फुरन्त्यो व्यक्तयो विशेषा यासां ताः, तथा देवानामपि दुर्लभास्तपस्विभिरेव लभ्यत्वात्, तथा सुमहिमारूपनीरन्ध्रनीरस्याऽब्धय इति, तथा सर्वा ऋद्धयो याभ्यस्ताः, पार्श्वः पा० ॥ २६ ॥

प्रत्यर्थिव्रजवक्त्रचन्द्रतमसः कर्पूरकुन्दोज्ज्वल-
क्षीरक्षालितऋक्षराजरुचयः संरुद्धविश्वोदराः ।
यन्नामस्मरणाद् भवन्ति भुवने सस्फूर्तयः कीर्तयः
पार्श्वः पुण्यपयोजिनीदिनमणिश्चिन्तामणिः पातु वः ॥२७॥

यन्नामस्मरणात् कीर्तयः सस्फूर्तयः सदीप्तयः, भवन्ति ; किंलक्षणाः, प्रत्यर्थिव्रजो वैरिव्रजस्तस्य वक्त्रचन्द्रे तमसो राहुरूपा-

स्तद्ग्रासकृत्त्वात्, तथा कर्पूरकुन्दोज्ज्वलक्षीरक्षालितऋक्षराजश्च-न्द्रस्तद्वद् रुचिर्यासां ताः, तथा संरुद्धं विश्वस्योदरं याभिस्ताः, पार्श्व इति०॥ २७ ॥

पूर्वस्थप्रणवेन कामदरमाबीजौजसाऽर्हंजुषा
श्रीचिन्तामणिपार्श्वनाथपटुना प्रान्ते नमःस्वाहिना ।
यन्नामस्मरणेन मन्त्रविधिना स्वीस्यादवश्यं जगत्
पार्श्वः पुण्यपयोजिनीदिनमणिश्चिन्तामणिः पातु वः ॥२८॥

यन्नामस्मरणेन मन्त्रविधिना जगत् स्वीस्याद् वशीभवति, मन्त्रविधिना किं०,पूर्वस्थः प्रथमस्थायी प्रणव ओङ्कारो यत्र तेन, तथा कामदं रमाबीजं तयोर्ह्रीङ्कारश्रीङ्कारयोः ओजो बलं यस्मिंस्तेनेति, तथा अर्हं इति पदजुषा, तथा श्रीचिन्तामणिपार्श्वनाथ इति नाम्ना पटुना, तथा प्रान्ते नमःस्वाहेति पदद्वयी यस्मिंस्तेनेति, 'ओं ह्रीं श्रीं अर्हं श्रीचिन्तामणिपार्श्वनाथाय नमः स्वाहा' इत्यनेन मन्त्रेण, श्रीपार्श्वनामस्मृतेर्महिम्ना जगद् वशे भवति; पार्श्व इत्यादि० ॥ २८ ॥

यक्ष्माऽऽद्युग्ररुजाविकारनिकरध्वंसैकधन्वन्तरिः
फुल्लद्वालतमालतालफलिनीनीलोत्पलश्यामलः ।
अस्तु स्वस्तिमनोमनोरथरमादानैकदेवद्रुमः
प्रत्यग्रः प्रथितः प्रभुः प्रकटितश्चिन्तामणिः शर्मणे॥२९॥

चिन्तामणिः प्रभुः प्रत्यग्रो नवः, प्रकटितः प्रथितः शर्मणेऽस्तु; कीदृशः, यक्ष्माऽऽद्युग्ररुजाविकारनिकरस्य राजयक्ष्माऽऽदिदुर्वाररोगव्रजस्य ध्वंसे एकधन्वन्तरिः, पुनः, फुल्लद्वाला ये तमालतालाश्च फलिनी नीलोत्पलानि च तद्वत् श्यामलः श्यामो नीलवर्णः श्यामनीलयोरैक्यात्, पुनः, स्वस्तिमनसां कल्याणा-

स्मनां सुमनसामिति मनोरथरमादाने एकोऽद्वितीयो देवद्रुमः कल्पद्रुरिति ॥ इदं स्तोत्रं पञ्चत्रिंशद्वृत्तप्रमाणं ग्रन्थकर्त्रैव कृतमस्ति, परमत्रैतावदेव योजितं, तेन तदेव व्याख्यातमिति ॥२९॥

इत्यामोदमनोहरैर्बहुतरैर्निर्वर्ण्य वर्णैर्नवैः
काव्यैः पुष्पभरैरिवोत्तमगुणैरभ्यर्च्य रुच्यं जिनम् ।
सूरिः सङ्घसमक्षमक्षतसुखोत्कर्षं सहर्षं तदा
नामाऽमुष्य जिनेशितुर्विजययुक्चिन्तामणीति व्यधात् ३०

इति प्रदर्शितरीत्या, आमोदेन हर्षेण परिमलेन च मनोहरैः, पुनः, बहुतरैर्निर्वर्ण्यवर्णैः नवैः, पुष्पभरैरिव उत्तमगुणैः काव्यैः रुच्यं जिनं अभ्यर्च्य प्रपूज्य, सूरिः अमुष्य जिनेशितुः प्रकटितस्य चिन्तामणिपार्श्वस्य, विजयराज्ये प्रादुर्भूतत्वाद् विजययुक्चिन्तामणीति विजयचिन्तामणिरिति नाम, सङ्घसमक्षं अक्षतसुखोत्कर्षं, पुनः, सहर्षं व्यधादकरोदिति ॥ ३० ॥

मत्वाऽत्याग्रहमाप्तमार्गदिविषन्मार्गाभ्रमार्गध्वजः
साध्वाचारविचारचारुरचनाचातुर्यभृत् सूरिराट् ।
श्रीसूरीश्वरहीरहीरविजयश्रीपादुकापाविते
सङ्घोल्लासकरे सिकन्दरपुरे चक्रे चतुर्मासकम् ॥३१॥

सूरिराट् ततः सिकन्दपुरेऽत्याग्रहं मत्वाऽर्थात् सङ्घस्य, चतुर्मासकं चक्रे; किंलक्षणे पुरे, श्रीसूरीश्वरहीरहीरविजयास्तेषां श्रीपादुकाभ्यां पाविते, अतः सङ्घोल्लासकरे, सूरिः किं०, आप्तानां मार्ग आचारः स एव दिविषन्मार्गो व्योम तत्र अभ्रमार्गध्वजः सूर्यः, तथा साधूनामाचारविचारस्य चार्वी या रचना तस्यां चातुर्यभृत् ॥ ३१ ॥

तृतीयप्रतिष्ठाऽधिकारमाह–

तत्राभूल्लहुआऽभिधः सदभिधः श्राद्धः सुधर्मैकधी-
र्रर्हद्वाक्कतकेन पावनमनःपाथाः सनाथः श्रिया ।
बिम्बं कारितवांश्च स स्वविभवैः श्रीवैश्वसेनिप्रभोः
सन्मम्माणिखनेर्दलेन दलितक्लेशः सदोदारदृक् ॥३२॥

तत्र सिकन्दरपुरे, लहुआऽभिधः सदभिधः सत्ख्यातिः, श्राद्धोऽभूत्, स श्रीवैश्वसेनिप्रभोः शान्तेः, सन्मम्माणिखनिदलेन स्वविभवैर्बिम्बं कारितवान्, स किं०, अर्हतां वागेव कतकं तेन पावनं मनःपाथो यस्येति सः, शेषं स्पष्टम् ॥३२॥

सङ्घस्वान्तशिखण्डिशावसुखदैर्वृन्दैरिवाम्भोभृतां
विश्वानन्दकरैर्महामहभरैः प्रष्ठां प्रतिष्ठां तदा ।
तस्यात्यद्भुतवैभवव्रजभुवो देवस्य दिव्यश्रियः
सान्द्राऽऽनन्दनिबन्धनेऽहनि शुभे श्रीसूरिसिंहो व्यधात्३३

तदा बिम्बनिष्पत्तेरवसरे, तस्य दिव्यश्रियो देवस्य श्रीशान्तेः, प्रतिष्ठां श्रीसूरिसिंहो महामहभरैः प्रष्ठां शुभेऽहनि व्यधात्; महभरैः किं०, सङ्घस्य स्वान्तमेव शिखण्डिशावो मयूरबालस्तस्य सुखदैः अम्भोभृतां मेघानां वृन्दैरिव, तथा विश्वानन्दकरैरिति, देवस्य किं०, अत्यद्भुतस्य वैभवव्रजस्य भुवः स्थानस्येति, अहनि किं०, सान्द्रानन्दस्य निबन्धने निदाने ॥ ३३ ॥

तस्यां प्रतिष्ठायामन्यत् किं कृतवान्? तदाह–

तस्मिन्नेव दिने दिनेशमहसां मित्रे सदामोदभृ-
त्पद्मोल्लासिनि विघ्ननन्दिविजये श्रीवाचकीयं पदम् ।
सूरीन्द्रः प्रददौ सदोदयकरीं विद्यामिवावद्यहां

श्रीविद्याविजयाभिधेऽपिच गणौ विद्वत्पदं श्रीपदम् ॥३४॥

सूरीन्द्रस्तस्मिन्नेव दिने प्रतिष्ठादिने, किं०, दिनेशमहसां मित्रे सूर्यमहतुल्ये, सूर्यमहसि दिने च किं०, सन् आमोदो हर्षः गन्धश्च तद्युक्ता या पद्मा लक्ष्मीः, अन्यत्र तद्युक्तं यत् पद्मं, इत्यादि शेषं सुगमम् ; विज्ञनन्दिविजये श्रीवाचकीयं पदम्, अपिच पुनरर्थे, विद्याविजयाभिधे गणौ स्वशिष्ये सूरिपदयोग्ये, विद्वत्पदं पण्डितपदं, प्रददौ; उत्प्रेक्ष्यते–अवद्यहां पापापहां, पुनः, सदोदयकरीं विद्यामिवेति स्पष्टम् ॥ ३४ ॥

निर्ग्रन्थेन्द्रसभासभासु सुभगस्तस्माद् विजह्रे पुरात्
स्तोमं सांतमसं हरन् हरिरिव व्रातैर्गवां सर्वतः ।
धर्मर्द्ध्याऽनघसूरिमन्त्रजविधेराराधनालालसो
लाटापल्लिपुरीं महेभ्यमनुजां स्मैति प्रभासंनिभाम् ॥३५॥

निर्ग्रन्थेन्द्रसभासभासु सूरिसभासमूहेषु, "सभा समूहे" इत्यनेकार्थत्वात्, सुभगः श्रीसूरिस्तस्मात् पुरात् विजह्रे विहृतवान्, किं कुर्वन्, सांतमसं आन्धकारं स्तोमं, गुरुपक्षे भावान्धकारस्तोमं, हरिरिव सूर्य इव, हरन्, कैरित्याह–गवां गिरां कान्तीनां च व्रातैरिति, क्व जगामेत्याह–लाटापल्लिपुरीं लाडोलिनाम्नीं पुरीं, गुरुः किं०, सूरिमन्त्रजविधेः आराधनालालसः, पुरीं किं०, प्रभासंनिभां अलकातुल्यां, श्रियेति, शेषं स्पष्टम् ॥३५॥

जीवानामभयप्रदानपटहस्योद्घोषणाभूषिते
श्रीसङ्घादरराजिते प्रवरदृक्पौरोत्करभ्राजिते ।
लाटापल्लिपुरे पुराऽहितपुरे भास्वत्कलाभृद्वरे
तस्थौ ध्यानकृते दिनेऽथ दिनकृत्तुल्ये तमोघ्ने गुरुः ॥३६॥

पूर्वार्धं सुगमम्, उत्तरार्धव्याख्या यथा–लाटापल्लिपुरे किं०,

पुराऽहितो महादेवस्तत्पुरे तत्तुल्ये, तद्विशेषणं यथा–एकत्र भास्वत्कलाभृद्भिः, अन्यत्र भास्वत्कलाभृता चन्द्रेण वरे श्रेष्ठे, पुनर्दिने किं०, तमोघ्ने एकत्र पापहरे, अन्यत्र तिमिरघ्ने, अथ गुरुर्ध्यानकृते तस्थौ ॥ ३६ ॥

मुञ्चन् षड् विकृतीः सृजन्नतिशयात् षष्ठाष्टमाद्यं तपः
प्रोज्झंश्चाऽनवधानतामवदलन् क्लेशालयं संलयम् ।
कार्याण्यक्षरपद्धतेर्लिखनतश्चाज्ञापयन्नात्मनः
शिष्याणामथ मन्त्रराजमनघं नक्तं दिवा च स्मरन् ॥३७॥
सुश्लिष्टोष्ठपुटः सुखासनसमासीनः प्रसन्नाननो
नासान्यस्तविलोचनः परिहरन् स्पर्शं रदानां रदैः ।
कामं कम्रमना मनोहरतरामाकल्पकेलिं वहं-
स्तिष्ठन्निन्द्रदिशि त्यजन् गिरि रतिं ध्यानं दधौ श्रीगुरुः ३८

अनयोर्व्याख्या–श्रीगुरुर्ध्यानं दधौ; किं कुर्वन्, षड् विकृतीः मुञ्चन् त्यजन्, पुनः, अतिशयात् आधिक्येन, षष्ठाऽष्टमाद्यं तपः सृजन् निर्मापयन्, चः पुनरर्थे, अनवधानतां वैयग्र्यं प्रोज्झन्, तथा क्लेशालयं संलयं निद्रां अवदलन्, पुनः, कार्याणि आहारनीहारादीनि, आत्मनः शिष्याणां अक्षरपद्धतेर्लिखनतः आज्ञापयन्, तथाऽनघं मन्त्रराजं सूरिमन्त्रं, नक्तं रात्रौ, दिवा च स्मरन् ॥३७॥ पुनर्गुरुः किं०, सुश्लिष्टं ओष्ठपुटं यस्य सः, पुनः, सुखासने समासीनः, तथा प्रसन्नाननः, तथा नासान्यस्तविलोचनः, पुनः, रदैः दन्तैः, रदान् असंस्पृशन् कामं अत्यर्थं, कम्रं मनो यस्येति सः, पुनः, मनोहरतराम् आकल्पकेलिं ध्यानयोग्यवेषलीलां, वहन्, पुनः, इन्द्रादिशि पूर्वदिशि, तिष्ठन्, तथा गिरि रतिं त्यजन् वचनोच्चारं परिहरन्निति ॥ युग्मव्याख्येयम् ॥ ३८ ॥

ध्यानी सूरिवरः समाहितमना मुद्रामनिद्रां वहं-
श्चूलेवर्भुगिरेः स्थिरत्वभृदरं भ्रेजे सुवर्णर्द्धिभूः ।
मेने चात्र जनैर्विरञ्चिरिव यः पद्मासनस्थो गुरुः
साक्षात् कैश्चिदमानि मन्युभिदयं स्वामी पिनाकीव च।३९।

ध्यानी ध्यानवान्, पुनः, समाहितं समाधिसंपन्नं मनो यस्य सः, तथा अनिद्रां जागरूकां मुद्रां वहन्, सूरिवरः ऋभुगिरेर्मेरोः, चूलेव स्थिरत्वभृत्, भ्रेजेऽशुभत्, अत एव सुवर्णाः शोभना ऋद्धयस्तासां भूः, पक्षे सुवर्णर्द्धिभूः स्पष्टं, चः पुनरर्थे, यः पुनर्गुरुः पद्मासनस्थः सन्, जनैर्विरञ्चिरिव मेने ब्रह्मेव ज्ञातः, तथा कैश्चित् अयं स्वामी साक्षात् पिनाकी महेश इव, किं०, मन्युभिद् यज्ञभित्, पक्षे कोपभित्, अमानि मेने ॥ ३९ ॥

साक्षाद्दीप इव प्रकाशनिपुणः श्रीसूरिमन्त्रो मनः-
सद्मन्यस्य विभोर्बभौ तततमःपूरं हरन् भानुवत् ।
भाति स्मेन्दुरिव प्रसिद्धिपटुना च्छायाधरत्वेन च
स्वर्वापीवहवत् क्षिपन् घनमघं सर्वज्ञचेतोहरः ॥४०॥

अस्य गुरोर्मनःसद्मनि सूरिमन्त्रः साक्षाद्दीप इव प्रकाशनिपुणो बभौ, किं कुर्वन्, भानुवत् तततमसां विस्तीर्णपापानां ध्वान्तानां च, पूरं हरन्, पुनः, छायाधरत्वेन इन्दुरिव, पुनः, स्वर्वाप्या वहवत् गङ्गाप्रवाह इव, भाति स्मेति, शेषं सुगमम् ॥४०॥

ध्यानं धन्यतमं तदत्र सृजतस्तस्य प्रभावात्प्रभोः
संपूर्णं भवति स्म विस्मयमयैः शस्तैः समस्तं जगत् ।
तेजोभिर्दलितान्धकारनिकरैः सामोदपद्माकरै-
र्भासां भर्तुरिवोदयं विदधतः सस्फूर्तिमूर्तिश्रियः ॥४१॥

अत्र तद् ध्यानं सृजतः प्रभोस्तस्य प्रभावात् जगद् विस्मयमयैः शस्तैः मङ्गलैः, पूर्णं भवति स्म ; इवेत्युपनये, यथा उदयं विदधतो भासां भर्तुः सूर्यस्य, तेजोभिर्जगत् संपूर्णं भवति, तेजोभिः किं०, दलितोऽन्धकारनिकरो यैरिति, सामोदः पद्माकरो येभ्यस्तैरिति, शेषं सुगमम् ॥ ४१ ॥

एवं संस्मरतः स्मरस्मयभिदादिग्वाससश्चेतस-
श्चिन्ताऽतीतफलप्रदाननिपुणं श्रीसूरिमन्त्रं गुरोः ।
सद्यः प्रादुरभूत् सुविंशतिभुजभ्राजिष्णुदृग् यक्षराड्
यक्षाधीश इवर्द्धिकृद् मुकुटयन् हस्तौ विहस्तेतरः॥४२॥

एवं अनया रीत्या, गुरोः किं०, स्मरस्मयभिदायां दिग्वाससः शम्भोः, सूरिमन्त्रं संस्मरतः किं०, चेतसश्चिन्ताऽतीतफलप्रदाननिपुणं जपतः सतः, त्रिभिर्मासैः, सुविंशतिभुजैर्भ्राजिष्णुर्दृग् दर्शनं यस्येति सः, यक्षराट् प्रादुरभूत् प्रकटीभूत इति, किं०, विहस्तेतरोऽव्याकुल इति, किं०, हस्तौ मुकुटयन् कृताञ्जलिरिति, पुनः, यक्षाधीश इव धनदवत् ऋद्धिकृत्, स हि श्रीद इति, प्रसिद्धश्चेति ॥ ४२ ॥

मुक्तालीमिव दन्तकान्तिपटलीं प्रादुष्प्रकुर्वन् पुरः
प्रोचे पुण्यजनो जनोन्नतिकृती देयः स्वपट्टः प्रभो! ।
श्रीविद्याविजयाभिधस्य विदुषस्त्वद्बिम्बमेवास्त्ययं
प्रोच्यैवं च तिरोदधे दधियशा दक्षः स यक्षाग्रणीः॥४३॥

प्रादुर्भूय किमुवाचेत्याह--हे प्रभो! श्रीसूरे!, श्रीविद्याविजयाभिधस्य विदुषः पण्डितस्य, स्वपट्टो देय इति,पुण्यजनो यक्षः, जनोन्नतौ कृती विज्ञः, मुक्तालीमिव दन्तकान्तिपटलीं प्रादुष्प्रकुर्वन् प्रकटयन्, पुरोऽर्थाद् गुरोः, प्रोचे उक्तवानिति, अयं वि-

द्वान् त्वद्बिम्बमेवास्ति, एवं प्रोच्य चोक्त्वा, तिरोदधे अन्तरितोऽभूत्, दधिवदुज्ज्वलं यशो यस्य सः, दक्षो यक्षाग्रणीर्यक्षमुख्य-इति ॥ ४३ ॥

दक्षां यक्षपतेर्विचारचतुरां वाचं स वाचंयमा-
धीशस्तां च निशम्य हृष्टहृदभूत् केकीव मेघध्वनिम् ।
निष्प्रत्यूहमभूदथेप्सितधना ध्यानस्य पूर्तिः प्रभोः
शस्तैः संघमनोरथैर्जलधरैः क्षेत्रस्य धात्र्या यथा॥४४॥

स वाचंयमाधीशः सूरिः, च पुनः, तां यक्षपतेर्दक्षां विचारचतुरां वाचं निशम्य मेघध्वनिं केकीव हृष्टहृद् अभूत्; अथेति अवधिप्राप्तौ, प्रभोः ईप्सितधना निष्प्रत्यूहं ध्यानस्य पूर्तिः अभूत्, कैः, शस्तैः प्रशस्तैः, संघमनोरथैः, यथा क्षेत्रस्य धात्र्याः पूर्तिर्जलधरैः स्यादिति ॥ ४४ ॥

चञ्चच्चीवररम्यरत्नरजतस्वर्णादिसद्वस्तुनो
दानैरर्थिषु वर्यतूर्यनिनदैः सन्मौक्तिकस्वस्तिकैः ।
गीतैश्चञ्चलचक्षुषामिति महान् संघेऽनघे कुर्वति
ध्यानाऽऽस्थानगृहाद् घनादिव शशी मुद्भूः प्रभुर्निर्ययौ४५

चञ्चद् मनोज्ञं चीवरादि यद्वस्तु तस्य प्रतीतस्य, अर्थिषु दानैः, तथा वर्यतूर्यनिनदैः, तथा सन्मौक्तिकानां स्वस्तिकैः, पुनः, चञ्चलचक्षुषां सधवस्त्रीणां, गीतैः, इत्यादिरीत्या महान् उत्सवान्, अनघे संघे कुर्वति सति, प्रभुः श्रीसूरिः, ध्यानाऽऽस्थानगृहाद् निर्ययौ निर्गतवान्, यथा घनात् शशी चन्द्रः, अतो मुद्भूः हर्षस्थानमिति ॥ ४५ ॥

संघस्वान्तसरोजराजिमभितः प्रीतिं नयंस्तामसं

स्तोमं घ्नंश्च कुवादिकौशिकदृशां सान्द्रां च निद्रां ददत् ।
शृङ्गं पूर्वगिरेरिव द्युतिपतिः सिंहासनं सूरिराट्
सद्योऽलङ्कृतवान् महर्षिवृषभैः संस्तूयमानो मुहुः ॥४६॥

सूरिराट् सिंहासनं अलङ्कृतवान् इत्यन्वयः; कः किमिव, द्युतिपतिः सूर्यः, पूर्वगिरेर्यथा शृङ्गं अलङ्कुरुते, सूरिः सूर्यश्च किं०, संघस्य स्वान्तरूपसरोजराजिम् अभितः सर्वतः, प्रीतिं नयन्, च पुनः, तामसं पापसंबन्धिनं ध्वान्तसंबन्धिनं च, स्तोमं समूहं, घ्नन्; तथा कुवादिकौशिकदृशां परवादिघूकनेत्राणां, सान्द्रां निद्रां ददद् ददानः, तथा महर्षिवृषभैरुपाध्यायादिभिः साधुभिः, पक्षे माठराद्यैः सूर्यपार्श्ववर्तिभिः, नव्यकाव्यकरणादिना मुहुर्वारं वारं, संस्तूयमानः; इति सूरिसूर्ययोः साधर्म्यात् समानमेव व्याख्यानम् ॥ ४६ ॥

ध्यानेनाऽर्तिविनाशिनाऽतिशुचिनेत्यात्मार्थसिद्धेः फलं
हृद्यं हृद्यवधार्य शौर्यसदनं श्रीसूरिकण्ठीरवः ।
अस्योद्यापनकं चिकीर्षुरिव स श्रीतीर्थयात्राभिधं
यात्रां कर्तुमनास्ततः पुरवरात् प्राचीचलत् पारणे ॥४७॥

श्रीसूरिषु कण्ठीरवः सिंहः, ध्यानेन अभ्यन्तरतपसा, अर्तिविनाशिनाऽतिशुचिना परमपवित्रेण, हृद्यं मनोज्ञं, आत्मनोऽर्थसिद्धेः फलं अवधार्य श्रीतीर्थयात्राऽभिधम् अस्य उद्यापनकं चिकीर्षुः कर्तुमिच्छुरिव, ततः पुराल्लाटापल्लिनाम्नः, यात्रां कर्तुमनाः पारणे चातुर्मासकस्य प्राचीचलत् चलति स्मेति ॥४७॥

भूयस्तीर्थनमस्यया फलमयं स्वं जन्म जन्मिप्रियः
कुर्वन् श्रीइलदुर्गनीवृति महातीर्थास्पदेऽथागमत् ।

श्रीजैनप्रतिमाः प्रभुः प्रतिपुरं साक्षादिव श्रीजिना-
नानम्य प्रभुपौरपूजितपदो देशाद् निवृत्तस्ततः ॥४८॥

अथ ततश्चलितः प्रभुर्भूयसां तीर्थानां नमस्यया स्वं जन्म फलमयं फलवत्,कुर्वन्; किं०,जन्मिप्रियः प्राणिवल्लभः, इलदुर्गनीवृति ईडरदेशे, महातीर्थानां गिरिशिरःस्थश्रीऋषभदेवादीनां आस्पदे, अगमत्; तत्र च प्रतिपुरं साक्षात् श्रीजिनानिव श्रीजैनप्रतिमा आनम्य, प्रभुः श्रीइलदुर्गराट् तेन, पौरैश्चामात्यादिभिः पूजितपदः सन्, ततो देशाद् निवृत्तो गूर्जरत्रासंमुखं चलित इति ॥ ४८ ॥

तारङ्गादिषु पुण्यपोषिषु महातीर्थेषु तीर्थङ्करान्
नत्वा संघसखः क्रमाक्रमविदां मुख्यो महर्षीश्वरः ।
नीवृन्निर्जरगूर्जराख्यविषयालङ्कारहारीभवन्
सिन्धुः सिन्धुमिवाऽपराङ्कमविशत् सौराष्ट्रराष्ट्रं क्रमात् ४९

क्रमविदां कल्पविदां मुख्यः,स महर्षीश्वरः सूरिः, पुण्यपोषिषु तारङ्गादिषु महातीर्थेषु, तीर्थङ्करान् श्रीअजितनाथादीन्, नत्वा सङ्घसखः सन्, क्रमाद् नीवृत्सु देशेषु निर्जरो देव इव निवृन्निर्जरो यो गूर्जराख्यविषयस्तस्यालङ्काराय हारीभवन् गूर्जरमण्डलं पावयन्,सौराष्ट्रनामानं राष्ट्रं देशम्, आविशत् प्राविष्टवानिति, यथा सिन्धुनाम्नी नदी, अपराङ्कं पश्चिमाभूषणं, सिन्धुं समुद्रं, विशति तथेत्यर्थः ॥ ४९ ॥

श्रीमत्सङ्घयुतेन तत्प्रथमतः श्रीभूरिणा सूरिणा
यात्रा सिद्धधराधरस्य विदधे तीर्थस्य तीर्थेशितुः ।
सूरिः सूरिजगद्गुरोः पदयुगन्यासश्रियाऽभ्युन्नते
श्रीमत्युन्नतनामधेयनगरे गन्तुं प्रवृत्तस्ततः ॥ ५० ॥

तत्र तत्प्रथमतः सङ्घयुतेन श्रीभूरिणा श्रीसूरिणा तीर्थेशितुस्तीर्थराजस्य, श्रीसिद्धधराधरस्य शत्रुञ्जयस्य तीर्थस्य,यात्रा विदधे कृतेति; ततः सूरिः श्रीविजयसेनसूरिः, सूरिजगद्गुरोः श्रीहीरसूरेः,पदयुगन्यासश्रियाऽभ्युन्नते श्रीउन्नतनामधेयनगरे ऊनाख्ये, गन्तुं प्रवृत्त इति ॥ ५० ॥

गत्वा हीरजगद्गुरोः पदयुगोपास्त्या स्वमासूत्रयन्
पूतं तत्र कियद्दिनीं दिनकरोत्सर्पत्प्रतापः प्रभुः ।
श्रीसङ्घानघसिद्धिसिद्धतटिनीगौरीगुरुः श्रीगुरुः
पद्मोल्लासकरैः करैरिव रवेश्चक्रे प्रतिष्ठां क्षणैः ॥५१॥

तत्र गत्वा कियद्दिनीं यावत् हीरजगद्गुरोः पदयुगोपास्त्या स्वम् आत्मानं पूतं पवित्रम्, आसूत्रयन् रचयन्, प्रभुः क्षणैरुत्सवैः, किं०, एकत्र पद्मायाः, अन्यत्र पद्मानां पङ्कजानां उल्लासकरैः,अत एव रवेः करैरिव सूर्यकिरणैरिव, प्रतिष्ठां चक्रे,प्रभुः किं०, दिनकरस्तद्वदुत्सर्पत्प्रतापः, तथा श्रीसङ्घस्याऽनघा सिद्धिरेव सिद्धतटिनी गङ्गा तस्यां गौरीगुरुर्भवानीगुरुर्हिमाद्रिरिति यावत् ॥ ५१ ॥

सूर्येणेव नभः पुनः पुनरिदं नाभीशितुः सूनुना
स्वैः पादैरधिगम्यते स्म विभुना तीर्थं सदाऽनर्थहृत् ।
सेवाऽस्याऽसुखवल्लिपल्लवहिमं तत् सांप्रतं नः पुनर्मत्वेवं पुनरीयिवान् मुनिपतिः शत्रुञ्जयोर्वीधरम् ॥५२॥

इदं तीर्थं नाभीशितुः सूनुना श्रीऋषभदेवेन, पुनः पुनः स्वैः पादैः अधिगम्यते स्माऽऽश्रितमिति, यथा सूर्येण नभइवेति दृष्टान्तः, तत् तस्मात्, अस्य सेवा, किं०, असुखवल्लिपल्लवेषु हिममिव हिमं, एषा नः सांप्रतं युक्ता, एवं मत्वा मुनिपतिः

सूरिः पुनरपि शत्रुञ्जयोर्वीधरम् ईर्यिवान् आगतवानिति ॥५२॥

पाथोजन्मकरं गवां गणधरं प्रौढप्रतापोद्धुरं
दृष्ट्वा सूरिवरं तदा मुमुदिरे यात्रार्थमभ्यागताः ।
लोका मालवमेदपाटमरुभूमुख्या असंख्या भृशं
सामोदाः कमलाश्रयाः सदलिकाः पद्मा इवाऽहर्मणिम्५३

तदा तस्मिन्नवसरे, गुरुं दृष्ट्वा मालवमेदपाटमरुभूमुख्या-असंख्या लोका ये यात्रार्थमभ्यागतास्ते तदा मुमुदिरे हर्षं प्राप्ता इति, अहर्मणिं सूर्यं, पद्मा इव, यथा पद्मा अहर्मणिं दृष्ट्वा मोदन्ते; सूरिवरं सूर्यं च किं०, पाथोजन्म कमलं तद्वत् करौ यस्य, रवेस्तु पद्मपाणित्वात्, तथा गवां रुचां वाचां च गणं धरतीति, प्रौढप्रतापोद्धुरं स्पष्टं, पद्मा लोकाश्च सामोदाः कमलाश्रया इति तु विशेषणद्वयं सुबोधम्, सदलिका एकत्र सल्ललाटाः, अन्यत्र सद्भ्रमरका इत्यादि ॥ ५३ ॥

श्रीसिद्धाद्रिरसावितः सुखकरः सूरीश्वरोऽसावितः
श्रीसंघे युगपद् बभूवतुरुभौ प्रीत्यै तदा संगतौ ।
कामोल्लासकरौ कुचाविव पयःपूर्णौ स्वमातुः शिशा-
वभ्येतौ मधुमाधवाविव जने यद्वा वसन्ताऽऽगमे ॥५४॥

इतोऽसौ श्रीसिद्धाद्रिः शत्रुञ्जयः, इतोऽसौ सुखकरः सूरीश्वरः, एतौ उभौ तदा संगतौ युगपत् समकालं, श्रीसंघे प्रीत्यै बभूवतुः, इवेति दृष्टान्तोपनये, यथा शिशौ मातुः पयःपूर्णौ, पुनः, कामोल्लासकरौ, कुचौ भवतः; यद्वाऽथवा, जने वसन्ताऽऽगमे मधुमाधवौ चैत्रवैशाखौ, अभ्येतौ प्रीत्यै भवत-इति ॥ ५४ ॥

सेवां साधु विधाय तीर्थतिलके भूयस्तरां सादरैः

पौरैः पूजितपादपद्मयमलः श्रीपादलिप्तात् पुरात् ।
वातात् पूरितपोतवद् यतिपतिः श्रीस्तम्भतीर्थाश्रय-[1]
श्रीसङ्घाग्रहतश्चचाल नगरं श्रीस्तम्भतीर्थं प्रति ॥५५॥

यतिपतिः सूरिः, यथा वातात् पूरितः पोतः, तथा श्रीस्तम्भतीर्थीयसङ्घाग्रहतः श्रीस्तम्भतीर्थं नगरं प्रति चचालेत्यन्वयः । कुत इत्याह—श्रीपादलिप्तात् पालीताणाऽऽख्यात् पुरात् कथं, तीर्थतिलके विमलाचले, साधु सेवां विधायेति, अन्यत् सुगमम् ॥ ५५ ॥

प्रेयःपुण्यपरिच्छदः सुकमलः कामं लसन्मानसः
सूरीशः कविचित्तचारुगमनः पद्माकरप्रीतिभाक् ।
हंसोऽम्भोजवनीमिवाऽवनिमलङ्कुर्वन् क्रमाद् विक्रमी
गाङ्गं कूलमिवाऽनुकूलचरणः श्रीस्तम्भतीर्थं ययौ ॥५६॥

सूरीशः अवनिं भूमिं, अलङ्कुर्वन् श्रीस्तम्भतीर्थं ययावित्यन्वयः, इव यथा, हंसः अम्भोजवनीं अलङ्कुर्वन् गाङ्गं कूलं यातीति, सूरीशो हंसश्च किं०, प्रेयो वल्लभं पुण्यमेव परिच्छदो यस्य, अथवा प्रेयान् पुण्यः परिच्छदो यस्येति द्वयोः समम्; पुनः सुकमल इत्यपि द्वयोः स्पष्टम्, तथा कामम् अत्यर्थं, लसद् मानसं मनः सरश्च यस्येति, तथा कवीनां चित्ते, तथा कवेः ब्रह्मणश्चित्ते चारु गमनं गतिर्यस्येति कविहृदयसंक्रान्तत्वात्, तद्गतिकत्वाच्च; तथा पद्माकरे ज्ञानादिलक्ष्म्याकरे, पक्षे तडागे कमलनिकरे वा प्रीतिभाक्; तथाऽनुकूलचरण इत्यपि द्वयोस्तुल्यम्, शेषं सुगमम् ॥ ५६ ॥

अथ गुरोः संमुखोत्सवं वर्णयति—

आगच्छद्भिरगोपमैरभिमुखं दन्ताबलैः सद्बलैः

[1] 'श्रीस्तम्भतीर्थीयसच्छ्री-' इति पाठान्तरम् ।

सिक्ता भूर्मदवारिभिर्मृगमदस्तोमैरिवोत्सौरभैः ।
कुम्भेभ्यः प्रचुरैः पतद्भिरभितः सिन्दूरपूरैरभूद्
भू रक्ताभिनवैर्भरैरिव रुचां पाथोजिनीप्रेयसः ॥ ५७ ॥

प्रभोः प्रवेशसमयेऽभिमुखं आगच्छद्भिः दन्तावलैः हस्तिभिः, किं०, अगोपमैः पर्वतप्रायैः, मदवारिभिः मृगमदस्तोमैरिव उत्सौरभैः प्रबलसौरभ्यैः, भूः सिक्ताः तथा पाथोजिनीप्रेयसः सूर्यस्य उद्गच्छत्त्वात् अभिनवैः रुचां भरैरिव कुम्भेभ्यः पतद्भिः प्रचुरैः सिन्दूरपूरैर्भू रक्ताऽभूदिति, क्वचिदिति गम्यम् ॥ ५७ ॥

रङ्गद्भिस्तुरगैः प्रभोः प्रविशतः पुर्यां तदाऽध्वा बभौ
स्कन्धावार इव प्रमोदपृथिवीनाथस्य सार्थोन्नतेः ।
आसीत् पुण्यमनोरथैरिव रथै रथ्या सुरथ्या तदा
देवैर्द्यौरिव वर्यवेषवसनैर्लोकैः पुरं तद् बभौ ॥ ५८ ॥

तदा तत्र क्षणे, पुर्यां प्रभोः प्रविशतः अध्वा मार्गः, रङ्गद्भिरुच्छलद्भिः, तुरगैर्बभौ शोभते स्म, इवोत्प्रेक्ष्यते—प्रमोदपृथिवीनाथस्य स्कन्धावारो राजधानी, कीदृशस्य, सार्था उन्नतिः, अथवा सार्थस्य समुदायस्योन्नतिर्यस्येति; तथा तदा रथ्या पुण्यमनोरथैरिव रथैः सुरथ्या सार्थिका, आसीद् जाता, तथा वर्यवेषस्य वसनं आच्छादनं येषां तैः, लोकैः पौरैः, तत् पुरं द्यौः स्वर्गः, देवैरिव बभौ ॥ ५८ ॥

पुर्यां तत्र तदा प्रभोः प्रविशतः प्रोत्तम्भितैश्चत्वरे
रेजे काञ्चनकुम्भशालिभिरलं श्रीकारणैस्तोरणैः ।
बिभ्रत्यः कलसान् जलैर्गतमलैः पूर्णान् स्त्रियोऽभ्यागमन्
रूपैर्भूरिभिरष्टसिद्धय इव स्वःकुम्भभृन्मस्तकाः ॥५९॥

तदा तत्र पुर्यां प्रभोः सूरेः प्रविशतश्चत्वरे चत्वरे चतुष्पथे चतुष्पथे, काञ्चनकुम्भशालिभिः, पुनः, श्रीकारणैः तोरणैः प्रोत्तम्भितैः रेजे, तथा स्त्रियः निर्मलैर्जलैः पूर्णान् कलसान् बिभ्रत्योऽभ्यागमन् संमुखा आगता इति । इवोत्प्रेक्ष्यते—स्वःकुम्भभृन्मस्तकाः शिरःस्थकामकुम्भा अष्टसिद्धय इवाभ्यागता इति ५९॥

स्थाने स्थान उदारमौक्तिकभरैः क्लृप्तैर्लसत्स्वस्तिकै-
र्भेजे भ्रान्तिभरश्रमादिव तदोत्तीर्णं गणैर्ज्योतिषाम् ।
संरुद्धाम्बरकेतुकेतुभिरलं तीव्रातपोन्माथिभिः
सच्छायं पुरवर्त्म तत्र विदधे पाथोदवृन्दैरिव ॥ ६० ॥

गुरुप्रवेशे सति उदारैर्मौक्तिकभरैः क्लृप्तैः रचितैः, स्वस्तिकैः स्थाने स्थाने भ्रेजे। उत्प्रेक्ष्यते—तदा ज्योतिषां गणैः भ्रान्तिभरश्रमात् उत्तीर्णमिव, तथा तत्र संरुद्धोऽम्बरकेतुः सूर्यो यैस्तैरेवंभूतैः, केतुभिर्ध्वजैः, पुरवर्त्म सच्छायं विदधे, किं०, तीव्रातपोन्माथिभिरिति व्यक्तम्, पाथोदानां मेघानां वृन्दैरिवेत्युत्प्रेक्षा ॥ ६० ॥

जीमूतैरिव चातकेषु पयसां पूराः प्रकामोन्नतै-
र्दीयन्ते स्म धनानि दानिविबुधैः श्राद्धैर्जनेष्वर्थिषु ।
वीणावेणुमृदङ्गमुख्यविविधाऽऽतोद्यैर्मुदा वादितैः
शब्दाद्वैतभृतं भृशं पुरमभूद् निःशेषमेतत् तदा ॥६१॥

तदा गुरोः प्रवेशे सति, दानिषु विबुधैर्विचक्षणैः देवैर्वा, श्राद्धैरर्थिषु जनेषु धनानि दीयन्ते स्म; यथा प्रकाममुन्नतैर्जीमूतैर्मेघैः, चातकेषु पयसां पूरा दीयन्ते, तथा तदा निःशेषमेतत् पुरं मुदा वादितैर्वीणावेणुमृदङ्गमुख्यविविधातोद्यैर्भृशं शब्दैरद्वैतामिव भृतं शब्दाद्वैतभृतम्, अभूत् ॥ ६१ ॥

इति महसि मनोज्ञे जायमाने जयश्री-
भुजयुगलविराजत्कन्धराबन्धुरोऽयम् ।
रय इव सुरसिन्धोः स्तम्भतीर्थाब्धितीर्थं
घनकमलविलासी सूरिसिंहो विवेश ॥ ६२ ॥

इति व्यावर्णितरीत्या, मनोज्ञे महसि उत्सवे, जायमाने सति, सूरिसिंहः श्रीविजयसेनसूरिः, किं०, जयश्रियो यद् भुजयुगलं तेन विराजन्ती कन्धरा तया बन्धुरो रम्यः, सर्वत्र जयलक्ष्म्याऽऽलिङ्गित इति, इत्थंभूतः सूरिः, स्तम्भतीर्थमेवाऽब्धितीर्थं, क इव, सुरसिन्धोर्गङ्गाया रय इव, विवेश प्रविष्टः, सूरिः रयश्च किं०, घना कमला येषां ते घनकमला महेभ्यास्तैर्विलसतीत्येवंशीलः, पक्षे घनं कमलं जलं तेन तत्र वा विलासीति, अशेषं शेषं सुगमम् ॥ ६२ ॥ अत्र सर्गे शार्दूलविक्रीडितं छन्दः, प्रान्ते तु मालिनी; तयोर्लक्षणं तु प्रागेवोक्तमिति ॥

• • • • • • • • • • • • • • • • • • • • • • • • • • • • • • • • • •

इतीति कण्ठ्यम् ॥

इति सकलसुविहितसभासार्वभौमसमानपण्डितमण्डलीमौलिमौलीयमानपण्डितश्रीकमलविजयगणिसुशिष्यमुख्यपण्डितपुरन्दरमुख्यपण्डितश्रीविद्याविजयगणिविनेयवाचकश्रीगुणविजयगणिविरचितायां श्रीविजयप्रदीपिकाभिधानधारिकायां सुखावबोधिकायां श्रीविजयप्रशस्तिमहाकाव्यटीकायां षोडशः सर्गोऽर्थतः समर्थितः ॥

अर्हम

# अथ सप्तदशः सर्गः ।



प्रणम्य प्रथमं सार्वं सर्वश्रेयःप्रपञ्चकम् ।
अथ विवियते किञ्चित् स्वोपज्ञं सर्गपञ्चकम् ॥ १ ॥

अथ मूलसंख्यातः सप्तदशः सर्गः समारभ्यते-

स्वामी मुनीनामथ मौक्तिकौघ-
स्वर्णादिसत्तोरणहारिणं सः ।
श्रेयाञ् श्रियोपाश्रयमस्तसाद-
माद्यन्मुदां मन्दिरमाससाद ॥ १ ॥

अथ स मुनीनां स्वामी, किं०, श्रिया चतुर्विधसङ्घशोभया, श्रेयान् अतिप्रशस्यः, पुनः, अस्तसादानां निर्विषादानां माद्यन्मुदां मन्दिरमुपाश्रयं, किं०, मौक्तिकैः स्वर्णादिभिश्च सन्ति प्रशस्तानि यानि तोरणानि तैर्हारिणं मनोज्ञम्, आससादेत्यागतवान् ॥१॥

वृत्तद्वयेन तमेव वर्णयति-

प्राचीपतेः संसदपि प्रसिद्धा
सौभाग्यमुग् यस्य पुरो बभूव ।
सालोकलोकस्य तमोनिहन्तुः
खद्योतपोतस्तरणेरिवोच्चैः ॥ २ ॥

यस्योपाश्रयस्य पुरः प्राचीपतेः शक्रस्यापि, संसत् सभा सुधर्मा नाम्नी, सौभाग्यमुग् बभूव स्वं सौभाग्यगर्वं मुमोचेत्यर्थः, इव यथा, तरणे रवेः पुरः, खद्योतपोतः, तरणेः उपाश्रयस्य च किं०, सालोका उपाश्रयपक्षे सज्ञाना लोका यस्माद् यत्र वा, तरणि-

पक्षे सालोकाः सोद्द्योता लोका यत्र तस्य, पुनस्तमसोऽघस्य, पक्षे ध्वान्तस्य च निहन्तुर्घातकस्येति दृष्टान्तः ॥ २ ॥

गतोपमानप्रतिमानमेनं
दृष्ट्वेति नः स्पष्टतमोऽस्ति तर्कः ।
चक्रे भुवीमं ननु विश्वकर्मा
नान्यो यदीदृग् नयनाध्वनीतः ॥ ३ ॥

एनमुपाश्रयं, किं०, गते उपमानप्रतिमाने तुलाप्रतिबिम्बे यस्य तं निरुपमं निष्प्रतिबिम्बं चेत्यर्थः, दृष्ट्वा नोऽस्माकं, स्पष्टतमः स्फुटतरः,तर्को विचारोऽस्ति;तमेवोत्तरार्धेनाह ननु निश्चितम्,इममुपाश्रयं, विश्वकर्मा देववर्धकी, चक्रे, तत्रापि हेतुमाह–यद् ईदृक् अन्य उपाश्रयो नयनाऽध्वनि नेत्रपथे, न इतः प्राप्तो न दृष्ट इति ॥३॥

स्थाने मुनीनामिह तत्र सत्रे
श्रीणां स्थितः श्रीश्रमणाधिराजः ।
जन्मोदधौ पोतमिवाततान
मुत्संनिवेशं सुकृतोपदेशम् ॥ ४ ॥

तत्र मुनीनां स्थाने, किं०, श्रीणां सत्रे गृहे, श्रीश्रमणाधिराजः सूरिः, स्थितः सन्; इवोत्प्रेक्ष्यते–जन्मोदधौ भवार्णवे, पोतं प्रवहणमिव, तारकत्वात्, सुकृतोपदेशम्, किं०, मुदां संनिवेशम्, आततानेति कृतवान्, व्याख्यानमिति भावः ॥ ४ ॥

प्रासादबिम्बादिविधानपूर्वं
काराप्यते यद् भगवत्प्रतिष्ठा ।
श्रीतीर्थयात्रा क्रियतेऽतिगुर्वी
गच्छाधिपाचार्यपदोत्सवश्च ॥ ५ ॥

एकोऽयमुपदेशो यत्–प्रासादबिम्बादिनिर्माणपूर्वकं भगव-त्प्रतिष्ठा काराप्यते विधाप्यते, द्वितीयश्चायं यत्–अतिगुर्वी महती, तीर्थयात्रा क्रियते, तृतीयश्चायम्–च पुनः, गच्छाधिपाचार्यपद-व्या उत्सवो विधीयते चेति ॥ ५ ॥

न्यायार्जितानां निजसंपदां स-
ज्ज्ञानैर्जिनैः स्फारतमा फलानाम् ।
गार्हस्थ्यभाजां गदिता त्रयीयं
भूतोद्भवद्भाविभवत्रयश्रीः ॥ ६ ॥

सज्ज्ञानैर्ज्ञानवद्भिर्जिनैः, न्यायेन अर्जितानां निजसंपदां गा-र्हस्थ्यभाजां गृहमेधिनाम्, इयं फलानां त्रयी, किं०, भूतोद्भवद्-भाविभवत्रये अतीतवर्तमानानागतरूपे जन्मत्रये श्रीर्यस्याः सा, स्फारतमाऽतिस्फारा, फलत्रयी उक्तपूर्वा, गदिता प्रोक्तेति ॥६॥

तत्र द्रुमाणामिव पारिजात-
आस्तेऽभिजातः सुदृशां वरेण्यः ।
गाम्भीर्यधैर्याऽऽदिगुणाब्धिमल्लः
श्रीमल्लनामाऽऽस्तिकहस्तिमल्लः ॥ ७ ॥

तत्र स्तम्भतीर्थे, द्रुमाणां पारिजात इव, सुदृशां सम्यग्दृ-ष्टीनां,वरेण्यो वर्यः,पुनः,अभिजातः कुलीनः,श्रीमल्लनामा,किं०, आस्तिकेषु श्रद्धालुषु हस्तिमल्ल ऐरावणस्तन्मुख्यत्वात्, पुनः किं०, गाम्भीर्यधैर्यादयो ये गुणास्तद्रूपो योऽब्धिस्तत्र मल्लो मी-नस्तन्निमग्नत्वात्, यदनेकार्थः "मल्लो मीने" इति, आस्ते वर्तते॥७॥

काव्यचतुष्टयेन तस्यैव वर्णनम्–

यत्कीर्तिरार्तिक्षितिकृत् समस्तं
व्याप्नोति विश्वं विशदाऽवतारा ।

जह्नोस्तनूजेव पिनाकपाणे-

मूर्धानमाप्तेन्दुकलाविलासा ॥ ८ ॥

यस्य श्रीमल्लनाम्नः श्राद्धस्य कीर्तिः, पिनाकपाणेः शम्भोः, मूर्धानं जह्नोस्तनूजेव गङ्गेव, किं०, अर्तेः क्षयकरी, पुनः, विशदावतारा शुभ्रत्वात्, पुनः, अत एव आप्तः सत्यः इन्दुकलावद् विलासो यस्याः सा, गङ्गापक्षे आप्तः प्राप्तः इन्दुकलानामेकस्थानवर्तित्वाद् विलासो लीला ययेति सा, समस्तं विश्वं व्याप्नोतीति ॥८॥

दानैरमानैः प्रसभासमानैः

पुण्यानुरागैर्गरिमाऽमरागैः ।

यः श्रेष्ठिशिष्टः कलयन्निहास्ति

ख्यातिं ग्रहेष्वर्क इव प्रजासु ॥ ९ ॥

यः श्रेष्ठिशिष्टः अमानैर्घनैः दानैः, किं०, प्रसभमसमानैर्निरुपमैः, पुनः, पुण्याऽनुरागैर्धर्मरागैः, किं०, गरिमाऽमराऽगैर्माहात्म्यमेरुभिः, ग्रहेषु अर्क इव प्रजासु लोकेषु, ख्यातिं कलयन्नस्तीति ॥ ९ ॥

दानाऽऽदिभिर्यः सुकृतैर्विभाति

चतुर्भिरिभ्योत्तम उन्नताभैः ।

उन्मूलयन् क्लेशलतावितानं

दन्तैरिवाऽस्वप्नपतिद्विपेन्द्रः ॥ १० ॥

यः श्रीमल्लः, इभ्योत्तम आढ्यमुख्यः, दानादिभिश्चतुर्भिः सुकृतैर्दानशीलतपोभावैः, दन्तैः अस्वप्नपतिद्विपेन्द्रः इन्द्रहस्तीव, सुकृतैर्दन्तैश्च किं०, उन्नता आभा शोभा येषां तैरिति, किं कुर्वन्, क्लेशलतानां वितानं समूहम्, उन्मूलयन् विभातीत्युक्तिलेशः ॥१०॥

सर्वज्ञवाचां श्रवणैः प्रधान-
पूजाभिरर्हत्पदपङ्कजानाम् ।
संसेवनैश्च व्रतिसत्तमानां
रत्नत्रयीति क्रियतेऽमुनाऽर्घ्या ॥ ११ ॥

सर्वज्ञवाचां अर्हद्गिरां, श्रवणैः आकर्णनैः, पुनः, अर्हत्पद-पङ्कजानां जिनचरणकमलानां, प्रधानपूजाभिः विशिष्टार्चाभिः, च पुनः, व्रतिसत्तमानां साधूत्तमानां, संसेवनैर्भजनैः,इति व्याख्यात-स्वरूपैस्त्रिभिर्लक्षणैः, अमुना श्रेष्ठिना श्रीमल्लनाम्ना, ज्ञानदर्शनचा-रित्राऽऽराधनरूपा रत्नत्रयी, अर्घ्या शोभमाना, क्रियत इति ॥११॥

रत्नत्रयाऽऽवासनिवासरत्न-
मेनं गुरूणामुपदेशमाप्य ।
श्रेयोऽन्तरायक्षितिहस्तिमल्लः
श्रीमल्लसाधुः स हृदाऽतिहृष्टः ॥ १२ ॥

गुरूणां श्रीविजयसेनसूरीणाम्, एनं पूर्वोक्तम्,उपदेशं सुकृत-फलव्याख्यानलक्षणं, किं०, रत्नत्रयरूपो य आवासस्तत्र नि-वासरत्नं दीपं तदुद्योतकत्वात्, आप्य प्राप्य, श्रुत्वेति यावत्; स श्रीमल्लसाधुः, किं०, श्रेयसि धर्मे योऽन्तरायो विघ्नस्तस्य क्षितौ विघ्नध्वंसे हस्तिमल्लो गणेशः, "हस्तिमल्लो हेरम्बे" इत्यने-कार्थत्वात्, हृदा मनसा, अतिहृष्टोऽतिहर्षितवान् ॥ १२ ॥

अथ यच्चक्रे तद् वृत्तद्वयेनाह–

लक्ष्मीलतायाः फलमेतदेव
सम्यग् विदंश्चेतसि स प्रचेताः ।
श्रेष्ठीश आचार्यपदोत्सवार्थ-

मर्थव्ययं कर्तुमना मनस्वी ॥ १३ ॥

श्रीगूर्जरत्रामरुमेदपाट-

सौराष्ट्रसिन्ध्वादिषु मण्डलेषु ।

सर्वेष्वथो कुङ्कुमपत्रिकाणां

पात्रीचकाराऽखिलसङ्घलोकम् ॥ १४ ॥

लक्ष्मीलतायाः संपद्वल्लेः, एतदेव फलं चेतसि मनसि, विदन् जानन्, स श्रेष्ठीशः, किं०, प्रचेताः प्रमना हृष्टमानस इति, पुनः किं०, कर्तुमनाः कर्तुकाम इति, किं, अर्थव्ययं धनोत्सर्गं, किमर्थमित्याह—आचार्यपदोत्सवार्थं गुरुपट्टधरपदमहोत्सवायेति ॥ १३ ॥ श्रिया युक्ता गूर्जरत्रा प्रसिद्धा, मरवो मरुस्थलीनामका देशा नवकोट्टप्रतीताः, मेदपाटः प्राग्वर्णित इति, सौराष्ट्रः शत्रुञ्जयोज्जयन्ताद्रितीर्थपवित्रः, सिन्धुदेशः सिन्धुनाम्न्या नद्योपलक्षितः,आदिशब्दाद् मालवमेवाताऽऽदिग्रहः,तत इत्यादिमण्डलेषु देशेषु, सर्वेष्वपि समस्तेषु, अखिलसङ्घलोकं कुङ्कुमपत्रिकाणां लोके कुंकोतरीतिप्रतीतानां, पात्रीचकार हर्षपत्रकप्रेषणद्वारा आहूतवानिति ॥ इति युग्मव्याख्या ॥ १४ ॥

ते स्वस्वदेशाद् वरवस्त्रवेशाः

श्रेयोनिवेशाः समुपेयिवांसः ।

श्रीस्तम्भतीर्थे नगरेऽथ लोकाः

पान्था जलाऽऽढ्ये सरसीव शीघ्रम् ॥ १५ ॥

अथ ते लोकाः, किं०, वरवस्त्राणां वेशः परिधानं येषां ते, पुनः किं०, श्रेयोनिवेशाः सुकृतस्थानानि, स्वस्वदेशात् श्रीस्तम्भतीर्थे नगरे समुपेयिवांसः प्राप्ताः; यथा पान्थाः पथिकाः, जलाऽऽढ्ये सरसि तटाक इति ॥ १५ ॥

तत्राथ भूयांस उपेयिवांसो
निर्ग्रन्थसार्थाः सपरिच्छदाश्च ।
तुङ्गे विहङ्गाः फलपुष्पपत्र-
पूर्णे घनच्छाय इवावनीजे ॥ १६ ॥

अथ तत्र नगरे, च पुनः, गीतार्थसार्थाः पण्डितसङ्घाः,किं०, सपरिच्छदाः परिकरपरिवृताः, पुनः, भूयांसो बहवः, उपेयिवांस आगता इति, दृष्टान्तमुत्तरार्धेनाह–इव यथा, अवनीजे भूरुहे, किं०, तुङ्गे उच्चे, पुनः, फलपुष्पपत्रैः पूर्णे, पुनः, घनच्छाये छायाशालिनि, विहङ्गाः पक्षिण इति ॥ १६ ॥

तैरागतैः सङ्घजनैः श्रियाऽऽढ्यैः
सर्वैः सुवेषैः शुशुभे पुरं तत् ।
पाथोरुहौघैः सरसीव काम-
मामोदिभिः फुल्लतमाऽऽस्यकोशैः ॥ १७ ॥

तैः सङ्घजनैः श्रियाऽऽढ्यैः, पुनः, सुवेषैः शोभनवस्त्रैः, तत्र बन्दिरे आगतैः, तत् पुरं शुशुभ इत्यन्वयः; इव यथा, पाथोरुहौघैः पद्मप्रकरैः, सरसी सरः, विभाति, किं०, कामम्, आमोदिभिर्गन्धवद्भिः, सङ्घपक्षे हर्षवद्भिः, फुल्लतमाऽऽस्यकोशैः स्मेरतराननकुड्मलैरिति द्वयोस्तुल्यं विशेषणम् ॥ १७ ॥

श्रीसङ्घलोकैः सरलावलोकैः
कोकैरिवाम्भोरुहबन्धुबिम्बम् ।
वीक्ष्यैनमाचार्यमहार्यवीर्यं
लेभे प्रमोदः प्रगुणस्तदानीम् ॥ १८ ॥

श्रिया युक्ताः सङ्घलोकाः, साधुसाध्वीश्राद्धश्राद्धीरूपास्तैः,

अथवा प्राक्तने वृत्ते सङ्घजनैरिति पदस्य सद्भावात् तत्र श्राद्ध-श्राद्धीजनैरिति व्याख्येयम्, अत्र तु श्रीसङ्घलोकैरिति साधुसाध्वीलक्षणैः श्रीसङ्घलोकैः सप्तशतीमितैरिति शेषः । पुनः किं०, सरलावलोकैर्निष्कपटमार्गदर्शिभिः, एनमाचार्यं, किं०, अहार्यं हर्तुमशक्यं वीर्यं यस्य तं, वीक्ष्य, तदानीं प्रगुणः पटिष्ठः, प्रमोदो लेभे लब्ध इति, कोकैश्चक्रवाकैः, अम्भोरुहबन्धुबिम्बं सूर्यमण्डलमिवेति दृष्टान्तोत्प्रेक्षे ॥ १८ ॥

अथ दशभिः पदोत्सवसमये नगरवर्णनम्—

निर्दग्धकृष्णागुरुधूपधूम-
स्तत्रोर्ध्वमेति स्म तदा तथोच्चैः ।
जज्ञे यथा पथ्यपि निर्जराणां
जह्नोः सुतावत् तरणेस्तनूजा ॥ १९ ॥

तदा तस्मिन् महसि, तत्र स्तम्भतीर्थे, निर्दग्धो यः कृष्णागुरुधूपस्तस्य धूमः, तथा तेन प्रकारेण, ऊर्ध्वं एति स्म उच्चैर्गतवान्, यथा निर्जराणां पथि आकाशे, जह्नोः सुतावत् गङ्गावत्, तरणेस्तनूजा यमुना, जज्ञे, श्यामधूमच्छलाद् गमने यमुनाऽपि जातेत्याश्चर्यम् ॥ १९ ॥

दुग्धेन सिक्ता पुरभूर्वधूभि-
र्बभौ तदास्यैः प्रतिबिम्बितैर्द्राक् ।
कार्तस्वरैस्तामरसैरनूना
स्रोतस्विनी मन्युभुजामिवागात् ॥ २० ॥

पुनः, वधूभिः स्त्रीभिः, तत्पुरभूस्तीर्थपृथ्वी, दुग्धेन सिक्ता सती, तदास्यैस्तासां मुखैः, किं०, प्रतिबिम्बितैः संक्रान्तैः, बभौ शोभते स्म, तत्र देशे हि वीवाहादौ दुग्धेन भूमिः सिच्यत-

इति समर्थोऽयमर्थः। इवोत्प्रेक्ष्यते—कार्तस्वरैः काञ्चनैः, तामरसैः कमलैः, अनूना पूर्णा, मन्युभुजां क्रतुभुजां सुराणामिति, स्रोतस्विनी तटिनी गङ्गा, आगतेति ॥ २० ॥

गानध्वनिस्तत्र पुरे तदाऽभात्

गान्धर्ववर्गस्य भृशं प्रशस्यः ।

भूभृद्वनोर्व्यामिव वारिवाह-

प्रोत्साहितस्याऽहिभुजां व्रजस्य ॥ २१ ॥

तदा तत्र नगरे, गान्धर्ववर्गस्य गायनगणस्य, गानध्वनिर्गीतनादः, अभात् शोभते स्मेत्यन्वयः; उत्तरार्धेन दृष्टान्तोत्प्रेक्षे प्राह—भूभृद्वनोर्व्यां गिरिवनभूमाविव, अहिभुजां मयूराणां, व्रजस्य, किं०, वारिवाहेन मेघेन प्रोत्साहितस्य प्रहृष्टचेतस इति।२१।

उत्तम्भिताः शालिदुकूलक्लृप्ता

रेजुर्ध्वजास्तत्र तदाऽतितुङ्गाः ।

एनां पुरीं भूषयितुं प्रकाम-

मागुस्तनूजा इव वैजयन्ताः ॥ २२ ॥

तत्र पुरे, तदाऽतितुङ्गा ध्वजाः केतवः, किं०, उत्तम्भिता गृहाट्टालकशृङ्गादौ लम्बिताः,पुनः किं०,शालिभिर्दुकूलैः पट्टकूलैः, क्लृप्ताः कृताः, रेजुः शोभन्ते स्मेत्यन्वयः; इवोत्प्रेक्ष्यते—एनां पुरीं भूषयितुं एतन्नगरविभूषाकरणाय, वैजयन्तस्य इन्द्रध्वजस्य तनूजाः पुत्रा इव वैजयन्तास्तनूजाः, आगुः प्राप्ता इहेति भावः ॥२२॥

सर्वत्र पुष्पप्रकरः प्रक्लृप्त-

स्तत्राबभौ भृङ्गभराभिरामः ।

पुण्यप्रकर्षैः प्रचुरैः प्रजानां

क्रीडावनं शाक्रमिवाजगाम ॥ २३ ॥

तत्र पुरे तदेति सर्वत्र संबन्धनीयं, तेन तत्र सर्वत्र पुष्पप्रकरः पञ्चवर्णप्रसूनव्रजः, किं०, भृङ्गभरैर्भ्रमरोत्करैरभिरामो रम्यः, पुनः, प्रक्लृप्तो रचितः सन्, आबभौ शुशुभे; इवोत्प्रेक्ष्यते—शक्रस्य इदं शाक्रं, क्रीडावनं नन्दनवनं, प्रजानां लोकानां, पुण्यप्रकर्षैराजगाम प्राप्तमत्रेति भावः ॥ २३ ॥

सन्मौक्तिकस्वस्तिकपङ्क्तिरुच्चै-

स्तत्र प्रतिस्थानमभात् तदानीम् ।

रत्नाकरैरत्र महे निजर्द्धिः

शस्ता समस्तैरपि ढौकिता किम्? ॥ २४ ॥

तत्र प्रतिस्थानं प्रतिपदं प्रतिगृहं वा, सन्मौक्तिकस्वस्तिकपङ्क्तिः मुक्ताफलमयी स्वस्तिकावलिः, अभात् भाति स्मेति; किमित्युत्प्रेक्षायां, अत्र महे आचार्यपदोत्सवे, किं०, रत्नाकरैः समस्तैः समुद्रैरपि, निजर्द्धिः स्वा श्रीः मणिमुक्ताविद्रुमादिरूपा, ढौकिता प्राभृतीकृतेति ॥ २४ ॥

व्यभादसौ घौसृणघोललिप्तो

द्रङ्गः सरङ्गः सकलस्तदानीम् ।

ब्रह्मद्रुमोद्यानमिव प्रसून-

पुञ्जैः समाकीर्णमिहावतीर्णम् ॥ २५ ॥

असौ द्रङ्गः, किं०, घौसृणेन घोलेन कौङ्कुमलेपेन लिप्तः, अत एव सरङ्गः, सकलः समस्तोऽपि, व्यभात् शुशुभे; "पलाशो ब्रह्मपादपः" इति वचनाद् ब्रह्मद्रुमोद्यानं पलाशवनमिव, इह नगरे किं प्रसूनपुञ्जैः पुष्पोत्करैः, आकीर्णं अवतीर्णमुत्तीर्णमिति ॥२५॥

सद्वल्लकीवेणुमृदङ्गचङ्ग-

भेरीमुखैस्तूरभरैर्नदद्भिः ।
अभ्यर्णवर्त्यर्णवनादमिश्रै-
रासीत् तदा शब्दमयीव सा पूः ॥ २६ ॥

सती शोभना वल्लकी वीणा वेणुर्वंशवाद्यं लोके वांसलीति प्रतीतम्, मृदङ्गो मर्दलः, चङ्गोऽपि वाद्यविशेषो मरुदेशपूर्वदेशादिप्रसिद्धः, अथवा चङ्गा मनोज्ञा या भेरी दुन्दुभिः तत्प्रमुखैः, तूरभरैर्वाद्यव्रजैः, किं०, नदद्भिः वदद्भिः, पुनः किं०, अभ्यर्णवर्ती समीपस्थायी योऽर्णवः समुद्रः तन्नादेन मिश्रैः, सा पूर्नगरी त्रम्बावती, शब्दमयीव आसीत् केवलशब्दाद्वैता जातेति ॥ २६ ॥

गानैः प्रधानैर्मदिरेक्षणानां
सा पूर्बभौ मञ्जुलमङ्गलाऽऽढ्यैः ।
ताम्राक्षकान्ताकलकूजितौघै-
रुद्यानधात्रीव मधौ समृद्धे ॥ २७ ॥

मदिरेक्षणानां स्त्रीणां प्रधानैर्गानैः, पुनः किं०, मञ्जुलानि मनोहराणि मङ्गलानि मङ्गलमूलानि श्रीऋषभदेवश्रीशान्तिनाथविवाहप्रबन्धपुण्यप्रकाशरासादिरूपगीतानि तैराढ्यैः, सा पूर्नगरी, बभौ; इव यथा, मधौ वसन्ते, समृद्धे संपन्ने सति, ताम्राक्षकान्तानां कोकिलानां कलैः रम्यैः कूजितौघैः काकलीनिकरैः, उद्यानभूमिर्वनस्थलीत्यर्थः ॥ २७ ॥

नृत्तं वितेनुर्वरवारनार्यः
सर्वत्र तत्राद्भुतकृज्जनानाम् ।
गेहे सुराणामिव हृष्टनेत्राः
स्वाहाभुजां त्रस्तकुरङ्गनेत्राः ॥ २८ ॥

तत्र सर्वत्र वराः प्रधानपात्रीभूता वारनार्यो वाराङ्गनाः, नृत्तं नृत्यं, वितेनुश्चक्रुः, किं०, जनानामद्भुतकृत् आश्चर्यकारि, इव यथा, सुराणां गेहे स्वर्गे, हृष्टनेत्रा हर्षिताक्ष्यः, स्वाहाभुजां देवानां, त्रस्तकुरङ्गनेत्राः स्त्रियो देवाङ्गना इति ॥ २८ ॥

इत्युत्सवं विस्मयवल्लिकन्द-
काद्म्बिनीकल्पमुदीक्ष्य लोकाः ।
सर्वे व्यमुञ्चन्निह सार्वभौम-
राज्याभिषेकोत्सवदर्शनेच्छाम् ॥ २९ ॥

इति काव्यदशकेन व्यावर्णितस्वरूपम्, उत्सवं सूरिपदप्रदानमहं, पुनः किं०, विस्मयवल्लेः कन्दस्तत्र काद्म्बिनीकल्पं मेघमालातुल्यम्, उदीक्ष्य दृष्ट्वा, सर्वे लोका इह नगरे, सार्वभौमस्य चक्रवर्तिनो राज्याभिषेकस्य दर्शनेच्छां वीक्षणवाञ्छां, व्यमुञ्चन् मुञ्चन्ति स्मेति ॥ २९ ॥

अथैकादशभिः काव्यैः श्रीमल्लसाधुसत्कगृहमण्डपादि वर्णयति—

श्रीमल्लनामाऽथ महेभ्यमुख्यः
सौख्याय पौरप्रकरस्य सद्यः ।
सन्मण्डपं मण्डयति स्म सौव-
गेहाङ्गणे दिव्यदुकूलदृश्यम् ॥ ३० ॥

अथ पदमुहूर्त्तासन्ने दिवसे, श्रीमल्लनामा महेभ्यमुख्यः पौरप्रकरस्य नागरनिकरस्य, सौख्याय सौवगेहाङ्गणे निजमन्दिराजिरे, सन्मण्डपं, किं०, दिव्यदुकूलैः प्रशस्यपट्टकूलैर्दृश्यं दर्शनीयं, मण्डयति स्मेत्यरचयत् ॥ ३० ॥

श्रीसङ्घरङ्गद्वृषकेलिधाम
श्रीमण्डपो मण्डनकृत् स रेजे ।

आखण्डलाखण्डलपर्षदात्म-

जन्मेव भूयःसुमनोमनोज्ञः ॥ ३१ ॥

स मण्डनकृत् शोभाकारी, श्रीमण्डपः आखण्डलाखण्डल-पर्षदात्मजन्मेव आखण्डलस्य इन्द्रस्य अखण्डला अखण्डा, यदु-क्तमभिधानचिन्तामणिनामकोशटीकायां श्रीहेमाचार्यचरणैः– "खण्डे खण्डलमपि" तेन न खण्डला अखण्डला अखण्डा, त्रिलि-ङ्गत्वादस्य शब्दस्य, अखण्डला या पर्षत् सभा तस्या आ-त्मजन्मेव सुधर्मासभानन्दन इव, रेजे राजति स्मेत्यन्वयः; किं०, श्रीसङ्घस्य रङ्गन् यो वृषो धर्मस्तस्य केलिधाम लीलावेश्म, पक्षे श्रीसङ्घ एव रङ्गन् यो वृषा इन्द्रस्तत्केलिधाम, पुनः किं०, भूयः-सुमनोभिर्बहुपण्डितैः बहुविधसुवर्णादिपुष्पैर्वा मनोज्ञः, पक्षे बहुदेवैरिति ॥ ३१ ॥

मुक्ताकलापैः कलितः कलाव-

त्कान्तः प्रकामं पुरुषोत्तमश्रीः ।

दुग्धोदधेर्मध्य इवोरुलक्ष्मीं

स मण्डपोऽखण्डतमां बभार ॥ ३२ ॥

स मण्डपः दुग्धोदधेः क्षीरसमुद्रस्य, मध्य इव अखण्डतमां संपूर्णाम्, उरुलक्ष्मीं विशालशोभां, बभारेत्यन्वयः; श्लिष्टविशेष-णैर्मण्डपं च दुग्धोदधिमध्यं च वर्णयति–किं०, मुक्ताकलापैर्मुक्ता-फलजालैः, कलितो युक्तः, इदं द्वयोरपि साम्यम्; पुनः किं०, कलावतां पण्डितानाम्, अथवा कलावद्भिः कान्तः प्रियः, अथवा कलावांश्चन्द्रमास्तद्वत् कान्त इति, मण्डपस्य वृत्तत्वात् आह्लादक-त्वाच्चायमपि विशेषणारोपः, पक्षे कलावता चन्द्रेण कान्तस्तस्य तत्रोत्पन्नत्वात्; पुनः, पुरुषोत्तमानां सज्जनानां श्रीर्यत्र, पक्षे पुरु-षोत्तमो विष्णुस्तस्य तेन वा श्रीर्यत्रेति, शेषं प्राग्वत् ॥ ३२ ॥

तत्र प्रतिस्तम्भमभुस्तदानीं
सत्सौमनस्या अनिमेषनेत्राः ।
पञ्चालिका अप्सरसः किमेता-
एता महं द्रष्टुमिमं महान्तम् ? ॥ ३३ ॥

तदा तत्र मण्डपे, प्रतिस्तम्भं पञ्चालिकाः पुत्रिकाः, अभुः शोभन्ते स्मेत्यन्वयः–किं०, सत्सौमनस्याः साधुचित्तोत्साहाः, पुनः किं०, अनिमेषनेत्रा निर्निमेषनयनाः, इवोत्प्रेक्ष्यते–इमं महान्तं महं द्रष्टुं एताः किम् अप्सरसः स्वर्वेश्याः, एताः प्राप्ताः, किं०, सत् प्रशस्यं विद्यमानं वा सौमनस्यं सुमनोभावः, अथवा सुमनसां पुष्पाणां कर्म अम्लानदामत्वाद् यासु ताः सत्सौ-नमस्याः, पुनः किं०, अनिमेषनेत्रा इति तु देवानां प्रतीतम्, एतद्विशेषणत्रयाविसंवादि स्याद्वादिवचोऽपि यथा–"अणिमिसनयणा मणकज्जसाहणा पुप्फदामअमिलाणा" इत्याद्युक्तेरिति ॥३३॥

सङ्घानघावस्थितये प्रपञ्चि-
मञ्चेषु पञ्चाननपीठपङ्क्तिः ।
चार्वी चिरश्रीः शुशुभे तदानीं
रम्या विमानालिरिवाऽऽगतैषा ॥ ३४ ॥

प्रपञ्चिनो विस्तारवन्तो ये मञ्चास्तेषु, पञ्चाननपीठपङ्क्तिः सिंहासनश्रेणिः, सङ्घस्य चतुर्विधस्य अनघाऽवस्थितये मनोज्ञाऽवस्थानाय, तदानीं शुशुभेऽशोभतेति योगः; इवोत्प्रेक्ष्यते–एषा विमानालिर्देववाहनश्रेणी, आगतेति ॥ ३४ ॥

रेजुः स्रजः षट्चरणै रणद्भि-
रालम्बितास्तत्र च सौरभाढ्याः ।
गानं सृजन्त्योऽप्सरसः किमीयु-

द्रष्टुं महं विस्मयमूलमेनम् ॥ ३५ ॥

च पुनः, तत्र मण्डपे, आलम्बिताः, पुनः, सौरभाढ्याः सत्सौगन्ध्याः, स्रजः पुष्पमालाः, षट्चरणैर्भ्रमरैः, किं कुर्वद्भिः, रणद्भिर्झङ्कारिभिः, रेजुः शोभन्ते स्मेति, किं०, विस्मयमूलं आश्चर्यकारणम्, एनं महं द्रष्टुं गानं सृजन्त्योऽप्सरसः सुराङ्गनाः, ईयुः प्राप्ता इत्युत्प्रेक्षा ॥ ३५ ॥

भान्ति स्म तत्राद्भुतशातकुम्भ-

कुम्भाः प्रतिद्वारगतोरणेषु ।

किं भाविनं गच्छपतिं दिदृक्षू

रूपैः सुरूपै रुचिमानियाय ? ॥ ३६ ॥

तत्र प्रतिद्वारगतेषु तोरणेषु, अद्भुतस्य शातकुम्भस्य सुवर्णस्य कुम्भाः कलसाः, भान्ति स्मेति संबन्धः; उत्प्रेक्षामाह—किं०, भाविनं भविष्यन्तं, गच्छपतिं दिदृक्षुर्द्रष्टुमिच्छुः, रुचिमान् सूर्यः, सुरूपैर्मनोहरैः रूपैः, इयायेत्यागतः, रूपैरित्यत्र बहुत्वाद् बहुभी रूपैरिति ज्ञेयम् ॥ ३६ ॥

मुक्तावचूलैर्नयनानुकूलै-

रालम्बितैः सोऽद्भुतमण्डपोऽभात् ।

अस्वप्नवर्त्मोडुभिराप्तदीप्त-

दीप्तिप्रसारैरिव शारदीनम् ॥ ३७ ॥

मुक्ताफलझुम्बनकगुच्छैः, किं०, नयनयोरनुकूलैराह्लादकत्वात्, पुनः किं०, आलम्बितैर्लम्बीकृतैः, स अद्भुतमण्डपः, अभात् शुशुभे, इवेति वितर्के, आप्तः प्राप्तो दीप्तो देदीप्यमानो दीप्तिप्रसारो द्युतिविस्तारो यैस्तैः, उडुभिर्नक्षत्रैः, शारदीनं शरत्कालिकम्, अस्वप्नवर्त्म गगनमित्युत्प्रेक्ष्यत इति भावः ॥ ३७ ॥

भान्ति स्म तत्राद्भुतमात्मदर्शा
न्यस्ताः प्रतिस्तम्भमुदारभासः ।
साक्षादिवोद्द्योतकृते समस्ता-
अस्तान्धकारास्तपनाः समीयुः ॥ ३८ ॥

तत्र प्रतिस्तम्भं न्यस्ता आत्मदर्शा दर्पणाः, किं०, उदारभासः स्फारतेजसः, भान्ति; उद्द्योतकृते आलोककरणाय, समस्ताः किं तपनाः सूर्याः, किं०, अस्तान्धकाराः प्रहततमसः, समीयुरिवेत्युत्प्रेक्षा ॥ ३८ ॥

चन्द्रोदयैस्तत्र विचित्रचित्रै-
रेजेतमामुज्ज्वलमण्डपोऽत्र ।
व्योम्नस्तलादुत्तरदस्ति पुष्पं
रूपैरनेकैरिव वर्णनीयैः ॥ ३९ ॥

अत्र नगरे स उज्ज्वलमण्डपः, चन्द्रोदयैर्वितानैः, किं०, विचित्राणि विविधानि चित्राणि चित्रकृच्चित्रितानि नरनारीतुरङ्गमकरमृगशरभवृषभकुञ्जराऽजगरगिरितरुरुरुप्रभृतिभक्तिशक्तिशूलतोमरमुद्गरकुठारपर्शुपरिघपाणिप्रभूतस्फरास्फाराडम्बरफरङ्गीरूपाणि येषु तैर्विचित्रचित्रैः, अथवा विचित्रचित्रैर्नानाश्चर्यकारिभिः, रेजेतमाम्, अत्र प्रकृष्टेऽर्थे तरतमाविति व्याकरणप्रयोगात् अतिशोभते स्मेति, अनेकैः, पुनः, वर्णनीयैः श्लाघनीयै रूपैः, "पुष्पं धनदस्य विमाने" इत्यनेकार्थत्वात् पुष्पं पुष्पकाभिधानं, विमानं व्योम्नस्तलाद् नभस्तलात्, उत्तरत् अस्तीत्युत्प्रेक्ष्यते ॥ ३९ ॥

दिव्यैर्दुकूलैः कलधौतकान्ता-
लङ्कारभारैर्मणिमौक्तिकैश्च ।

कृत्वा विमानप्रतिमानमेवं
स्वं धाम धामैष मुदामुदारः ॥ ४० ॥
पूज्या अनूचानपदप्रतिष्ठा-
कृत्यात् पवित्रीकुरुताऽङ्गणं मे ।
श्रीमल्लसाधुः शमिसार्थनाथा-
नेत्येत्यथो विज्ञपयाञ्चकार ॥ ४१ ॥

अनयोर्युगपद् व्याख्या—एष श्रीमल्लसाधुः स्वभ्रातृपुत्रेण साधुसोमाख्येन सहितः, किं०, मुदां धाम, अत एव उदारः स्फाराकारः, स्वं धाम गृहं कृत्वा, किं०, विमानप्रतिमानं स्वर्यानप्रतिबिम्बं, कैरित्याह—दिव्यैर्दुकूलैः, अन्यैरपि पञ्चवर्णवस्त्रादिभिः, पुनः कैः, कलधौतेन कनकेन रूप्येण च कान्ता रम्या येऽलङ्कारभारा भूषणभरास्तैः, पुनः, मणिमौक्तिकै रत्नमुक्तादिभिः, कथम्? एवमितिवर्णितप्रकारेण, सर्वं निर्माय शमिसार्थनाथान् यतिव्रजनायकान् गुरून्, एत्य आगत्य, इति विज्ञपयाञ्चकार विज्ञप्तवान्, तदेव द्वितीयवृत्तपूर्वार्धेन प्राह— हे पूज्याः ! अनूचानपदप्रतिष्ठाकृत्यात् सूरिपदवीस्थापनाकार्यकरणात्, मे मम, अङ्गणं गृहाङ्गणं, पवित्रीकुरुत पादावधारणेन पावनं विधीयतामिति वृत्तद्वयार्थः ॥ इति युग्मव्याख्या ॥ ४० ॥ ४१ ॥

श्रीसूरयोऽथो समुपेयिवांसः
सश्रीकमस्याऽऽलयमिभ्यभर्तुः ।
आमोददं मङ्क्षु वलक्षपक्षा-
स्ते राजहंसा इव पुण्डरीकम् ॥ ४२ ॥

अथो तेन श्रेष्ठिना विज्ञप्ताः सन्तः, श्रीसूरयो गुरवः, सपरिकरा वाचकपञ्चकसपादशतमितपण्डितयुताः, अस्य इभ्यभर्तुः

श्रीमल्लनाम्नः, आलयं, किं०, सश्रीकं व्यावर्णितशोभाशालित्वात्, समुपेयिवांसो लग्नात्प्रथमदिवससन्ध्यायामिति शेषः, यथा राजहंसाः, किं०, वलक्षौ उज्ज्वलौ पक्षौ येषां ते, गुरुपक्षे पितृमातृरूपौ पक्षौ, हंसपक्षे पक्षौ पिच्छौ, पुण्डरीकं किं०, आमोददं गन्धदायि, आलयं किं०, हर्षदायिनमिति दृष्टान्तः॥४२॥

अथाऽष्टभिः काव्यैः पदस्थापनावसरोत्सववर्णनपूर्वकं तद्वर्षमासपक्षतिथिवारनक्षत्रलग्नग्रहस्थितिकथनपट्टधराभिधानादि च निरूपयति–

दानेष्वमानेष्वथ दीयमाने-
ष्वर्थिव्रजे काञ्चनसञ्चयस्य ।
एणीदृशां भर्तृभृताङ्गणेषु
गानं सृजत्सूज्ज्वलमञ्जुलार्थम् ॥ ४३ ॥

तूर्येषु वर्येष्वथ वेणुवीणा-
भेर्यादिषूच्चैर्बहुशो नदत्सु ।
गायत्स्वथो गायनपुङ्गवेषु
तारस्वरं मञ्जुलमङ्गलानि ॥ ४४ ॥

भट्टेषु भूयस्सु भणत्सु शस्ता-
न्याशीर्वचांसि प्रसरन्महांसि ।
लोकेषु पश्यत्स्वथ सुप्रपञ्च-
मञ्चस्थितेषु प्रणयप्रियेषु ॥ ४५ ॥

सङ्ग्रामहाब्दोर्जितगर्जितेन
संप्रीणितस्वान्तशिखण्डिशावैः ।
सूरीश्वरैः कोडिमदेतनूजैः

पद्मातनूजैरिव रम्यरूपैः ॥ ४६ ॥

वर्षे षडक्षक्षितिपालसंख्ये
मासे पुनर्माधवनामधेये ।
पक्षे च पीयूषमयूखभाजि
तिथ्यां तथा ब्रह्ममुखैर्मितायाम् ॥ ४७ ॥

दिव्ये दिने प्रेयस औषधीनां
धिष्ण्ये मृगे लब्धमृगाङ्कयोगे ।
योगेऽतिगण्डे कुशलैरखण्डे
शकुन्तसार्थे सुखकृत्प्रचण्डे ॥ ४८ ॥

लग्ने वृषे सेन्दुनि कर्कराशौ
धात्रीसुते शक्रपुरोहिते च ।
आर्कौ तुलायां मकरे च राहौ
शुक्रे घटेऽजे बुधसूर्ययोश्च ॥ ४९ ॥

सन्नन्द्युपाध्यायपदप्रतिष्ठा-
पूर्वं च पूर्वर्षिसभावतंसैः ।
आरोपि विद्याविजयाभिरूपे
पट्टः स्वकोऽङ्कुर इवर्द्धिवल्लेः ॥ ५० ॥

अथ मुहूर्तवेलायां अर्थिव्रजे याचकनिकरे, काञ्चनसंचयस्य हेमस्तोमस्य कटककुण्डलकटीसूत्रकमुद्रिकादेरिति, दानेषु, किं०, अमानेषु भूरिषु, दीयमानेषु सत्सु, पुनः, भर्तृभृताम् एणीदृशां सधववधूनां, गणेषु, उज्ज्वलेन शृङ्गाररसेन मञ्जुलो मनोज्ञोऽर्थो यत्र, वीवाहादिवत् प्रतिष्ठादीक्षादिमङ्गल्यकार्येषु शृ-

ङ्गारस्यैव मुख्यत्वात् , उज्ज्वलमञ्जुलार्थं गानं गीतगानम् , अथवा उज्ज्वला विलासिनः निर्मला वा मञ्जुलाश्च मनोरमा अर्था यत्र तत् , सृजत्सु कुर्वत्सु ॥ ४३ ॥ अथ पुनः, वर्येषु वादित्रेषु, किं०, वेणुवीणाभेर्यादयः प्रतीतास्तेषु, आदिशब्दात् पञ्चशब्दवाद्यादिग्रहः, तेन बहुशो नदत्सु वाद्येषु वाद्यमानेष्विति, अथ गायनपुङ्गवेषु गान्धर्वमुख्येषु, तारस्वरं धीरध्वनिमधुरालापमूर्च्छनाघोलनादिपूर्वकं, मञ्जुलमङ्गलानि रम्यमङ्गलमयगीतानि, गायत्सु सत्सु ॥ ४४ ॥ पुनः, भट्टेषु भूरिषु आशीर्वचांसि जीव, चिरं नन्द, चिरं जयेत्यादिवचनानि, किं०, प्रसरद् महस्तेजो येषु तानि, भणत्सु सत्सु, अथ लोकेषु, किं०, सुप्रपञ्चाः सुविस्तारा ये मञ्चाः पर्यङ्कास्तेषु स्थितेषु, पुनः, प्रणयेन स्नेहेन प्रियेषु कान्तेषु, पश्यत्सु विलोकयत्सु, तन्मण्डपादिशोभामिति ॥ ४५ ॥ सङ्घस्य आग्रह एव यत् अब्दोर्जितगर्जितं मेघमहाध्वनिस्तेन, संप्रीणितो हृष्टः स्वान्तशिखण्डिशावो मनोमयूरार्भको येषां तैः, कैरित्याह—कोडिमदेतनूजैः सूरीश्वरैः श्रीविजयसेनसूरिभिः, किं०, पद्मातनूजैः कन्दर्पैरिव रम्यरूपैः ॥ ४६ ॥ वर्षे, किं०, षट् च, अक्षाणि पञ्च च, क्षितिपालाश्च षोडश, इत्यङ्कैर्वामगतिगणितैः संख्या यत्र तत्र १६५६ वर्षे इत्यागतं, पुनः, माधवनामधेये वैशाखाख्ये मासे, च पुनः, पक्षे किं०, पीयूषमयूखश्चन्द्रस्तद्भाजि शुक्ले पक्षे इति, तथा ब्रह्ममुखैश्चतुर्भिर्मितायां चतुर्थ्यां तिथ्यामिति ॥ ४७ ॥ पुनः, औषधीनां प्रेयसश्चन्द्रस्य, दिव्ये दिने सोमवारे इति, पुनः, मृगे मृगशीर्षनाम्नि नक्षत्रे, किं०, लब्धमृगाङ्कयोगे संप्राप्तशशिसंयोगे सति, अतोऽमृतसिद्धियोगे सतीति सूचितम् ; पुनः, रवियोगे चतुर्थे सति, पुनः, कुशलैः अखण्डे अतिगण्डे दैवसिकयोगे, अखण्डे घटिकाव्यतीते सति, पुनः, शकुन्ताः शकुनास्तेषां सार्थे, किं०, सुखकृत्सु प्रचण्डे प्रकृष्टे सतीति ॥४८॥ पुनः, लग्ने वृषे वहमाने

वृषलग्ने सति, किं०, सेन्दुनि सचन्द्रे मूर्तौ चन्द्रे सति, एक उच्चग्रहः, पुनः, कर्कराशौ कुलीरलग्ने, धात्रीसुते मङ्गले, शक्रपुरोहिते गुरौ च सति तृतीयभवनस्थे, इति द्वितीय उच्चग्रहः, पुनः, तुलायां षष्ठे भवने, आर्कौ शनौ सति, तृतीय उच्चः, पुनः, मकरे लग्ने नवमे भवने, राहौ स्वर्भाणौ सति, पुनः, घटे कुम्भे दशमे भवने, शुक्रे सति, "केन्द्रस्थो यो ग्रहः सौम्यः सोऽप्युच्च इव सत्फलः" इति जातकवचनादयमप्युच्चप्राय इति, पुनः, अजे मेषे द्वादशे भवने, बुधसूर्ययोर्द्वयोः सतोः, मेषस्थो रविरप्युच्च इति, एतेषां फलादिविचारस्तु फलग्रन्थेभ्यो बृहज्जातकलघुजातकरत्नमालाव्यवहारचर्यादिज्योतिःशास्त्रेभ्योऽवधेयः।

सुखावबोधाय सूरिपदकुण्डलिकास्थापना यथा-

| | | |
|---|---|---|
| ३ / ४ मं.बृ. | २ चं. | १ बु.र. / १२ |
| ५ | श्रीः | ११ शु. |
| ६ / श. ७ | ८ | रा. १० / ९. |

॥४९॥ च पुनः, सती नन्दिर्यत्र तत् सन्नन्दि यदुपाध्यायपदं वाचकपदं तस्य या प्रतिष्ठा तत्पूर्वकं, एतावता तदैव उपाध्यायपदनन्दीं निर्माय, ततः पूर्वर्षिसभावतंसैः पूर्वमुनिपर्षच्छेखरैः पूज्यैः, विद्याविजयाभिधानेऽभिरूपे पण्डिते प्राज्ञपदधारिणि, स्वकः पट्टः सूरिपदरूपः, आरोपि न्यस्त इति, ऋद्धिवल्लेः संपल्लतायाः, अङ्कूर इवेत्युत्प्रेक्षा ॥ इत्यष्टकव्याख्या ॥ ५० ॥

सिद्धार्थनन्दनजिनेन्द्रविशालतीर्थ-

राज्यर्द्धिसंवननमन्त्रमिवाऽनुकूलम् ।

नाम व्यधुर्विजयदेव इति प्रसिद्धं

पूज्या अथ प्रकटपट्टधरस्य तस्य ॥ ५१ ॥

अथ ते पूज्याः परमगुरवः, तस्य प्रकटपट्टधरस्य, विजयदेवसूरिरिति नाम व्यधुश्चक्रुरित्यन्वयः, उत्प्रेक्ष्यते–सिद्धार्थनन्दनजिनेन्द्रस्य श्रीमन्महावीरस्य यद्विशालं तीर्थं चतुर्विधसङ्घरूपं तस्य राज्यर्द्धेः साम्राज्यश्रियः संवननस्य वशीकारस्य अनुकूलं हितकारकं मन्त्रमिवेत्युत्प्रेक्षालङ्कारः ॥ अत्र च्छन्दः-परावृत्तिः पट्टधरस्याऽखण्डितनामाऽऽनयनायेति तात्पर्यम् ॥५१॥

सर्वज्ञमूर्धाभरणं यदासीद्

राजा नवीनो नहि विस्मयोऽयम् ।

सर्वाः कलाः केलिमधुर्यदत्र

सद्यस्तदाश्चर्यमभूद् महीयः ॥ ५२ ॥

एष नवीनो राजाऽनूचानराट्, यत् सर्वज्ञमूर्धाभरणं सर्वे च ते ज्ञाः पण्डितास्तेषां मूर्धाभरणं मौलिभूषणं, आसीज्जातः, एष नोऽस्माकं, विस्मयो नास्ति, यतः कारणाद् नवीनो नूतनः, राजा चन्द्रः, सर्वज्ञस्य महादेवस्य मूर्धाभरणं भवत्येवेत्यत्र किमाश्चर्यम् ?, परं यदत्राऽस्मिन् नवे राज्ञि, सर्वाः कलाः केलिमधुश्चक्रुः, तद् महीयो महद्, आश्चर्यमभूज्जातम्, नवे हि चन्द्रे सर्वाः कला नोत्पद्यन्त इति, यतः "जीर्णश्चन्द्रो यत्कलाश्रेणिशाली" इत्यादिवचनादिति भावः ॥ ५२ ॥

न्यस्तः स्वकीयः स्म विभाति पूज्य-

पादैरनूचानवरेऽत्र पट्टः ।

भासां समूहस्तमसां सपत्नैः

प्रोल्लासिपद्मो विषमार्चिषीव ॥ ५३ ॥

पूज्यपादैर्गुरुभिः, अत्राऽस्मिन् अनूचानवरे श्रीविजयदेवसूरौ, न्यस्तः पट्टः विभाति इत्यन्वयः; भासां समूहः किरणगणः, किं०, प्रोल्लासिपद्मः विकाशिकमलः, पट्टपक्षे प्रोल्लासिनी पद्मा यत्र सः, तमसां सपत्नैः तमोऽरातिभिः सूर्यैरिति, विषमार्चिषि कृशानाविवेति दृष्टान्तः ॥ ५३ ॥

पट्टस्तपागच्छपतेः पटीयान्
शिष्येऽथ पट्टेऽत्र विभाति चैषः ।
अन्योन्यमासीदनयोर्बलर्द्ध्योः
शोभा द्विपद्विड्वनयोरिवोच्चैः ॥ ५४ ॥

तपागच्छपतेः श्रीविजयसेनसूरेः, पट्टः किं०, पटीयान् पटुः, अत्र श्रीआचार्ये शिष्ये विभाति, च पुनः, अत्र पट्टे गुरुपट्टे, एष शिष्यः श्रीअनूचानलक्षणः, विभातीत्यन्वयद्वयम्, अनयोर्द्वयोः पट्टानूचानयोः, किं०, बलर्द्ध्योर्बलस्य ऋद्धिः ययोस्तयोः बलशालिनोरिति, द्विपद्विड्वनयोरिव केसरिकाननयोरिव, शोभा आसीत्; कथम्?, अन्योन्यं परस्परं, यथा वनेन सिंहः, सिंहेन च वनम्; तथा पट्टेनाऽनूचानः, अनूचानेन च गुरुपट्ट इति, द्वयोः शोभा जातेति तत्त्वम् ॥ ५४ ॥

श्रीमल्लनाम्ना गृहिणा तदोच्चै-
र्द्वावर्चितौ श्रीतपगच्छनाथौ ।
भातः स्म तौ काञ्चनरूप्यरूपै-
र्दस्राविवाऽस्वप्नतरुप्रसूनैः ॥ ५५ ॥

तदा तत्रोत्सवे, श्रीमल्लनाम्ना गृहिणा श्राद्धेन, तौ द्वौ श्रीतपगच्छनाथौ भट्टारकाचार्यौ, अर्चितौ पूजितौ सन्तौ, भातः

स्मेति, कैरित्याह—काश्चनरूप्ययोः स्वर्णरजतयोः रूपैर्नाणकैः, यदाह श्रीहेमाचार्योऽनेकार्थसंग्रहे—"रूपं तु श्लोकशब्दयोः पशावाकारे सौन्दर्ये नाणके नाटकेऽपि च" इति; कैः काविवेति दृष्टान्तमाह—दस्रौ अश्विनीकुमाराविव, अस्वप्नतरुप्रसूनैः कल्पपादपपुष्पैरिति भावः ॥ ५५ ॥

आसीत् तपागच्छ इहामुनैष
श्रीमाननूचानपुरन्दरेण ।
उद्द्योतवानम्बुजबन्धुनेव
लब्धावलोकः सकलोऽपि लोकः ॥ ५६ ॥

अमुनाऽनेन अनूचानपुरन्दरेण आचार्येन्द्रेण, इह जगति, एष तपागच्छः श्रीमान् आसीदित्यन्वयः, यथा सकलोऽपि लोकः, किं०, लब्धोऽधिगतोऽवलोको येन सः, अम्बुजबन्धुना सूर्येणेव, उद्द्योतवान् भवति तथेति ॥ ५६ ॥

नृणां स वात्सल्यमतुच्छमच्छ-
चेताश्चकाराऽथ महेभ्यमुख्यः ।
श्रीमल्लनामाऽत्यभिरामभोज्यैः
पुष्पैरलीनामिव पुष्पकालः ॥ ५७ ॥

अथ स महेभ्यमुख्यः श्रीमल्लनामा, नृणां आगतानां नराणां, वात्सल्यं, किं०, अतुच्छं चित्तवित्तयोः पृथुत्वात्, अत्यभिरामै रम्यैः भोज्यैश्चकार कृतवान्, यथा पुष्पकालो वसन्तः, पुष्पैः प्रसूनैः, अलीनां भ्रमराणां, वात्सल्यं कुरुते तथेति ॥५७॥

संतोषयामास समस्तमेष
वेषैर्वरैः सङ्घमघाभिघाती ।
रत्नैर्जगत्कौतुककल्पसयत्नै-

वृन्दारकाणामिव वृन्दमब्धिः ॥ ५८ ॥

एष श्रेष्ठी किं०, अघाभिघाती पापापहारी, समस्तं सङ्घं चतुर्विधमपि, वरैर्वेषैः यथार्हमहार्घ्यवस्त्रैः, संतोषयामास; इव यथा, रत्नैः किं०, जगतां यत्कौतुकं तत्र क्लृप्तो यत्नो यैस्तैश्चतुर्दशरत्नैर्लक्ष्मीकौस्तुभपारिजातधन्वन्तरिचन्द्रोच्चैःश्रवस्तुरङ्गमैरावणवारणरम्भाप्रभृतिभिः, वृन्दारकाणां देवानां, वृन्दं, अब्धिरिवेति दृष्टान्तः ॥ ५८ ॥

सङ्घाग्रहात् श्रीतपगच्छधुर्यैः

पूज्यैरुपाध्यायपदं प्रदत्तम् ।

मेघादिकानां विजयोत्तराणां

मेधाविनां तत्र महे महीयः ॥ ५९ ॥

तत्र महे श्रीतपगच्छधुर्यैः पूज्यैः परमगुरुभिः, सङ्घाग्रहात्, मेघादिकानां पुनः, विजयोत्तराणां मेधाविनां पण्डितानां मेघविजयानां विबुधानां, उपाध्यायपदं प्रदत्तमिति ॥ ५९ ॥

चक्रेऽथ कीकाभिधठक्कुरस्य

प्रौढा प्रतिष्ठा महता महेन ।

श्रीसूरिसिंहैर्विजयादिराजे

धीमत्युपाध्यायपदं ददे च ॥ ६० ॥

अथ तत्पट्टोत्सवानन्तरं सप्तमीदिवसे महता बृहता, महेनोत्सवेन, कीकाभिधठक्कुरस्य गृहे प्रौढा प्रतिष्ठाऽर्हतामिति चक्रे कृता, च पुनः, तस्यां प्रतिष्ठायां विजयादिराजे धीमति विजयराजविबुधे, उपाध्यायपदं श्रीसूरिसिंहैर्ददे दत्तमिति ॥ ६० ॥

श्रीमल्लनाम्नेभ्यपुरन्दरेण

तथैव कीकाभिधठक्कुरेण ।

प्रामोदि सर्वोऽप्यथ पारिजात-

संतानकाभ्यामिव सङ्घलोकः॥ ६१ ॥

श्रीमल्लनाम्नाऽऽचार्यपदोत्सवकारिणा, तथा कीकाभिधठक्कुरेण च, किं०, इभ्यपुरन्दरेण धनीन्द्रेण, सर्वोऽपि सङ्घलोकः पारिजातसंतानकाभ्यामिव कल्पद्रुमाभ्यामिव, प्रामोदि संतुष्टिभाक् कृत इति ॥ ६१ ॥

तत्रैव पुर्यां चतुरोऽपि मासान्

स्थित्वा तदन्ते यतिराजहंसः ।

श्रीपत्तनं सत्कमलाभिरामं

विश्वम्भरालोकमिवाजगाम ॥ ६२ ॥

तत्रैव तस्यामेव पुर्यां स्तम्भतीर्थनगर्यां, चतुरोऽपि मासान् स्थित्वा चतुर्मासीं विधाय, तदन्ते वर्षान्ते, स यतिराजहंसः विश्वम्भरालोकं भूमिलोकमिव, श्रीपत्तनं अणहिल्लपाटकनगरं, किं०, सत्कमलाऽभिरामं एकत्र कमलैः, अन्यत्र कमलयाऽभिरामं, आजगामाऽऽगत इति ॥ ६२ ॥

तत्राऽथ गच्छाधिपतिं स्वगच्छा-

नुज्ञामनूचानवराय दित्सुम् ।

ज्ञात्वा महेभ्योऽथ सहस्रवीरः

परीक्षकः स्वीयहृदीति दध्यौ ॥ ६३ ॥

अथ तत्र पत्तने, चतुर्मासकान्ते गच्छाधिपतिं परमगुरुं, किं०, स्वगच्छाऽनुज्ञां वन्दनकद्वयप्रदानपूर्वकनन्दीरूपां, अनूचानवराय श्रीविजयदेवसूरये, दित्सुं दातुमनसं, ज्ञात्वा, अथ तत्रत्यः सहस्रवीरः परीक्षकः प०सहसवीरनामा श्राद्धः स्वकीयहृदि निजे मनसि, इति वक्ष्यमाणं, दध्यौ चिन्तयामासेति ॥६३॥

यच्चिन्तयामास तदेवाह—

संपल्लताया अयमेव सम्य-

गावाल उच्चैः सुमनःप्रियायाः ।

अस्मिन् महे यत् क्रियते महीयान्

वित्तव्ययश्चारुयशोऽब्धिचन्द्रः ॥ ६४ ॥

संपल्लतायाः श्रीवल्लेः, किं०, सुमनसां सज्जनानां, अथवा सुमनोभिः कुसुमैः प्रियाया रम्यायाः, अयमेवोत्तरार्धेन वक्ष्यमाणोऽर्थव्ययः,सम्यक् शोभनः, आवालो वल्ल्यवस्थानस्थानरूपः, प्रोक्त इति, अयं क इत्याह—यदस्मिन् महे वन्दनप्रदानरूपे, वित्तव्ययः, क्रियते, किं०, चारुयशोऽब्धौ मनोज्ञकीर्तिसमुद्र चन्द्र इति तद्वृद्धिकृत्त्वात् ॥ ६४ ॥

मत्वेति तेनाथ परीक्षकेण

विद्युत्वता वर्ष इवासुखघ्ने ।

विश्वैकहर्षे प्रविधीयमाने-

ऽमाने महे हृष्टकलापिवृन्दे ॥ ६५ ॥

श्रीपत्तनं प्रौढतमं सुपर्व-

पूर्णं स्वरासीद् वृषदृक् च लोकः ।

सर्वोऽपि देवः स परीक्षकश्च

कल्पद्रुमः कामितदानदाता ॥ ६६ ॥

अथ तेन परीक्षकेणेति मत्वा ज्ञात्वा, अमानेऽप्रमाणे, महति महे प्रविधीयमाने क्रियमाणे सति, विद्युत्वता मेघेन, वर्षे वर्षण इव, किं०, असुखघ्न इति विशेषणं द्वयोरपि महमेघयोः प्रतीतम्; पुनः किं०, विश्वस्य जगत एकत्र, अन्यत्र च विश्वायाः पृथिव्या एकः श्रेष्ठो हर्षो यत्र यस्माद्वेति, पुनः

किं०, हृष्टं कलापिनां मयूराणां वा कं सुखं भवतु इत्यादिभाषिणां कलापिनां भट्टादीनां वृन्दं यस्य यस्मिन् वेति ॥ ६५ ॥ तत्र महे सति किं जातमित्याह—प्रौढतमं श्रीपत्तनं नगरं, किं०, सुपर्वभिः पूर्णं शोभनोत्सवैः पूरितं, नित्योत्सवमयत्वात् , स्वः स्वर्ग आसीत् पत्तनं तदा स्वर्गतुल्यं जातमिति, पुनः, लोकः सर्वोऽपि किं०, वृषे धर्मे दृग् धीर्यस्य, पक्षे वृषिण शक्रे दृग् दृष्टिर्यस्य सः, देव आसीत् देवोपमो लोक इति, स सहस्रवीरः परीक्षकः किं०, कामितदानदातेति कल्पद्रुम आसीत् ॥ इति युग्मव्याख्या ॥ ६६ ॥

वर्षेऽथ तार्क्ष्याक्षकलाप्रमाणे
मासे सहस्ये बहले च पक्षे ।
षष्ठ्यां तिथौ चोडुनि हस्तनाम्नि
घस्रे च पाथोरुहिणीप्रियस्य ॥ ६७ ॥

शस्ते मुहूर्तेऽत्र गुरुः स्वगच्छा-
नुज्ञामनुज्ञातमनोज्ञविद्यः ।
गुर्वीमनूचानवितानपीन-
पञ्चाननाय प्रवराननाय ॥ ६८ ॥

रोचिष्णुचेताः स भणन् पवित्रं
श्रीनन्दिसूत्रं गुणलक्ष्मिसत्रम् ।
दत्ते स्म शश्वज्जिनशासनश्री-
वश्यक्रियामन्त्रमिवातिमित्रम् ॥ ६९ ॥

अथ तार्क्ष्यास्तुरगाः सप्त, अक्षाणि इन्द्रियाणि पञ्च, कलाः षोडश, एतैरङ्कैर्वामगतिमीलितैः, प्रमाणं संख्या यत्र तत्र १६५७ वर्षे इति, पुनः, मासे सहस्ये पौषनाम्नि, च पुनः, बहले कृष्णे

पक्षे, च पुनः, षष्ठ्यां तिथौ, च पुनः, हस्तनाम्नि उडुनि नक्षत्रे, च पुनः, पाथोरुहिणीप्रियस्य सूर्यस्य, घस्रे दिवसे रविवार इति ॥६७॥ अत्राऽस्मिन्, शस्ते श्लाघ्ये, मुहूर्ते हस्तार्कयोगे, चकाराद् विंशे रवियोगे च, गुरुः श्रीविजयसेनसूरिः, किं०, अनुज्ञाता आज्ञाविषयीकृता मनोज्ञा विद्या पारम्पर्यागतस्मरणादिरूपा, अथवा षट्त्रिंशत्सहस्रीसहितषड्लक्षप्रमितग्रन्थाऽऽगमवाचनारूपा येन सः, इदं गुरुविशेषणम्, यतो निखिलसिद्धान्तसंबन्धिनीं वाचनां दत्त्वैव आचार्यपदनन्दीं कुरुत इति पारम्पर्याऽऽम्नायः, अनूचानवितानेपीनः पुष्टः पञ्चाननः सिंहस्तस्मै सूरिकेसरिण इति, पुनः किं०, प्रवराननाय वर्यवदनायेति, स्वगच्छानुज्ञां तपागणाधिपत्यात्मिकां, दत्ते स्मेति अग्रेतनकाव्यगता क्रिया योज्येति ॥ ६८ ॥ पुनः किं कुर्वन्; स गुरुर्भणन् गुणयन्, नन्दिनिर्मापणे शिष्यस्य गुणलक्ष्मेः सत्रं स्थानम्, नन्दिसूत्रं बृहन्नन्द्यध्ययनं सप्तशतीमितं देवर्द्धिवाचककृतं श्रावयन्निति शेषः, स गुरुः किं०, रोचिष्णुचेताः प्रसन्नमनाः सन्, सूरयेऽनुज्ञां दत्तवान्, इवोत्प्रेक्ष्यते–जिनशासनश्रियो वश्यक्रियाया वशीकरणस्य मन्त्रमिव, किं०, अतिमित्रं व्यतीतसूर्यं, प्रतापेनेत्यर्थः ॥ इति त्रयाणां व्याख्या ॥ ६९ ॥

आचार्यवर्याय गुरुश्च गच्छा-
ऽनुज्ञानगर्या वरणं रणघ्नम् ।
कीर्तेरमत्रं वरसूरिमन्त्रं
प्रादाच्छ्रियां मूलमिवाऽनुकूलम् ॥ ७० ॥

च पुनः, गुरुराचार्यवर्याय गच्छानुज्ञैव नगरी तस्या वरणं प्राकारं तदाधारभूतत्वात्, पुनः, रणघ्नं क्लेशापहम्, पुनः, कीर्तेः अमत्रं पात्रं, वरं सूरिमन्त्रं पूर्वं श्रीगौतमस्वामिवारके एकविंशतिशताऽक्षरप्रमाणम्, यदुक्तं जिनप्रभीयगौतमस्तोत्रे–

"इगवीससयक्खरसूरिमंतसरणाउ ञत्ति सञ्जाया ।
आमोसहिविप्पोसहिपमुहा तुह लद्धिरिंछोली" त्ति ॥ १ ॥

सांप्रतं त्वेकादशश्लोकप्रमाणं गणनायकस्यैव गणनार्हं महामन्त्रम्, प्रादाद् दत्ते स्म, अनुकूलं हितं श्रियां मूलं कारणमिवेत्युत्प्रेक्षा ॥ ७० ॥

द्रङ्गात् ततः पत्तनतः समेत्य
शङ्खेश्वरे तत्र जिनेन्द्रचैत्ये ।
प्रादादुपाध्यायपदं मुनीन्दुः
प्राज्ञे नयादौ विजयोत्तरे च ॥ ७१ ॥

ततः पत्तनतोऽणहिल्लपाटकद्रङ्गात्, क्रमेण चलन् शङ्खेश्वरे ग्रामे, समेत्यागत्य, तत्र जिनेन्द्रचैत्ये श्रीशङ्खेश्वरपार्श्वनाथप्रासादे मुनीन्दुर्गुरुः, नयादौ विजयोत्तरे च प्राज्ञे नयविजयनाम्नि विबुधे लुम्पाककुमतमुन्मुच्य गुरुशिष्यत्वमाश्रिते, उपाध्यायपदं प्रादात् । अत्रान्तरे द्वादशशतगन्त्रीशोभितः सप्तशतीसुभटपञ्चशतीकरभानेकाश्ववारनैकनिस्वानाद्याडम्बरपरिवृतो मरुस्थलीयो महान् सङ्घपतिहेमराजसत्कसङ्घः शत्रुञ्जययात्रार्थं गच्छन् तत्र शङ्खेश्वरे सानूचानान् पूज्यपादान् महोत्सवेन प्राणमदिति ॥७१॥

निर्ग्रन्थनाथोऽथ पुरात् पुराणात्
शङ्खेश्वराख्याद् विजहार सुश्रीः ।
क्ष्मां पावयन् पादपयोजपांसु-
पूरैः क्षमाभूरिव गौतमर्षिः ॥ ७२ ॥

अथ पुराणात् पुरातनात्, शङ्खेश्वराख्यात् पुराद् निर्ग्रन्थनाथो गुरुः, विजहार विहृतवान्, किं०, सुश्रीः शोभनश्रीकः, किं कुर्वन्, पावयन् पवित्रयन्, कां, क्ष्मां पृथ्वीं, कैः, पादपयोजपांसुपूरैश्चरणकमलरेणुविस्तारैः, इवोत्प्रेक्ष्यते—गौतमर्षिः, किं०, क्षमया

क्षान्त्या भूरिव भूः, अथवा क्षमाया भूः स्थानं; गौतमपक्षे तु क्षमा पृथ्वी तस्या भवतीति क्षमाभूः पृथ्वीसुतत्वादिति; अथवा क्षमाभूः क्षान्तिस्थानमिति द्वयोरपि तुल्यं विशेषणम् ॥ ७२ ॥

कुर्वन् महः पूर्वमिवाद्रिमंशु-
रहम्मदावादमियाय भास्वान् ।
अस्येक्षणात् प्रीतिरवापि लोकैः
कोकैरिवास्तोकमशोकचित्तैः ॥ ७३ ॥

अथ गुरुर्विहरन् अहम्मदावादम्, इयाय आगतवान्, कः कमिवेत्याह–पूर्वमद्रिं पूर्वाचलम्, अंशुः सूर्य इव, किं०, भास्वान् कान्तिमान्, पुनः, महस्तेज उत्सवं च कुर्वन्, लोकानामिति गम्यम् । अस्येक्षणाद् गुरोः सूर्यस्य चेक्षणात्, लोकैः कोकैरिव अशोकचित्तैर्निःशोकहृदयैः, प्रीतिरवापि प्रमोदो लेभे ॥ ७३ ॥

इतीन्द्रवज्रया सर्गं पूर्णीकृत्य मालिन्या तमुपसंहरति–

अकमिपुरमथैष द्वेषिदृक्पद्मिनीन्दुः
सुगुरुरविशदार्यैश्वर्यवर्यावतारः ।
समहमघविनाशी राजहंसैर्विलासी
सकमलमिव सिन्धुं सिद्धसिन्धोः प्रवाहः॥७४॥

अथ एष सुगुरुः, किं०, द्वेषिदृक्पद्मिन्यां वैरिनयननलिन्यामिन्दुश्चन्द्रस्तन्मुकुलीकरणहेतुत्वात्, अकमिपुरमहम्मदावादनगरम्, अविशत् प्रविवेश; किं०, आर्याणां पूज्यानां यदैश्वर्यं साम्राज्यं तेन वर्योऽवतारो यस्येति सः;कथम्?,समहं सोत्सवम्,पुनः, किं०, अघविनाशी पातकप्रणाशकः; क इव कमिति दृष्टान्तेन प्रवेशं स्पष्टयति–इव यथा, सिन्धुं समुद्रं, किं०, सकमलं, नगरपक्षे सश्रीकं, समुद्रपक्षे तु सकमलं सजलम्, अथवा तत्रापि श्रियः

पितृत्वात् सश्रीकमिति तुल्यं विशेषणम्, सिद्धसिन्धोर्गङ्गायाः, प्रवाह इव, अघविनाशीति द्वयोस्तुल्यं विशेषणम्, यतो गङ्गाप्रवाहो लोके तीर्थत्वेन पापहारीति प्रतीतम्, पुनः किं०, गुरुर्गङ्गाप्रवाहश्च, राजहंसैर्मरालैः, पक्षे राजहंसैः नृपोत्तमैर्महाराजभिः संमुखागतैर्विलासीति स्पष्टम् ॥ ७४ ॥

* * * * * * * * * * * * * * * * * * * * * * * * * * * * * *

इतीति सर्वमवदातम् ।

इति सकलसुविहितसभासार्वभौमसमानपण्डितमण्डलीमौलिमौलीयमानपण्डितश्रीकमलविजयगणिसुशिष्यमुख्यपण्डितपुरन्दरप्रख्यपण्डितश्रीविद्याविजयगणिविनेयवाचकश्रीगुणविजयगणिविरचितायां श्रीविजयप्रदीपिकाभिधानधारिकायां सुखावबोधिकायां श्रीविजयप्रशस्तिमहाकाव्यटीकायां सप्तदशः सर्गोऽर्थतः समर्थितः ॥



## अथाऽष्टादशः सर्गः ।

अथाऽष्टादशः सर्गः समारभ्यते—

अथ च तां नगरीमधि तस्थुषां
पुटकिनीमिव पाण्डुरपत्रिणाम् ।
प्रशमिभूमिभुजाममृतोदयै-
र्जनचयः सुमना वचनैरभूत् ॥ १ ॥

च पुनः, अथेति साम्प्रतम्, तां नगरीमधि अहम्मदावादं प्रति, तस्थुषां, कामिव केषामित्याह, पाण्डुरपत्रिणां मरालानाम्, पुटकिनीं पद्मिनीमिव, प्रशमिभूमिभुजां मुनिमहीपतीनां, वचनैः

किं०, अमृतोदयैः सुधोन्नतिभिः, अथवा मोक्षोदयैः, जनचयो लोकसमुदयः, सुमनाः प्रहृष्टचेताः निर्जरश्चाऽभूत् ॥ १ ॥

जिनवरेन्द्रमुनीन्द्रमुखासु यः

सुकृतभूमिषु सद्भिभवव्ययः ।

भवति शम्बरबिन्दुरिवाऽक्षयः

स निहितः सलिलेषु सरित्पतेः ॥ २ ॥

जिनवरेन्द्रमुनीन्द्रौ देवगुरू तत्प्रमुखासु, सुकृतभूमिषु पुण्यक्षेत्रेषु, यः सद्भिभवव्ययो वरिष्ठधनत्यागो भवेत्, सोऽल्पोऽपि धनव्ययः, सरित्पतेः समुद्रस्य, सलिलेषु जलेषु, निहितः शम्बरबिन्दुर्वारिलव. इव, अक्षयो भवतीति । अत्र काव्यद्वये द्रुतविलम्बितं छन्दः, तल्लक्षणं तूक्तपूर्वम्, इह सर्गे प्रायश्छन्दसां नैकता, इति प्रतिवृत्तं छन्दोभिन्नताऽभिधास्यते ॥ २ ॥

आकर्ण्येत्याकर्णनीयाः प्रभूणां

वाचो वाचोयुक्तिहृत्प्रीतिपात्रम् ।

अर्हद्भक्त्या भावितः पुण्यपालः

श्राद्धः सज्जः कर्तुमासीत् प्रतिष्ठाम् ॥ ३ ॥

प्रभूणां पूज्यानां, वाचः, किं०, आकर्णनीयाः श्रवणार्हाः, पुनः, वाचोयुक्त्या वाक्चातुर्या हृदि प्रीतिपात्रं प्रेमपात्रम्, आकर्ण्य श्रुत्वा, अर्हद्भक्त्या भावितो वासितः, पुण्यपालो नाम श्राद्धोऽहम्मदावादवासी, प्रतिष्ठां कर्तुं सज्जोऽभूत् ॥ ३ ॥

तद्भ्राताऽथो ठक्करः साधुरिद्ध-

श्रद्धः शुद्धं शम्भवस्वामिबिम्बम् ।

बाणस्रोतःप्राणनाथाङ्गुलीयं

श्रेयस्कामः स्वाख्ययाऽकारयत् सः ॥ ४ ॥

अथ तद्भ्राता तस्य पनीपालस्य भ्राता ठाकरनामा साधुः श्राद्धः, किं०, इद्धा दीप्ता श्रद्धा धर्मास्था यस्य सः, शुद्धं शम्भवस्वामिनस्तृतीयतीर्थङ्करस्य बिम्बम्, किं०, बाणाः पञ्च, स्रोतसां नदीनां प्राणनाथा अर्थात्समुद्राः सप्त, एतयोर्द्वयोरङ्कयोर्वामगतिगणितयोः पञ्चसप्ततिसंख्ययोस्तुल्यैरङ्गुलैर्भवं बाणस्रोतःप्राणनाथाङ्गुलीयं पञ्चसप्तत्यङ्गुलमितमिति, श्राद्धः किं०, श्रेयस्कामः पुण्याभिलाषी मोक्षाभिलाषी वा, स्वाख्यया स्वनाम्ना, अकारयत् कारितवान् । इदं वृत्तद्वयं शालिनीच्छन्दसा, तल्लक्षणं चेदम् "शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः" इति ॥४॥

अथेभ्यसभ्यः स च पुण्यपालः

कृपालुहृच्छीतलनाथबिम्बम् ।

मनोरमं क्ष्माविशिखाङ्गुलीयं

विधापयामास निजेन नाम्ना ॥ ५ ॥

अथ स पुण्यपालः, किं०, इभ्येषु सभ्यः, अथवा इभ्यश्चासौ सभ्यश्चेति, निजेन नाम्ना कृपालुहृदयः शीतलनाथो दशमस्तीर्थकृत् तद्बिम्बम्, अथवा कृपालुहृदिति दयालुमना इति श्राद्धस्य पृथग् विशेषणम्, शीतलनाथबिम्बं किं०, मनोरमं रम्यम्, पुनः, क्ष्मा एका, विशिखा बाणाः पञ्च, वामक्रमेण मीलितैरेकपञ्चाशताऽङ्गुलैर्भवं क्ष्माविशिखाङ्गुलीयम्, विधापयामासाऽकारयदिति ॥ ५ ॥

भ्राताऽनयोर्नाकरनामधेयः

सुधीः शुभं शम्भवनाथबिम्बम् ।

विभावरीवल्लभपत्रवाहा-

ङ्गुलैर्मितं कारयति स्म भक्त्या ॥ ६ ॥

अनयोः पुण्यपालठकरयोः पूर्वोक्तयोः श्राद्धयोः, भ्राता ना-

करनामा सुधीः, सोऽपि शम्भवनाथबिम्बं किं०, विभावरीवल्लभश्चन्द्र एकः, पत्रवाहा बाणाः पञ्च, वामगतैरेकपञ्चाशदङ्गुलैर्मितं कारयति स्मेति । इदं वृत्तद्वयं उपेन्द्रवज्रोपजातिभ्यां ज्ञेयम्, तयोर्लक्षणं तु पूर्वमेवोक्तमिति नेहाभिहितम् ॥ ६ ॥

बिम्बत्रयीयमतनून्नतिमल्लिवल्लि-
कादम्बिनी परिवृताऽपरबिम्बवृन्दैः ।
संस्थापिता महसि तैर्विहिते प्रतिष्ठा-
सत्के तपागणधुराधरणे धुरीणैः ॥ ७ ॥

इयं बिम्बत्रयी प्रतिमात्रयी, किं०, अतनुर्महती या उन्नतिः शासनोन्नतिः सैव मल्लिवल्लिर्जातिलता तत्र कादम्बिनी मेघाली तद्वृद्धिकृत्त्वात्, पुनः किं०, अपरैरन्यैः बिम्बवृन्दैः प्रतिमागणैः, परिवृता, तैः त्रिभिर्भ्रातृभिः, विहिते निर्मापिते, प्रतिष्ठासत्के महसि उत्सवे, तपागणधुराधरणे धुरीणैः धुर्यैः श्रीविजयसेनसूरिभिः, संस्थापिता प्रतिष्ठितेत्यर्थः ॥ इयं बिम्बत्रयी सांप्रतं अहम्मदावादे कोठारीपाटके श्रीवीरचैत्यभूमिगृहेऽस्तीति शेषः । इदं वसन्ततिलकाख्यं छन्दः, तल्लक्षणं तु प्राग् निगदितम् ॥ ७ ॥

परीक्षको यां वजिआभिधानकः
पार्श्वप्रभोर्मूर्तिमकारयत् कृती ।
अस्मिन् प्रतिष्ठामहसि प्रतिष्ठिता
साऽपि त्रिषष्ठ्यङ्गुलमानमालिनी ॥ ८ ॥

वजिआभिधानः परीक्षकः प०वजिआख्यः, स्तम्भतीर्थवास्तव्यः पूर्वमेकादशे सर्गे निरूपितस्वरूपश्चिन्तामणिपार्श्वनाथचैत्यकारयिता, स पुनरपि श्रेयोऽर्थी यां पार्श्वप्रभोर्मूर्तिमकारयत्, अस्मिन् प्रतिष्ठामहसि सा०पनीपालसत्के, सापि मूर्तिः

किं०, त्रिषष्ठ्यङ्गुलमानमालिनी षष्ठ्यधिकत्र्यङ्गुलप्रमाणा, तैः, गुरुभिः प्रतिष्ठिता ॥ ८ ॥

तस्या मूर्तेर्नामाऽग्रेतनवृत्तेनाह—

गदाम्भोऽग्निभोगीभघोरारिचोरा-
ऽऽहवाद्युग्रभीभूमिसीरः प्रवीरः ।
स पार्श्वप्रभुः पुण्यपूर्णप्रभावः
कृतः स्तम्भनः संज्ञया सूरिसिंहैः ॥ ९ ॥

स पार्श्वप्रभुः किं०, गदा रोगाः, अम्भः पानीयम्, अग्नि-र्वह्निः, भोगी सर्पः, इभो हस्ती, घोरारयो विकरालवैरिणः, चोरास्तस्कराः, आहवः संग्रामः, आदिशब्दाद् मृगेन्द्रव्याघ्रभूत-प्रेतादिग्रहः, तेनेत्यादिर्या उग्रभीर्महाभीतिः सैव भूमिस्तत्र सीरो हलं तच्छेदकत्वात्, अत एव प्रवीरः, पुनः किं०, पुण्येन पूर्णः प्रभावो महिमा प्रतापो वा यस्येति स इति, श्रीपार्श्वनाथस्य भयहरत्वेनाऽन्वर्थमिदं विशेषणम्। भयहरत्वं चैवं प्राहुः पूर्वा-चार्या अपि—

"आधिव्याधिविरोधिवारिधियुधि व्यालस्फटालोरगे
भूतप्रेतमलिम्लुचादिषु भयं तस्येह नो जायते ।
नित्यं चेतसि पार्श्वनाथ इति हि स्वर्गापवर्गप्रदं
सन्मन्त्रं चतुरक्षरं प्रतिकलं यः पाठसिद्धं पठेत्" ॥१॥

श्रीमानतुङ्गाचार्यचरणा अप्याहुः—

"रोगजलजलणविसहरचोरारिमइन्दगयरणभयाइं ।
पासजिणनामसंकित्तणेण पसमन्ति सव्वाइं" ति ॥२॥

इत्याद्युक्तेः, भीतीनां स्तम्भकत्वेन सोऽपि श्रीपार्श्वनाथः संज्ञया स्तम्भनः कृतस्तैः सूरिसिंहैरिति, स तु स्तम्भनपार्श्व-नाथः सांप्रतं स्तम्भतीर्थे सागवटाख्यपाटके श्रीचिन्तामणि-

पार्श्वनाथप्रासादभूमिगृहेऽस्तीति शेषः । इदं भुजङ्गप्रयातं छन्दः, तल्लक्षणं यथा—"भवेद् यैश्चतुर्भिर्भुजङ्गप्रयातम्" ॥ ९ ॥

चतुर्मासकं तत्र पुर्यामकार्षु-
स्तदाऽऽचार्यवर्या अहार्यौजसाऽऽर्याः ।
ततः पारणे सङ्घहृत्पद्ममोद-
प्रपञ्चप्रभाप्राणनाथा अथोचुः ॥ १० ॥

अहार्यौजसा अजेयबलेन आर्याः श्रेष्ठाः, आचार्यवर्याः श्रीसूरयः, तदा तत्र पुर्यामहम्मदावादे, चतुर्मासकमकार्षुश्चक्रुः, ततश्चतुर्मासकपारणे गुरवः, किं०, सङ्घहृत्पद्मस्य यो मोद-प्रपञ्चो हर्षप्रकर्षस्तत्र प्रभाप्राणनाथाः सूर्याः, अथ ऊचुः धर्मोपदेशं तत्रत्यसङ्घस्य दत्तवन्त इति । इदमपि भुजङ्गप्रयातं वृत्तम्॥१०॥

यदूचुस्तदग्रेतनवृत्ते प्राह—

दिङ्मुखोल्लासकृत्सौरभस्फूर्तिम-
त्कीर्तिपुष्पप्रदायाः श्रियो वीरुधः ।
एतदुच्चैः फलं यद् व्ययः श्रेयसे
मुक्तिमार्गप्रयाणैकपुण्याऽर्वणे ॥ ११ ॥

दिशां मुखेषु उल्लासं करोतीति दिङ्मुखोल्लासकृत्, पुनः, सौरभस्य सौगन्ध्यस्य स्फूर्तिर्विद्यते यत्र तत् सौरभस्फूर्तिमत्, एवंविधं यत् कीर्तिपुष्पं यशःकुसुमं तत्प्रदायाः, श्रियोवीरुधः लक्ष्म्या लतायाः, एतदुच्चैः फलं प्रोक्तम्, तदेवाह—यत् श्रेयसे धर्माय, व्ययो विधीयते इति, श्रेयसे किं०, मुक्तिमार्गे यत् प्रयाणं गमनं तत्र पुण्यः पवित्रः अर्वाऽश्वस्तस्मै मोक्षमार्गगमनतुरङ्गमायेत्यर्थः। इयं स्रग्विणी "रैश्चतुर्भिर्युता स्रग्विणी संमता" इति वचनात् ॥ ११ ॥

निशम्य रम्यं वचनं यतिप्रभो-
रिदं पुमर्थावसथैकदीपकम् ।
जहर्ष सोत्कर्षमनाः स सिङ्घजी-
नामा महेभ्यो नरनाथमानभाक् ॥ १२ ॥

यतिप्रभोः गुरोः, इदं वचनं, किं०, पुमर्थाः पुरुषार्था-स्त्रयो धर्मार्थकामाख्या एव आवसथो गृहं तत्र दीपकम्, त्रि-ष्वपि तेषु धर्मस्यैव मुख्यत्वात्, द्वयोरपरयोरपि हेतुत्वाच्च, यदुक्तं पूर्वसूरिभिः—

"धर्मसिद्धौ ध्रुवं सिद्धिर्द्युम्नप्रद्युम्नयोरपि ।
दुग्धोपलम्भे सुलभा संपत्तिर्दधिसर्पिषोः" ॥ १ ॥

इत्याद्युक्तेः; रम्यं वचनं निशम्य सोत्कर्षमनाः प्रकृष्टचेताः, तत्रत्यः सिङ्घजीनामा महेभ्यः, किं०, नरनाथस्य राज्ञो मानभाक् राज्ञोऽपि मान्य इति, स जहर्ष हृष्टोऽभूदिति ॥ १२ ॥

तत्र प्रतिष्ठाऽतिमहैर्विधापिता-
ऽमुना महेभ्येन कृताऽथ सूरिभिः ।
शुभे मुहूर्ते बहुबिम्बबन्धुरा
द्वितीयतीर्थङ्करमूलबिम्बभाक् ॥ १३ ॥

तत्र नगरे, चतुर्मासकपारणके अमुना सिङ्घजीनाम्ना महेभ्येन, अतिमहैर्विधापिता कारिता, प्रतिष्ठा, किं०, द्वितीयो-ऽजितस्तीर्थङ्करस्तन्मूलबिम्बभाक्, पुनः बहुबिम्बैरपरैः बन्धुरा रम्येति शेषं स्पष्टम् ॥ इयं वृत्तद्वयी इन्द्रवंशावंशस्थयोरुप-जातिजाता, तल्लक्षणं तु प्रागुक्तम् ॥ १३ ॥

श्रीपालाह्वः श्रीमतां मौलिरत्नं
जज्ञे सज्जोऽर्हत्प्रतिष्ठां प्रकर्तुम् ।

पार्श्वस्याथाऽकारयद् बिम्बमुच्चैः

स्फाराकारं सप्तषष्ट्यङ्गुलीयम् ॥ १४ ॥

अथाऽन्यदा श्रीमतां धनवतां मौलिरत्नं श्रीपालाह्वः श्रीपालनामा जवहरी तत्रत्य एव श्राद्धः, अर्हत्प्रतिष्ठां कर्तुं सज्जो जज्ञे जातः; ततः पार्श्वस्य बिम्बम्, किं०, स्फाराकारं दिव्याकृतियुतम्, पुनः, सप्तषष्ट्यङ्गुलीयं सप्ताधिकषष्ट्यङ्गुलप्रमाणम्, एकादशफणविराजितं चेति, अकारयत् कारितवान् । इयमपि शालिनी ॥ १४ ॥

श्रीपार्श्वनाथप्रतिमामिमां स-

न्महोत्सवैरच्छमना मुनीशः ।

प्रातिष्ठिपत् तं च जिनेन्द्रपार्श्वं

चक्रे जगद्वल्लभनामधेयम् ॥ १५ ॥

इमां श्रीपार्श्वनाथप्रतिमां सन्महोत्सवैः मुनीशो गुरुः, किं०, अच्छमनाश्चोक्षचेताः, प्रातिष्ठिपत्, च पुनः, तं जिनेन्द्रपार्श्वं जगद्वल्लभनामधेयं चक्रे तस्य जगद्वल्लभ इति नाम दत्तमितिः स च साम्प्रतं श्रीश्यामलपार्श्वनाथचैत्यभूमिगृहेऽस्तीति शेषः । इयमुपजातिः ॥ १५ ॥

चारूंश्चक्रे चित्तवित्तानुसारा-

दात्मश्रीणां स व्ययानव्ययाऽऽशः ।

तत्र द्रङ्गे चङ्गचेतास्तथाऽयं

लोकैः कल्पद्रुर्यथेहाऽभ्यधायि ॥ १६ ॥

सः श्रीपालः, किं०, अव्ययाऽऽशः अक्षयस्पृहावान् सन्, तत्र द्रङ्गे आत्मश्रीणां स्वलक्ष्मीणां, चित्तवित्तयोर्धनमनसोः, अनुसारान् चित्तवित्ततुल्यान् व्ययान्, पुनः, चारून् मनोज्ञान्

चक्रे तथा कृतवान् यथा इह नगरे, स लोकैः, कल्पद्रुः अभ्यधायि कथित इति । इयमपि शालिनीति ॥ १६ ॥

श्रीस्तम्भतीर्थाह्वपुराधिवासि-
सौवर्णिकाग्रेसरतेजपालः ।
नाभेयदेवप्रतिमामचीकरद्
नन्दर्तुसंख्याङ्गुलमानमञ्जुलाम् ॥ १७ ॥

इहाऽवसरे श्रीस्तम्भतीर्थपुराधिवासी सौवर्णिकेषु अग्रेसरो मुख्यः तेजपालश्चेति सोनीतेजपालनामा श्रीशत्रुञ्जयशिखरस्थमूलचैत्योद्धारकारी, तत्रैव वत्सरे नन्दा नव, ऋतवः षट्, वामगत्या ऋतुनन्दा इति तत्संख्यैः अङ्गुलैर्मानेन प्रमाणेन मञ्जुलां मनोहराम्, एकोनसप्तत्यङ्गुलप्रमाणधारिणीम्, नाभेयदेवस्याऽऽदिनाथस्य,प्रतिमाम्,अचीकरत् कारयति स्मेति । इयमिन्द्रवज्रेन्द्रवंशयोरुपजातिः ॥ १७ ॥

श्रीपत्तनद्रङ्गनिवासितेजः-
पालश्च सौवर्णिकवर्णनीयः ।
अकारयत् सत्प्रतिमां हयाब्ध्य-
ङ्गुलैर्मितां सप्तमतीर्थभर्तुः ॥ १८ ॥

च पुनः, श्रीपत्तनद्रङ्गनिवासी यस्तेजःपालः, किं०, सौवर्णिकेषु वर्णनीयो धनादिना श्लाघ्यः, सोऽपि तत्र वर्षे, सप्तमतीर्थभर्तुः श्रीसुपार्श्वस्य, सत्प्रतिमाम्, किं०, हयाः सप्त, अब्धयश्चत्वारः, अथ तैर्वामैः संयुतैः सप्तचत्वारिंशदङ्गुलैर्मिताम्, अकारयदिति । इयमिन्द्रवज्रा पूर्वार्धेन, पश्चिमार्धेन तु उपेन्द्रवज्रा चेति ॥ १८ ॥

बिम्बाविमौ द्वावतिराजदन्तौ

श्रीपुष्पदन्ताविव कान्तिकान्तौ ।
प्रतिष्ठितौ चाऽप्रतिबिम्बसार्व-
बिम्बैः सहाऽन्यैर्मुनिराजधुर्यैः ॥ १९ ॥

बिम्बशब्दस्य पुंनपुंसकत्वादिमौ द्वौ बिम्बौ द्वाभ्यां तेजःपालाभ्यां कारितौ, किं०, अतिराजन्त अतिभ्राजमाना अन्ता-अवयवा ययोस्तौ, पुनः किं०, श्रीपुष्पदन्तौ चन्द्रसूर्यौ, यथा, तथा कान्तिकान्तौ कान्तभीमगुणेनेति भावः, अन्यैरपरैः श्रावकश्राविकाकारितैः, अप्रतिबिम्बसार्वबिम्बैः निरुपमार्हतबिम्बैः, सह मुनिराजधुर्यैर्गुरुभिः, प्रतिष्ठिताविति । इयमप्युपजातिः॥१९॥

सुक्षेत्रभूमाविव बीजमुप्तं
वित्तं बहु स्याद् व्यायितं सुतीर्थे ।
वाचेति वाचंयमपुङ्गवानां
सूराभिधः श्रेष्ठ्यजनिष्ट हृष्टः ॥ २० ॥

यथा सुक्षेत्रभूमौ उप्तं बीजं तथा सुतीर्थे महातीर्थेऽर्बुदादौ, व्ययितं त्यागाविषयीकृतं, वित्तं बहु स्याद् भूरि भवेत्, इति वाचंयमपुङ्गवानां मुनिवराणां, वाचा वाण्या, तद्वास्तव्यव्यवहारिवृन्दश्रेष्ठः सूरः श्रेष्ठी, हृष्टोऽजनिष्ट मुदित इति ॥ २० ॥

ततः स किं कृतवानित्याह–

सङ्घाधिपीभूय महर्द्धिपूरः
सूरश्चिकीर्षुश्चलति स्म चारु ।
गुर्वीं गुणैरर्बुदशैलयात्रां
धात्रीं जिगीषुः कमितेव भूमेः ॥ २१ ॥

सङ्घाधिपीभूय सङ्घपतिर्भूत्वा, स सूरः श्रेष्ठी, किं०, महती

राजमान्यत्वेन हस्त्यश्वरथपदातिमयी ऋद्धिः सम्पत् तस्याः पूरः प्राचुर्यं यस्य स इति, गुणैर्गुर्वी महागुणकरीम्, इहलोकपरलोकादिसुखकृत्त्वात्, अर्बुदो नाम यः शैलो मरुमण्डलमुखाग्रवर्ती, सप्तगव्यूतोच्चत्वहृद्यद्वादशपद्याभिरामः, शालिग्रामदेवकुलपाटकाद्युपरिवर्तिद्वादशग्रामः, तलहट्टिकास्थितजैनश्रीकुमरविहारशैवाचलेश्वरविहारहारिसरोवरपुष्करिणीमन्दाकिनीनामतटाकिकाचम्पककेतकखर्जूरीदाडिमीविशालतालीलवलीचञ्चच्चूतलतादिनानावनराजीरमणीयतानिराकृतसुराचलाऽचलदुर्गदुर्गशीर्षस्थश्रीचतुर्मुखचैत्यभूषणश्रीवृषभदेवस्वर्णवर्णाऽप्रतिमप्रतिमाचतुष्टयीपूरितयथेष्टजनकामितकामस्तस्य यात्रां चिकीर्षुस्तद्दर्शनं कर्तुमिच्छुः, चलति स्म, श्रीगुरून्नत्वा यात्रार्थमचलदिति शेषः । इवोत्प्रेक्ष्यते—धात्रीं जिगीषुः क्षोणीं जेतुकामः, भूमेः कमिता राजेव, अनेन महर्द्धित्वमेवाऽसूचीति ॥ २१ ॥

पथि प्रतिश्राद्धगृहं प्रयच्छ-
न्नेकां विवेकी महिमुन्दिकां च ।
सिद्धाद्रियात्रामिव चक्रिशक्र-
श्चक्रे सतामर्बुदतीर्थयात्राम् ॥ २२ ॥

अथ स चलन् पुनरहम्मदावादादारभ्य प्रतिश्राद्धगृहं सकलश्राद्धानां तपागच्छवर्तिनां गेहेषु, एकां महिमुन्दिकां गूर्जरत्रामतीतां, प्रयच्छन् ददत्, चक्रिशक्रो मुख्यचक्रभृत् श्रीभरत इव, सिद्धाद्रियात्रां श्रीशत्रुञ्जययात्रां, यथा पूर्वम्, तथाऽयमपि ताम्, अर्बुदतीर्थस्य मुक्ताफलश्रीफलकनकरूप्यकुसुमादिवर्धापनपूर्वकं, यात्रां चक्रे कृतवानिति ॥ २२ ॥

सीरोहिकाऽऽख्ये नगरे च राण-
पुरे पुराणे दिविषच्छिखीव ।

धनानि मार्गे वितरन् घनानि
चक्रे स यात्रां सुमनोऽभिरामः ॥ २३ ॥

च पुनः, स सूरश्रेष्ठी सीरोहिकाख्ये शिवपुरीनाम्नि, नगरे नित्यं नवनवाङ्गपूजाऽग्रपूजाभावपूजाऽऽदिमाहात्म्यमयसप्रत्ययश्री-युगादिदेवदिव्याऽऽलयाऽऽदिनवाजिनाऽऽलयसुन्दरे, च पुनः, पुराणे जीर्णे, श्रीधरणविहारबन्धुरे राणपुरे, उपलक्षणत्वाद् नारद-पुरीवरकाणकादिषु घनानि धनानि दिविषच्छिखीव सुरवृक्ष इव, किं०, सुमनसा शोभनचेतसा, पक्षे सुमनोभिर्देवैः, अभिरामो रम्यः, वितरन् दिशन्, यात्रां मरुदेशवर्तितीर्थानां चक्रे । इदं वृत्तचतुष्टयं चेन्द्रवज्रोपेन्द्रवज्रोपजातिभिरवसेयम् ॥ २३ ॥

यात्रां विधायाऽथ समागतः पुरे
निजे स वर्यां विदधे प्रभावनाम् ।
सुधीः प्रतिश्राद्धमतीद्धरूपकै-
र्जातोऽर्थिनां चैष सुपर्वपादपः ॥ २४ ॥

अथ स सूरश्रेष्ठी, यात्रां विधाय निजे पुरे समागतः सन् प्रतिश्राद्धं श्रावकमात्रं प्रति, अतीद्धरूपकैः अतिदीप्तरूप्यनाणकैः स्थालीमोदकयुतैः, वर्यां प्रभावनां विदधे कृतवान्, च पुनः, एषोऽर्थिनां सुपर्वपादपः कल्पतरुः, जात इति । इन्द्रवंशावंशस्थयो-रुपजातिः ॥ २४ ॥

किं बहूक्तिरचनाभिरिहार्थे
तत्र चैषु गुरुषु स्थितवत्सु ।
वातवर्त्मनि रविष्विव जज्ञे
सन्महो भुवनभूतिनिदानम् ॥ २५ ॥

च पुनः, तत्र पुरेऽहम्मदावादनगरे, एषु गुरुषु स्थितवत्सु

सत्सु, यथा वातवर्त्मनि गगने, रविषु सूर्येषु, सन्महः श्रेष्ठोत्सवः सत्तेजो वा, "महावुत्सवतेजसी" इति वचनात्, किं०, भुवनभूतिनिदानं जगत्संपत्तिहेतुः, जज्ञे, इहार्थेऽस्मिन्नर्थे, किं बहूक्तिरचनाभिः किं बहुकथनैरित्यर्थः । इदं स्वागताऽऽख्यं छन्दः, तल्लक्षणं तु पञ्चमे सर्गे प्रपञ्चितमिति ॥ २५ ॥

प्राज्यप्रजाव्रजनतांह्रिसरोरुहेऽस्मिन्
श्रीसूरिराजि नगरीमधितष्ठुषीमाम् ।
सङ्घोऽतिमेदुरमना महिमुन्दिकानां
लक्षं व्यये व्यतनुताऽस्तिविवेकमेकम् ॥२६॥

अस्मिन् श्रीसूरिराजि श्रीविजयसेनगुरौ, किं०, प्राज्यप्रजाव्रजनतांह्रिसरोरुहे बहुमहाजननिवहप्रणतपादकमले, इमां नगरीं राजनगरनाम्नीम्, अधितष्ठुषि स्थितवति सति, तत्रत्यः सङ्घः, किं०, अतिमेदुरमना हर्षेण पुष्टचेताः, अस्तिविवेकं सद्विवेकं यथा स्यात्तथा, एकं महिमुन्दिकानां नाणकविशेषाणां, लक्षं व्यये त्यागे, व्यतनुताऽकरोत्, एकलक्षमिता महिमुन्दमुद्राः संवत्१६५९वर्षे तत्रत्यैः श्राद्धैर्व्ययीकृता इति शेषः ॥ २६ ॥

द्रङ्गात् ततः शुभतमेऽह्नि मुनीन्द्रचन्द्राः
श्रीराजधन्यपुरनामपुरं प्रतीद्धम् ।
प्राचीचलन्नचलराजविराजिधैर्याः
पथ्युत्सवेषु सततोत्सुकसङ्घपूज्याः ॥ २७ ॥

ततो द्रङ्गाद् नगरात्, शुभतमे वरीयस्तरे, अह्नि दिने, श्रीराजधन्यपुरनामपुरं प्रति, किं०, इद्धं दीप्तं, प्राचीचलन् चेलुरिति, किं०, अचलराजो गिरिराड् मेरुर्हिमाचलो वा, तद्वद् विराजि भ्राजमानं धैर्यं येषां ते, पुनः किं०, पथि मार्गे, उत्सवेषु सततम्,

उत्सुको यः सङ्घस्तेन पूज्याः, प्रतिग्रामं प्रतिपदं सङ्घेनाऽर्चिता-इति । इदं वृत्तद्वयं वसन्ततिलकयेति ॥ २७ ॥

पुरवरनरनारीनेत्रनीलोत्पलानां
विदधदतिशयश्रीस्फूर्तिमर्तिघ्नमूर्तिः ।
जगदुदरगतानां तामसानां विनाशी
पुरपरिसरपृथ्व्यां प्राप सूरीन्द्रचन्द्रः ॥२८॥

अथ क्रमेण विहरन् शङ्खेश्वरपार्श्वपादान् प्रणम्य सूरीन्द्र-चन्द्रः, किं कुर्वन्, विदधत्, काम्, अतिशयेन श्रियः स्फूर्तिम्, केषाम्, पुरवरस्य राजधन्यपुरस्य नरनार्यः पुरुषस्त्रियस्तासां नेत्रनीलोत्पलानां नयनकुवलयानाम्, पुनः किं०, आर्तिघ्नी मूर्तिर्यस्येति, पुनः किं०, जगदुदरगतानां विश्वमध्यगतानाम्, तामसानां तमःसमूहानां ध्वान्तव्रातानां पापपटलानां च, विनाशीति, पुरपरिसरपृथ्व्यां नगरसमीपभूमौ, प्राप्त इति । मालिनीयमिति ॥ २८ ॥

सान्द्रोल्लसद्विविधवर्णदुकूलक्लृप्त-
केतुप्रपञ्चपिहिताऽऽतपमाप्तरङ्गम् ।
द्रङ्गं प्रभौ प्रविशति द्विपवाजिराजि-
राजी जवादभिमुखं नृप आजगाम ॥२९॥

सान्द्रैर्नीरन्ध्रैः, पुनः, उल्लसद्भिर्वेल्लद्भिर्विविधवर्णैः पञ्चवर्णैर्दुकूलैर्वस्त्रविशेषैः क्लृप्ता रचिता ये केतवो ध्वजा नेजादयस्तेषां यः प्रपञ्चो विस्तारस्तेन पिहितो निवारित आतपः सूर्योपतापो यत्र तम्, पुनः किं०, आप्तरङ्गं गुर्वागमात्प्राप्तरङ्गम्, द्रङ्गं नगरम्, प्रभौ पूज्ये, प्रविशति सति, जवात् शीघ्रम्, नृपः किं०, द्विपवाजिराजिराजी गजतुरङ्गमश्रेणिशाली, अभिमुखं संमुखम्, आजगामाऽऽगत इति ॥ २९ ॥

माद्यन्मृदङ्गबहुचङ्गतरङ्गरङ्ग-
ङ्गेर्याद्यहृद्यतमवाद्यरवैस्तदानीम् ।
कोलाहलैरविरलैरपि पौरक्लृप्तैः
क्ष्माव्योमभूमिरुरुशब्दमयी बभूव ॥ ३० ॥

माद्यन्मृदङ्गा हर्षकृन्मर्दलाः पुनर्बहुचङ्गैर्घनमनोज्ञैस्तरङ्गै र-ङ्गन्त्यो नृत्यन्त्यो या भेर्यस्तदाद्यैस्तत्प्रमुखैर्हृद्यतमैर्मनोहरतरैर्वा-द्यरवैस्तूरनिर्घोषैः, पुनः, पौरक्लृप्तैर्नागरनरविरचितैः, कोला-हलैस्तुमुलैः, किं०, अविरलैरविच्छिन्नैः, तदानीं गुरोर्नगरप्रवेश-क्षणे, क्ष्माव्योम्नोर्भूमिः, किं०, उरुशब्दमयी विस्तीर्णध्व-निमयी, बभूव जातेत्यर्थः । द्वयोर्वसन्ततिलका ॥ ३० ॥

सान्द्रैः सरसीजपलाशदृशां
गानैः पुरमेतदभात् प्रसभम् ।
कम्राम्ररसाशनलब्धगिरां
वीथीव वनस्य पिकाब्जदृशाम् ॥ ३१ ॥

पुनः, एतत् पुरं सरसीजपलाशदृशां पद्मपत्रनेत्राणां स्त्री-णामिति यावत्, गीतध्वनिभिः, किं०, सान्द्रैर्बहलैः, अभात् शोभते स्म—इवोत्प्रेक्ष्यते—इव यथा वा, पिकाब्जदृशां कोकिलका-मिनीनाम्, किं०, कम्राम्ररसाशनलब्धगिरां चारुचूतमञ्जरीरसा-स्वादप्राप्तवाचाम्, गानैः पञ्चमस्वररूपैः, वनस्य वीथी काननरा-जीवेति दृष्टान्तोत्प्रेक्षे, इदं मोटनकं छन्दः, "तो जौ लगौ मोट-नकम्" इति लक्षणत्वादिति ॥ ३१ ॥

अर्थार्थिनामर्थमनर्थसार्थो-
न्माथं ददानेषु जनेषु तत्र ।
नभोऽम्बुपानामिव नीरदेषु

नीरं बहुप्रीतिमवाप विश्वम् ॥ ३२ ॥

पुनः, तत्र प्रवेशोत्सवे, जनेषु श्राद्धलोकेषु, किं कुर्वाणेषु, ददानेषु, कम्, अर्थं वित्तं, किं०, अनर्थस्य आलस्य यः सार्थः समूहस्तस्योन्माथो मथनं यस्मात्तम्, केषामित्याह—अर्थार्थिनां धनार्थिनां याचकानामिति गम्यम्, दृष्टान्तमाह—इव यथा, नीरदेषु मेघेषु, नभोऽम्बुपानां बप्पीहानां, नीरं वारि, ददानेषु सत्सु, विश्वं जगत् बहुप्रीतिं परमप्रमोदम्, अवाप प्रापेति, अयं छन्दोभेद उपजातीनां चतुर्दशसु भेदेषु छन्दोऽनुशासनविवरणोदितेषु सप्तमो भेद-इति ॥ ३२ ॥

इत्याद्यतुच्छोत्सवधोरणीमयं
श्रीराजधन्याह्वपुरं सदोदयम् ।
स्वामी सुराणाममरावतीमिवा-
ऽविशद् गुरुर्वैबुधवृन्दबन्धुरः ॥ ३३ ॥

इत्यादयो ये वर्णिता अतुच्छोत्सवाः पूर्णमहोत्सवास्तेषां या धोरणी श्रेणी तन्मयं श्रीराजधन्याह्वपुरम्, पुनः, सदोदयं सुगमम्, अमरावतीम् इन्द्रपुरीं, यथा सुराणां स्वामी शक्रः, तथा गुरुः, किं०, वैबुधवृन्देन एकत्र निर्जरगणेन, अन्यत्र पण्डितसम्बन्धिसमूहेन बन्धुरो रम्य इति, गुरुः पण्डितव्रातपरिवृतः प्राविशदिति । अयं इन्द्रवंशावंशस्थयोरष्टमोपजातिप्रकारः ॥३३॥

अथ स्थितानां महिमागुरूणां
श्रियां पुरे तत्र पुरे गुरूणाम् ।
उल्लासभाग् वाग्भिरभूद् मनुष्य-
लोकोऽब्दनादैरिव बर्हिबालः ॥ ३४ ॥

अथानन्तरं तत्र पुरे, किं०, श्रियां श्रीणां पुरे गृहे, गुरूणां

श्रीविजयसेनसूरीणाम् ,किं०, महिमागुरूणाम् ; आकारान्तोऽपि महिमाशब्दोऽस्तीति महिमया माहात्म्येन गुरूणां महताम् , स्थितानां ज्येष्ठस्थितिं कृतवताम् , वाग्भिर्वाणीभिः, व्याख्यानदेशनाभिः मनुष्यलोक उल्लासभाग् अभूत् , अब्दनादैर्मेघगर्जितैः, यथा बर्हिबालो मयूरबालक इति । अयं इन्द्रवज्रोपेन्द्रवज्रयोश्चतुर्दशोपजातिभेदः ॥ ३४ ॥

तं भूमिजानिं जिनशासनस्य
पद्माकरामोदकरं निरीक्ष्य ।
पाथोजिनीनाथमिवास्तशोकः
कोको मुदं स्मैति विवेकिलोकः ॥ ३५ ॥

तं जिनशासनस्य भूमिजानिं राजानम् , पाथोजिनीनाथं सूर्यमिव,किं०, पद्माकरं लक्ष्मीसमूहम् , आमोदं च हर्षम् , अथवा पद्माकरस्य लक्ष्मीनिकरस्य आमोदं करोति यस्तं, पक्षे पद्माकरामोदकरः कमलाकरोल्लासकरस्तम् , निरीक्ष्य दृष्ट्वा, विवेकिलोकः कोक इव अस्तशोको गतशोकः सन् , मुदं हर्षं स्मैति प्राप्तवान् ॥ ३५ ॥

सङ्घोऽनघस्तत्र सुशर्मनर्म-
हर्म्याणि कर्माणि च धार्मिकाणि ।
निर्मापयामास मुनीमहेन्द्र-
पुण्योपदेशेन मुदा मनस्वी ॥ ३६ ॥

पुनः, तत्र नगरे, सङ्घः किं०, अनघो निष्पापः, पुनः किं०, मुदा हर्षेण मनस्वी हृष्टः सुमना वा, मुनीमहेन्द्राणां मुनीन्द्राणां मुनिवद् मुनीशब्दो लिङ्गानुशासने पुंस्त्रीलिङ्गे प्रोक्तोऽस्तीति मुनीमहेन्द्रपुण्योपदेशेन मुनीन्द्रधर्मोपदेशेन, सुशोभनं यच्छर्म सौख्यं तस्य नर्महर्म्याणि लीलागृहाणि, धार्मिकाणि कर्माणि सुकृ-

तत्कृत्यानि, निर्मापयामास निरमापयत् ॥ इयं वृत्तद्वयी इन्द्रवज्रामयी ॥ ३६ ॥

तद्भूपतिः पाहडखाननामा
प्रतापधामाऽस्तसहस्रधामा ।
सेवाऽर्थमभ्यर्णमगाद् गुरूणां
श्रीमान् सुपर्वेव मरुद्गुरूणाम् ॥ ३७ ॥

तस्य नगरस्य तदानीं भूपतिः स्वामी, पाहडखाननामनृपः किं०, प्रतापस्य धाम्ना उग्रत्वेन अस्तः सहस्रधामा सूर्यो येन सः, एकदा गुरूणां तेषां सेवाऽर्थं आलयेऽभ्यर्णं समीपम्, अगात् प्राप्त इति, सुपर्वा देवः, इव यथा, मरुद्गुरूणां सुरगुरूणां बृहस्पतीनामिति यावत्, अत्र पूज्यत्वाद् बहुत्वमिति । अयं षष्ठोपजातिभेदः ॥ ३७ ॥

निर्ग्रन्थनाथा अथ तत्र सत्र-
स्थानोपमाने सुकृतोद्यमानाम् ।
पुरे प्रसिद्धे विधिना वितेनु-
र्ज्येष्ठां स्थितिं सङ्घमहाग्रहेण ॥ ३८ ॥

अथ तत्र पुरे, किं०, प्रसिद्धे पृथ्व्यां प्रतीते, पुनः किं०, सुकृतोद्यमानां सत्रस्थानोपमाने, सत्रागारे हि धान्यादि सुलभम्, तथा तत्राऽपि धर्मोद्यमानां सुलभतेति, निर्ग्रन्थनाथा गुरवः, सङ्घस्य महाग्रहेण ज्येष्ठां स्थितिं चतुर्मासीं, वितेनुश्चक्रुरिति । अयमुपजातेस्तृतीयो भेदः ॥ ३८ ॥

लाभोऽभवत् तत्र गुरोर्गरीया-
नगण्यपुण्यप्रकटक्रियाणाम् ।
प्रौढप्रभावाभ्युदयाद् वलक्ष-

पक्षादिवेन्दोर्द्युतिमण्डलीनाम् ॥ ३९ ॥

पुनः, तत्र पुरे, गुरोः प्रौढप्रभावस्य महामाहात्म्यस्याऽभ्युदयात्, अगण्यस्य अनल्पस्य पुण्यस्य याः प्रकटाः क्रियाः कार्याणि तेषां गरीयान् घनो लाभोऽभवज्जातः; दृष्टान्तो यथा—वलक्षपक्षाद् धवलपक्षतः, इन्दोश्चन्द्रस्य, द्युतिमण्डलीनां कान्तिततीनामिवेति । अयं षष्ठोपजातिभेदः ॥ ३९ ॥

अनल्पसङ्कल्पितदानशौण्डः

कामाभिरामः सुमनःसमूहैः ।

किं मूर्तिमानेष सुपर्वशाखी

विदाञ्चकारेति गुरुं स सङ्घः ? ॥ ४० ॥

स सङ्घः गुरुमिति विदाञ्चकार ज्ञातवानित्यन्वयः। यज्ज्ञातवांस्तदेवाह—एष गुरुः किं मूर्तिमान् सुपर्वशाखी कल्पद्रुमोऽस्तीति ?, अथ तद्विशेषणद्वयमाह—गुरुः किं०, अनल्पं यत् सङ्कल्पितं चिन्तितं तत्र दानशौण्डो बहुप्रदो दानशूर इति, पुनः किं०, कामम् अत्यर्थं अभिरामो रम्यः, कैरित्याह—सुमनःसमूहैः पण्डितव्रातैः, पक्षे देववृन्दैः, इति गुरोः कल्पवृक्षतुल्यतेति । अयमुपजातेस्त्रयोदशो भेद इति ॥ ४० ॥

समग्रसिद्धान्तधुनीधवैक-

व्यापारपारीणधियां धुरीणम् ।

अमंस्त सङ्घः सकलोऽपि सूरिं

साक्षात्सुधर्माणमिवाऽऽगतं तम् ॥४१॥

तं सूरिं साक्षात् सुधर्माणं सुधर्मस्वामिनमिव, आगतं सकलोऽपि सङ्घः अमंस्त मेनेइति, तं किं०, समग्रः सर्वः सिद्धान्तधुनीधवः श्रुतसमुद्रस्तस्य एकोऽद्वितीयो व्यापारोऽध्ययनाध्या-

पनश्रवणश्रावणादिरूपस्तत्र ये पारीणधियः पारप्राप्तमतयः सकलशास्त्राऽर्णवाऽवगाहिन इति तेषाम् , धुरीणं धौरेयं तन्मुख्यत्वादिति । अयमुपजातेर्द्वादशो भेदः ॥ ४१ ॥

वर्धापनैर्नूतनकाञ्चनानां
मौक्ताफलैर्न्युञ्छनकैरतुच्छैः ।
सनन्दिनन्दीविधिभिर्विचित्रै-
स्तत्रोत्सवाद्वैतमिवाऽजनिष्ट ॥ ४२ ॥

तत्र पुरे, नूतनकाञ्चनानां नव्यकारितस्वर्णकुसुममुद्रिकाकङ्कणकुण्डलादीनां, वर्धापनैः,गुरोरिति गम्यम् ,पुनः,अतुच्छैर्मौक्ताफलैर्मुक्तामयैर्न्युञ्छनकैः गुरोरुपर्युत्तारणरूपैः, पुनः, सनन्दयो याः ससंपदः नन्दीविधय उपधानमालारोपणतुर्यव्रतद्वादशव्रतादिविविधनियमनन्दीप्रकारास्तैः, उत्सवाद्वैतं केवलोत्सवमयमिव, अजनिष्ट जातम्। अयमुपजातेः सप्तमः प्रकारः॥४२॥

चञ्चच्चतुर्मासकमेतदुच्चै-
र्वचोविलासेन गणाधिराजाम् ।
तैस्तैः प्रकारैः फलवद् बभूव
घनाघनेनेव लतावितानम् ॥ ४३ ॥

एतत् चञ्चत् चारु चतुर्मासकम्, गणाधिराजां सूरीणां, वचोविलासेन वाग्विलासेन, तैस्तैः प्रकारैः उक्तपूर्वैः पुरो वक्ष्यमाणैश्च, फलवत् सफलं, बभूव । दृष्टान्तमाह—लतावितानं वल्लीव्यूहः, घनाघनेनेवेति यथा तथेति । अयमुपजातेर्दशमः प्रकार इति ॥ ४३ ॥

इतः पुरा सूदितदैन्यसैन्ये
श्रीरामसैन्याह्वपुरे पुराणे ।

मध्याद् भुवः प्रादुरभूददभ्रा-
दभ्रादिवाऽर्कः प्रभुमारुदेवः ॥ ४४ ॥

इतोऽव्ययं संबन्धान्तरसूचकम्, तेन इतोऽन्यदा, पुरा पूर्वं ग्रन्थकरणकालापेक्षया पुराकाले तपागच्छनायकभट्टारकश्रीहीरविजयसूरिवरसाम्राज्ये सति सं० १६२९ वर्षे, श्रीरामसैन्याह्वपुरे रामसेणस्थाने डीसाख्यनगराभ्यर्णवर्तिनि, किं०, पुराणे जीर्णे, पुनः किं०, सूदितं खण्डितं दैन्यमेव सैन्यं येन यत्र वा, लोकानामिति लक्षणया गम्यम्; तत्र भुवो मध्यात् प्रभुमारुदेवः श्रीऋषभः, प्रादुरभूत् प्रकटीबभूव, अदभ्राद् महतोऽभ्राद् यथा अर्कः सूर्य इति दृष्टान्तः। अयमुपजातेः पञ्चमो भेदः ॥ ४४ ॥

तदीयमूर्तेश्च निभाल्य तेजो-
ऽतिशायि कल्याणमयं महीयः ।
आश्चर्यपूर्णा मनुजाः सुवर्ण-
नरोऽयमस्तीति विदाम्बभूवुः ॥ ४५ ॥

च पुनः, तदीयमूर्तेः श्रीऋषभस्वामिप्रतिमायाः, तेजो महः, किं०, अतिशायि अत्युत्कृष्टं यत्कल्याणं कनकं तन्मयं साक्षाद् हिरण्यमयमिति, पश्यतां विभ्रमोत्पादकत्वात्, निभाल्य दृष्ट्वा, आश्चर्येण विस्मयेन, पूर्णा मनुजा जनास्तद्देशवासिनः, इति विदाम्बभूवुर्ज्ञातवन्तः, इतीति किम्?, तदेवाह—सुवर्णनरः किमयमस्ति, एतावता वर्णसाधर्म्यात् सुवर्णपुरुष एष इति लोकैरज्ञायीति भावः ॥ अयमुपजातेस्तृतीयो भेदः ॥५४॥

अनेकलोकाम्बककैरवाणा-
मारामममामोदपदं प्रकुर्वन् ।

सङ्कोचकृत् पापपयोरुहाणां
भानुर्नवीनोऽजनि तत्प्रभावः ॥ ४६ ॥

अनेके ये लोकास्तेषामम्बककैरवाणां नयनेन्दीवराणाम्, आरामं वनमामोदपदं हर्षास्पदम्, प्रकुर्वन्, पुनः, पापपयोरुहाणां पातककमलानाम्, सङ्कोचकृद् म्लानिकारीति, तत्प्रभावस्तस्य वृषभदेवस्य प्रभावः प्रतापः, उक्तविशेषणसद्भावात् सूर्यधर्मवैपरीत्याच्च नवीनो भानुः, अजनि जातवान् । अयमपि पञ्चमोपजातिभेदः ॥ ४६ ॥

तस्मिन् दृशोरध्वनि नीयमाने
बिम्बे जगद्भर्तुरिवांशुबिम्बे ।
सवेशवासाऽतुलकौलिकादि-
भीर्ध्वान्तवत् तत्र नृणां प्रनष्टा ॥ ४७ ॥

तस्मिन् जगद्भर्तुर्बिम्बे दृशोरध्वनि चक्षुषोः पथि, नीयमाने सति, इव यथा, अंशुबिम्बे सूर्यमण्डले, दृष्टे सति, ध्वान्तवत्, तत्र देशे नृणां नराणां, सवेशवासाः समीपवासिनो ये अतुला-अप्रमाणा ये कोलिकादयस्तस्कराः, आदिशब्दात् तुरुष्कराजपुत्रपगीप्रमुखा ये ग्रामोपद्रवकारिणस्तेषां भीर्भीतिः, प्रनष्टा । अयमपि सप्तमोपजातिप्रकारः ॥ ४७ ॥

तां मूर्तिमुद्यन्महिमाभिरामां
श्रद्धालवः पूरितकामकामाम् ।
निवेशयामासुरथो तदावि-
र्भावास्पदे भूमिगृहे महेन ॥ ४८ ॥

अथो श्रद्धालवः श्रावकाः, तां मूर्त्तिं, किं०, उद्यन्महिम्ना महामाहात्म्येन अभिरामां, पुनः किं०, पूरिताः पूर्णीकृताः

कामम् अत्यर्थं कामा अभिलाषा यया ताम्, तदाविर्भावाऽऽस्पदे तत्प्रकटीभवनभूमिस्थाने भूमिगृहे, निवेशयामासुः अस्थापयन् । अयमपि सप्तमो भेदः ॥ ४८ ॥

पृथ्व्यां पृथिव्यां प्रथितप्रभावं
तत्तीर्थमत्यर्थमपास्तदौःस्थ्यम् ।
साक्षात् समायात इवादिनाथ-
प्रभुः प्रभूताद्भुतहेतुरासीत् ॥ ४९ ॥

तत्तीर्थं श्रीरामसैन्यस्थप्रतिमालक्षणं, पृथिव्यां भूमौ, किं०, पृथ्व्यां विस्तीर्णायामिति, प्रथितः प्रसिद्धः प्रभावः प्रतापो यस्य तत्, पुनः किं०, अत्यर्थमपास्तदौःस्थ्यं ध्वस्तदौर्गत्यम्, इवेत्युत्प्रेक्ष्यते–साक्षात् आदिनाथप्रभुः समायात इति, प्रभूताद्भुतहेतुर्महाश्चर्यस्य हेतुः कारणमासीत् । अष्टमोपजातिरियम् ॥ ४९ ॥

तस्याथ तीर्थस्य नमस्कृते द्राक्
श्रीराजधन्याह्वपुरीयसङ्घः ।
विहर्तुकामैर्गतकामकामैः
श्रीसूरिसिंहैः सहितश्चचाल ॥ ५० ॥

अथ तस्य तीर्थस्य नमस्कृते नतिकरणार्थं, श्रीरायधन्यपुरीयः सङ्घः श्रीसूरिसिंहैः किं०, विहर्तुकामैः पूर्वमपि चतुर्मासकपारणके चिचलिषुभिः, पुनः, गतकामकामैर्निष्कामाभिलाषैः, सहितः चचालेत्यचलत् । सप्तमभेदोपजातिरियम् ॥ ५० ॥

उन्मूलयन् वर्त्मनि दुर्मतीनां
वृन्दं द्रुमाणामिव वारणेन्द्रः ।
पदे पदे भूरिधनैर्जनौघैः

प्रपूज्यमानो विजहार पूज्यः ॥ ५१ ॥

वारणेन्द्रो गजेन्द्र इव, द्रुमाणां तरूणां वृन्दम्, तथा वर्त्मनि मार्गे, दुर्मतीनां कुमतीनां वृन्दम्, उन्मूलयन्, पुनः, पदे पदे स्थाने स्थाने, जनौघैः किं०, भूरिधनैर्महाधनैः, प्रपूज्यमानः स पूज्यः, विजहार विहृतवानिति । अयमुपजातेर्नवमः प्रकार- इति ॥ ५१ ॥

अथ क्रमात् स क्रमविद् नितान्ता-

ऽनघेन सङ्घेन समं शमीशः ।

श्रीरामसैन्यं समवाप पापा-

पहं ननाम प्रथमं च नाथम् ॥ ५२ ॥

अथ विहरन् महम्मदावादनगरपाटकादिषु श्रीपार्श्वनाथ-श्रीदधिपद्रीयशान्तिनाथप्रमुखदेवान् प्रणम्य, क्रमात् स गुरुः, किं०, क्रमः कल्प आचारस्तद्वेत्ता, सङ्घेन किं०, नितान्तं नित्यमनघेन निर्मलेन, समं सार्धं, शमीशः साधुराट्, श्रीराम-सैन्यं समवाप प्राप्त इतिः च पुनः, तत्र प्रथमं नाथं श्रीऋषभ-देवं, किं०, पापापहं दुरितध्वंसिनम्, ननामेति नमश्चकारेत्यर्थः । उपजातेस्तृतीयोऽयं प्रकारः ॥ ५२ ॥

प्रमोदपूर्णाननपुण्डरीका-

उपासकास्ते विभवव्ययोत्काः ।

प्रपञ्चयाञ्चक्रुरथो विचित्र-

भङ्गीभिरर्चा प्रथमाप्तभर्तुः ॥ ५३ ॥

अथो ते उपासकाः श्रावका राजधन्यपुरीयाः, किं०, प्रमोदेन संमदेन पूर्णमाननपुण्डरीकं मुखकमलं येषां ते, पुनः किं०, विभवव्यये धनत्यागे उत्का उत्सुकाः, विचित्रभङ्गीभि-

र्नानारचनाभिः बहुप्रकारैरिति यावत्, प्रथमाप्तभर्तुः श्रीआदिनाथस्य, अर्चां पूजां, प्रपञ्चयाञ्चक्रुर्विस्तारयामासुरिति । अयं चतुर्थोपजातिभेद इति ॥ ५३ ॥

स्तोत्रैर्विचित्रार्थभरैर्गभीरैः
शब्दैरुदारैरपि भावपूजाम् ।
निर्माय निर्मायमहीभुजस्ते
व्यधुर्निजं जन्म फलैरफल्गु ॥ ५४ ॥

विचित्रार्थभरैर्नानाप्रकारार्थातिशयैः, स्तोत्रैः स्तवनैः, पुनः किं०, गभीरैर्गम्भीरभावार्थत्वाद् मूर्खैरलब्धत्वाच्चेति, पुनः, उदारैः स्फारैः शब्दैः, यदुक्तं चैत्यवन्दनाभाष्ये नमद्देवेन्द्रैः श्रीदेवेन्द्रसूरीन्द्रैः—"गम्भीरमहुरसद्दमहत्थजुत्तं हवइ थुत्तं"इत्याद्युक्तेः, महार्थस्तोत्रैः महागम्भीरशब्दैश्च भावपूजां निर्माय विधाय, ते निर्मायमहीभुजः मुनिराजाः, निजं जन्म स्वमवतारं, फलैरफल्गु सारं सफलं, व्यधुश्चक्रुरिति । उपजातेरष्टमोऽयं भेदः ॥ ५४ ॥

एकः प्रभुर्नाभिनृपाङ्गजन्मा-
ऽपरो मुनीन्द्रश्च कमाङ्गजन्मा ।
तीर्थद्वयं स्थावरजङ्गमाऽऽख्यं
ख्यातं तदाऽभूद् भविनामघघ्नम् ॥ ५५ ॥

तदा तत्तीर्थनमनावसरे एको नाभिनृपाङ्गजन्मा प्रभुः वृषभदेवः, च पुनः, अपरो मुनीन्द्रो गुरुः, कमाङ्गजन्मा श्रीविजयसेनसूरिः, इदं ख्यातं तीर्थद्वयं, किं०, स्थावरं जङ्गमं चेत्याख्या यस्य तत्, पुनः, अघघ्नं पापापहं, केषां भविनां भव्यजीवानाम्, अभूज्जातम् । उपजातेः षष्ठोऽयं भेदः ॥ ५५ ॥

विधाय यात्रां प्रथमस्य तस्य
तीर्थाधिनाथस्य समस्तसङ्घः ।
स सूरिपादैः सममप्रमादैः
श्रीराजधन्यं पुरमाजगाम ॥ ५६ ॥

तस्य प्रथमस्य तीर्थाधिनाथस्य यात्रां विधाय सूरिपादैः किं०, अप्रमादैर्ध्वस्तप्रमादैः, समं सार्धं, स समस्तसङ्घः, श्रीराजधन्यं पुरमाजगामाऽऽगत इति । द्वादशः प्रकारोऽयमुपजातेः ॥ ५६ ॥

इति नानाछन्दोभिः सर्गं निर्माय शार्दूलविक्रीडितेन तमुपसंहरति–

श्रीमद्धर्मपयःपयोधितनयाभालैकभूषामणौ
तस्मिन् सूरिशिरोमणौ स्थितवति द्रङ्गेऽतितुङ्गे तदा ।
जाता श्रीजिनशासनोन्नतिरतिश्रेयःफलोल्लासिनी
संप्राप्तेऽम्बुमुचीव भूमिवलये भूमीरुहाणां वनी ॥५७॥

तस्मिन् सूरिशिरोमणौ किं०, श्रीमान् यो धर्मः अर्हद्धर्मस्तस्य या पयःपयोधितनया क्षीरनीरेश्वरनन्दना लक्ष्मीरिति यावत्, तस्या भालैकभूषामणौ ललाटभूषणरत्ने, तदा तत्र द्रङ्गे, किं०, अतितुङ्गेऽतिमहति श्रीराजधन्यपुरद्रङ्गे, स्थितवति सति, श्रीजिनशासनोन्नतिः श्रेयःफलेन श्लाघ्यफलेनोक्तरूपेण धर्मकर्मलक्षणेन वाऽग्रेतनसर्गवक्ष्यमाणेन प्रतिष्ठादिसुकृतकृत्यरूपेण श्रेयःफलेन उल्लासिनी दीप्तिमती, जाता; यथा अम्बुमुचि मेघे, भूमिवलये संप्राप्ते सति, भूमीरुहाणां तरूणां, वनी तरुवाटिकेति दृष्टान्तः ॥ ५७ ॥

• • • • • • • • • • • • • • • • • • • • • • • • • • • • •

इतीति निखिलं निगदसिद्धम् ।

इति सकलसुविहितसभासार्वभौमसमानपण्डितमण्डलीमौलिमौलीयमानपण्डितश्रीकमलविजयगणिसुशिष्यमुख्यपण्डितपुरन्दरमुख्यपण्डितश्रीविद्याविजयगणिविनेयवाचकश्रीगुणविजयगणिविरचितायां श्रीविजयप्रदीपिकाभिधानधारिकायां सुखावबोधिकायां श्रीविजयप्रशस्तिमहाकाव्यटीकायामष्टादशः सर्गोऽर्थतः समर्थितः ॥



अर्हम्

# अथ एकोनविंशः सर्गः ।

अथ एकोनविंशः सर्गः प्रारभ्यते–

अथान्यदा श्रीगुरुवाक्प्रबुद्धैः
श्रद्धालुभिर्बन्धुरबुद्धिबोधैः ।
अभ्यर्थिताः श्रीगुरवः प्रकामं
ते कर्तुकामा अभवन् प्रतिष्ठाम् ॥ १ ॥

अन्यदा तत्रैव राजधन्यपुरे, श्रद्धालुभिः श्रावकैः, किं०, श्रीगुरूणां वाग् वाणी तया प्रबुद्धैः प्रतिबुद्धैः, पुनः किं०, बन्धुरो बुद्धिबोधो मतिज्ञानं येषां तैः, श्रीगुरवः श्रीविजयसेनसूरिपादा अभ्यर्थिताः सन्तः प्रतिष्ठां नवीनजिनचैत्यस्थापनां कर्तुकामाः, अभवन् बभूवुरिति ॥ १ ॥

अथ षड्भिस्तां वर्णयति–

क्षीरार्णवोत्तुङ्गतरङ्गरङ्ग-

दुकूलमालाकलितैरनेकैः ।
श्रीमण्डितैर्मण्डपकैरखण्डै-
रुदञ्चितोच्चैः शरदभ्रशुभ्रैः ॥ २ ॥
पुण्याङ्गिनां मङ्गलकारणानां
स्थूणागणस्थापिततोरणानाम् ।
श्रीधोरणीभिर्भृशहारिणीभि-
र्विभूषिता विस्मयकारिणीभिः ॥ ३ ॥
कुनाभिकुम्भायितपूर्णकुम्भ-
माङ्गल्यचञ्चच्चतुरस्रिकाङ्का ।
कर्पूरकाश्मीरजगन्धसारा-
दिभिर्भृशं निर्मितशस्तहस्ता ॥ ४ ॥
वित्तव्ययप्रीणितमार्गणौघ-
प्रवर्तितात्यद्भुतगीतगाना ।
शृङ्गारभृङ्गारकुलाङ्गनाभि-
र्जेगीयमानातुलमङ्गलालिः ॥ ५ ॥
व्योमाङ्गणव्यापिनिनादवर्य-
तूर्यारवाऽऽमन्त्रितनैकलोका ।
पूगीफलश्रीफलपेशलश्री-
प्रभावनाध्वस्तसमस्तशोका ॥ ६ ॥
तद्वासिना वासणझोटकेन
श्रद्धालुना शोभनवासनेन ।

विधीयमानोरुमहःप्रकृष्टा
श्रीसूरिसिंहैर्विदधे प्रतिष्ठा ॥ ७ ॥

सा प्रतिष्ठा किं०, क्षीरार्णवस्य क्षीरसमुद्रस्य ये उत्तुङ्गास्तरङ्गास्तद्वद् रङ्गन्ती लसन्ती या दुकूलानां पट्टकूलानां सूक्ष्मवाससां वा माला श्रेणिस्तया कलितैः, पुनरनेकैः, पुनः, श्रीमण्डितैः लक्ष्मीभूषितैः, पुनरखण्डितैः, पुनः, शरदभ्रवत् शुभ्रैर्धवलैः, मण्डपैः उदञ्चिता उन्नतिं प्राप्ता ॥२॥ पुनः, प्रतिष्ठा किं०, पुण्याङ्गिनां पुण्यवतां प्राणिनां मङ्गलकारणानां कल्याणहेतूनां, स्थूणागणेषु स्तम्भसमूहेषु स्थापितानां तोरणानां श्रीधोरणीभिः स्तम्भस्थतोरणशोभाश्रेणिभिः, किं०, भृशम् अतिशयेन हारिणीभिः मनोहराभिः, पुनः, विस्मयकारिणीभिश्चमत्कारकारिणीभिः, विभूषिता विभ्राजितेति ॥ ३ ॥ पुनः किं०, कुनाभिकुम्भा निधिकुम्भा इवाचरिता आचारेऽर्थे उपमानाद् यप्रत्ययस्तेन कुनाभिकुम्भायिता ये पूर्णकुम्भा अखण्डकलसास्तल्लक्षणं यन्माङ्गल्यं मङ्गलवस्तु तेन चञ्चच्चतुरस्रिकाया लोके "चउरी" इति प्रतीताया अङ्को विभूषा यस्यां सा, पुनः किं०, कर्पूरो घनसारः काश्मीरजं कुङ्कुमं लोके "केसर" इति प्रतीतम् , गन्धसारश्चन्दनं लोके "सूखड" इति प्रतीतं तदादिभिरपरैरपि सुगन्धिद्रव्यैस्तुरुष्ककस्तूरिकाप्रमुखैर्निर्मिताः शस्ता हस्ताः स्थासका लोके "हाथा" इति प्रतीता यस्यां सा ॥४॥ पुनः किं०, वित्तव्ययेन प्रीणितैर्मार्गणौघैर्याचकनिकरैः प्रवर्तितानि अद्भुतान्याश्चर्यकारीणि, गीतगानानि यस्यां सा, पुनः किं०, शृङ्गारस्य प्रथमरसस्य भृङ्गारो भाजनं शृङ्गारपात्रमिति याः कुलाङ्गनास्ताभिर्जेगीयमाना अतिशयेन गीयमाना अतुला मङ्गलालिर्यस्यां सा ॥ ५ ॥ पुनः प्रतिष्ठा किं०, व्योमाङ्गणव्यापिना गगनस्पृशा निनादेन ध्वनिना वर्याणि यानि तूर्याणि तेषामारावैः शब्दैः

आमन्त्रिता नैकलोका अनेकजना यस्यां यया वा सा, पुनः किं०, पूगीफलानां श्रीफलानां च पेशलश्रियो मनोज्ञशोभायाः प्रभावनास्ताभिर्ध्वस्तः समस्तः शोको यस्यां यया वा सा ॥६॥ श्रीसूरिसिंहैः प्रतिष्ठा विदधे चक्रे इत्यन्वयः; किं०, तद्वासिना तत्रवास्तव्येन, पुनः, शोभनवासनेन भव्यभावनेन, केनेत्याह–वासणझोटकेन श्रद्धालुना वासणझोटाख्यश्रावकेण, विधीयमानं उरु महद् व्याख्यातस्वरूपं यन्मह उत्सवस्तेन प्रकृष्टा उत्कृष्टेत्यर्थः । इति षण्णां व्याख्या ॥ ७ ॥

तत्र प्रतिष्ठामहसि प्रभावा-
निवाऽऽबभासे शमिभूमिभर्ता ।
कुदृग्दृशां कौशिककामिनीनां
घनार्तिकर्ता तमसां प्रहर्ता ॥ ८ ॥

शमिनां साधूनां भूमिभर्ता राड् मुनिराजः, तत्र प्रतिष्ठामहसि तस्मिन् प्रतिष्ठोत्सवे, प्रभावानिव सूर्य इव, आबभासेऽशोभतेत्यन्वयः; विशेषणद्वयेन गुरुं च सूर्यं च विशिनष्टि–किं०, कुदृग्दृशां कौशिककामिनीनां मिथ्यादृग्दृष्टिघूकाङ्गनानां घनार्तिकर्ता बह्वर्तिकारीति, पुनः किं०, तमसां पापानाम्, अन्यत्र ध्वान्तानां च प्रहर्ताऽपहारी चेति ॥ ८ ॥

तत्रोत्सवे श्रावकलोकवृन्दै-
रभ्यर्चिता भासुररूप्यरूपैः ।
विभुर्विभूषां बिभरांबभूव
सूरिः सुराणामिव कल्पपुष्पैः ॥ ९ ॥

तत्र प्रतिष्ठाक्षणे श्रावकलोकवृन्दैः भासुररूप्यस्य कलधौतस्य रूपैर्नाणकैः, अभ्यर्चितः पूजितः, विभुर्गुरुः, विभूषां

शोभां, बिभराम्बभूव बभार, यथा सुराणां सूरिर्बृहस्पतिः, कल्पपुष्पैः सुरतरुप्रसूनैरिति ॥ ९ ॥

कियन्त्यहानि स्थितवांश्च तत्र
सङ्घाऽऽग्रहात् सूरिशिरोऽवतंसः ।
नेत्रोत्सवं चारु सृजन् जनानां
ज्योत्स्नाप्रियाणामिव राजराजः ॥ १० ॥

च पुनः, तत्र नगरे राधनपुरे, सङ्घाऽऽग्रहात् सूरिशिरोवतंसः आचार्यमौलिशेखरः, कियन्ति कतिचित्, अहानि दिनानि, स्थितवान्, किं कुर्वन्, जनानां लोकानां, नेत्रोत्सवं चारु यथा स्यात् तथा सृजन्, क इव केषामिति दृष्टान्तेनाह– राजराजश्चन्द्र इव, ज्योत्स्नाप्रियाणां चकोराणामित्यर्थः ॥ १० ॥

भट्टारकास्तेऽप्यथ पावयन्तः
पृथ्वीतलं पत्कजपांसुपुञ्जैः ।
क्रमादवापुः प्रकटप्रभावाः
पुरं प्रकृष्टं वटपल्लिसंज्ञम् ॥ ११ ॥

अथ एकदा रायधनपुरात् पृथ्वीतलं भूतलं, पत्कजपांसुपुञ्जैश्चरणकमलरेणुगणैः, पावयन्तः पवित्रयन्तः सन्तः, ते भट्टारकाः, किं०, प्रकटप्रभावा इति स्पष्टम्, वटपल्लिसंज्ञं वडलीनामकं नगरम्, अवापुः प्राप्ता इति ॥ ११ ॥

स्तूपद्वयं तत्र विचित्रचित्रं
विभाति भूयोमहिमैकधाम ।
यशोयुगं श्रीविजयादिदान-
श्रीहीरसूर्योरिव मूर्तमेतत् ॥ १२ ॥

तत्र वटपल्ल्यां, स्तूपद्वयं, किं०, विचित्रचित्रं नानाश्चर्यम्, पुनः, भूयोमहिमैकधाम बहुमाहात्म्यमन्दिरम्, विभाति, इवेत्युत्प्रेक्ष्यते– श्रीविजयादिदानश्रीहीरसूर्योः श्रीविजयदानसूरिश्रीहीरविजयाचार्ययोः, मूर्तमेतद् यशोयुगं कीर्तिद्वयमिति ॥१२॥

स्तूपद्वये तत्र तपाधिभर्त्रो-

निर्वाणकल्याणकपाविते$$ऽ$$ह्नि ।

संभूय भूयांसि महांसि सङ्घ-

स्तनोति नित्यं प्रमना मनस्वी ॥ १३ ॥

तपाधिभर्त्रोस्तपागच्छस्वामिनोस्तयोः पूर्वोक्तयोः, स्तूपद्वये तत्र निर्वाणकल्याणकपाविते अह्नि वासरे भाद्रपदाऽवदातैकादशीतिथौ, सङ्घो वटपल्लिसङ्घः, पत्तननगरवासी सङ्घश्च, संभूय मिलित्वा, भूयांसि महांसि तनोति, सङ्घः किं०, प्रमना हृष्टमनाः, पुनः, मनस्वीति प्रतीतम् ॥ १३ ॥

पृथक् पृथक् तत्र गुरुक्रमाणां

नतिं विधायाऽथ तपाधिनाथः ।

श्रीहीरभट्टारकपादपादौ

स्तौति स्म भक्त्येति महाप्रसादौ ॥ १४ ॥

अथ तत्र स्तूपस्थगुरुक्रमाणां पृथक् पृथग् नतिं विधाय नमस्कृत्य, तपाधिनाथस्तपागच्छेशः श्रीविजयसेनसूरिः, श्रीहीरभट्टारकपादानां पादौ, किं०, महान् प्रसादो गच्छाधिपत्यप्राप्तिलक्षणो ययोस्तौ महाप्रसादौ, इति वक्ष्यमाणरूपेण प्रकारेण, स्तौति स्माऽस्तवीत् ॥ १४ ॥

श्रीमान् कामगवीव कामितसुखं सूते स्म यः सेवित-

श्चक्रे यः सवितेव विश्वमखिलं सालोकमालोकितः ।

विद्युत्वानिव पापतापमहरद् यः संस्तुतः सूरिराट्
सिद्ध्यै तस्य मुनीन्द्रहीरविजयस्याऽऽनन्दिके पादुके।१५।

यः श्रीमान् गुरुः सेवितः सन्, कामगवीव कामधेनुरिव, कामितसुखं सूते स्माऽकरोत्, पुनः, य आलोकितः सन्, सवितेव सूर्य इव, अखिलं विश्वं सालोकं सप्रकाशं, चक्रे चकार, पुनः, यः सूरिराट् संस्तुतः सन् विद्युत्वानिव मेघ इव, पापतापमहरत्, तस्य मुनीन्द्रहीरविजयस्य पादुके, किं०, आनन्दिके प्रमोददायिके, सिद्ध्यै ऐहिकामुष्मिककार्यसिद्धये, आस्तामिति क्रियाऽध्याहार्येति तात्पर्यम् ॥ १५ ॥

सच्चक्रप्रणयी पयोरुहवनं भास्वानिवाऽभीशुभिः
प्रीताऽस्वल्पकलापिकः कृषिभरं तोयैस्तडित्वानिव ।
विश्वं विश्वमतोषयत् स्ववचनैर्यः पुण्यनैपुण्यधीः
सिद्ध्यै तस्य मुनीन्द्रहीरविजयस्याऽऽनन्दिके पादुके॥१६॥

यो गुरुः स्ववचनैः विश्वं विश्वं समस्तं जगत्, अतोषयत् तुष्टिभाक् कुरुते स्म, यः किं०, पुण्यनैपुण्या पवित्रचातुर्या धीर्यस्य सः, अथ पूर्वार्धेन दृष्टान्तद्वयमाह–इव यथा, भास्वान् सूर्यः, किं०, सच्चक्रप्रणयी शोभनचक्रवाकस्नेही, गुरुपक्षे सच्चक्रस्य सज्जनसमूहस्य प्रणयी, अभीशुभिः किरणैः, पयोरुहवनं कमलवनं तोषयति, पुनः, तडित्वानिव मेघ इव, किं०, प्रीता हर्षिता अस्वल्पा बहवः कलापिनो मयूरा येन यस्माद्वा सप्रीतास्वल्पकलापी, के कलापिक इति, गुरुपक्षे प्रीता अस्वल्पाः कलापिन आशीर्वाददायिनो भट्टाद्याः कलावन्तो येनेति सः, तोयैर्जलैः, कृषिभरं क्षेत्रनिवहं, तथेति सिद्ध्यै तस्येति चतुर्थचरणव्याख्या प्राग्वत् ॥ १६ ॥

आलोकं विलसत् समस्तकमलामोदं गभस्तेरिव

स्तोमं तोयमुचामिवास्तिभुवनानन्दं पदं श्रेयसाम् ।
यं लोको बहु मन्यते स्म सकलः सर्वत्र सम्यक्त्वदृक्
सिद्ध्यै तस्य मुनीन्द्रहीरविजयस्याऽऽनन्दिके पादुके॥ १७॥

सकलः सर्वोऽपि लोकः, किं०, सर्वत्र पृथ्व्यां, सम्यक्त्वे दृग् दृष्टिर्मतिर्वा यस्य सः, यं गुरुं बहु मन्यते स्मेति क्रियाकारकयोगः; पूर्वार्धेन दृष्टान्तद्वयीप्रकटनपूर्वं विशेषणपुरस्कारेण च वर्णयति–इव यथा, गभस्तेस्तरणेः, आलोकम् उद्द्योतं, किं०, विलसन् समस्तकमलानां सर्वाम्भोजानामामोदो गन्धो यस्मात्तं, गुरुपक्षे विलसन् समस्तायाः सकलायाः कमलाया आमोदो हर्षो यस्मादिति तं, पुनः तोयमुचां वारिमुचां स्तोमं समूहं, किं०, अस्ति भुवनात् सलिलादानन्दो यस्मात्तं, गुरुपक्षे अस्ति भुवनानन्दो जगदानन्दो यस्मात्तं अस्तिभुवनानन्दं, पुनर्यं किं०, श्रेयसां मङ्गलानां धर्माणां वा पदं स्थानम्, एतावता सूर्यालोकमिव मेघसंघातमिव यं गुरुं लोको बहुमानभाजनमकरोदिति निर्गलितार्थः, अग्रेतनं प्राग्वत् ॥ १७ ॥

स्वाज्ञावर्तिषु मण्डलेषु निखिलेष्वानन्दतोऽचीकरत्
प्रीतो यद्वचनैः कृपावनघनैः शाहिर्हमाऊसुतः ।
जीवानामभयप्रदानपटहोद्घोषानघध्वंसिनः
सिद्ध्यै तस्य मुनीन्द्रहीरविजयस्यानन्दिके पादुके॥ १८॥

हमाऊसुतः शाहिः श्रीअकब्बरः, किं०, यद्वचनैर्यस्य गुरोर्वचनैः, किं०, कृपावने दयाऽऽरामे घनैर्मेघैस्तद्वर्धनहेतुत्वात्, प्रीतो हृष्टः सन्, जीवानां जन्तूनाम्, अभयप्रदानस्य पटहोद्घोषान् किं०, अघध्वंसिनः पापापहारिणः, निखिलेषु मण्डलेषु देशेषु सौराष्ट्रमहाराष्ट्रलाटकर्णाटपूर्वदेशदक्षिणदेशकुरुदेशकाश्मीरदेशगूर्जरमरुस्थलीमालवमेदपाटवैराटबङ्गसपससिन्धुजाल-

न्धरादिषु, स्वाज्ञावर्तिषु निजशासनस्थायिषु, अचीकरत् स्वाज्ञावधि जीवाऽमारिर्यस्योपदेशादकार्षीदिति भावार्थः, शेषं सुगमम् १८

श्रीमान् शाहिरकब्बरक्षितिपतिर्यद्वाग्भिरानन्दितः
कृत्वा तत्करमुक्तिमुक्तिमनघां बिभ्रद् ददौ दक्षधीः ।
तीर्थं जैनजनाय तीर्थतिलकं शत्रुञ्जयोर्वीधरं
सिद्ध्यै तस्य मुनीन्द्रहीरविजयस्यानन्दिके पादुके ॥ १९ ॥

यद्वाग्भिः आनन्दितः अकब्बरक्षितिपतिः तत्करमुक्तिं कृत्वा अनघां उक्तिं बिभ्रत्, पुनः, दक्षधीर्निपुणमतिः, जैनजनाय शत्रुञ्जयोर्वीधरं तीर्थं करमोचनपूर्वकशत्रुञ्जयोज्जयन्ततीर्थद्वयं यद्वचनाज्जैनतपाऽऽयत्तं कृतवानिति, शेषं स्पष्टम् ॥ १९ ॥

स्वं गाढाग्रहिणं कदाग्रहमघाङ्कूरं विहाय स्वयं
लुम्पाका ऋषिमेघजीप्रभृतयः श्रेयोऽर्थिनोऽल्पेतराः ।
भृङ्गत्वं बिभराम्बभूवुरनिशं यत्पादपाथोरुहे
सिद्ध्यै तस्य मुनीन्द्रहीरविजयस्यानन्दिके पादुके ॥ २० ॥

पुनः, यत्पादपाथोरुहे लुम्पाका ऋषिमेघजीप्रभृतयः सप्तविंशतिमुनयः श्रेयोऽर्थिनो धर्मार्थिनः सन्तः, स्वं कदाग्रहं अघाङ्कूरं पापाङ्कुरं, पुनः किं०, गाढाग्रहिणं महाहठमयमपि, विहाय त्यक्त्वा, भृङ्गत्वं भ्रमरतां, बिभराम्बभूवुर्यच्चरणकमलसेवापराः संजाता इति, परं सुबोधम् ॥ २० ॥

चैत्याद्युद्धरणैर्व्रतानुसरणैः सन्मानदानोत्सवै-
रेकच्छन्नमिवाऽभवद् भगवतां सद्वासनं शासनम् ।
यस्मिञ्श्रीतपगच्छवल्लिजलदेऽलङ्कुर्वति क्ष्मातलं
सिद्ध्यै तस्य मुनीन्द्रहीरविजयस्यानन्दिके पादुके ॥ २१ ॥

यस्मिन् किं०, श्रीतपगच्छवल्लिजलदे तपागणलतामेघे तद्विस्तारहेतुत्वादिति, क्ष्मातलं अलङ्कुर्वति सति भूतलालङ्कारे भवति सति, चैत्यादीनां उद्धरणैर्जीर्णोद्धारैः, पुनः, व्रतानुसरणैः पञ्चमहाव्रततुर्यव्रतद्वादशव्रताद्याचरणैः, पुनः, सन्मानदानोत्सवैः गुरुदेवादिबहुमानवस्त्रपात्रप्रदानाद्युत्सवैः, भगवतां तीर्थकृताम्, शासनं किं०, सद्वासनं शोभनभावनम्, एकच्छत्रमिवाऽभवत्, किं बहुना ?, श्रीजिनशासनं यस्मिन् गुरौ सति साक्षाद्धर्मैकातपत्रमिव जातमिति तत्त्वम् ॥ २१ ॥

श्रीवत्सध्वजमत्स्यचक्रकुलिशच्छत्राङ्कुशाम्भोरुहा-
म्भोधिस्वस्तिकचामरद्विपनिपद्वीपादिचिह्नाञ्चिते ।
ये नित्यं नमतां भवन्ति वशगा राज्यर्द्धयः सिद्धय-
स्ते सूरेस्त्रिदशस्तुते सुजयतामानन्दिके पादुके ॥२२॥

ये श्रीहीरविजयसूरीश्वरपादुके किं०, श्रीवत्सोऽष्टमङ्गलमध्यवर्ती, ध्वजः केतुः, मत्स्यो मीनः, चक्रं रथाङ्गं, कुलिशं वज्रं, छत्रं प्रतीतम्, अङ्कुशः सृणिः, अम्भोरुहं कमलम्, अम्भोधिः समुद्रः, स्वस्तिकः प्रसिद्धः, चामरं प्रतीतं, द्विपो हस्ती,निपः कलशः, द्वीपो जम्बूद्वीपादिः, आदिशब्दात् यूपस्तूपोडुपविटपिमन्दिरतुरगगिरिवरादिग्रहः, तेन श्रीवत्सध्वजमत्स्यचक्रकुलिशच्छत्राङ्कुशाम्भोरुहाम्भोधिस्वस्तिकचामरद्विपनिपद्वीपादीनि चिह्नानि लाञ्छनानि तैरञ्चिते कलिते, नमतां नराणां राज्यर्द्धयः साम्राज्यश्रियः, सिद्धयोऽष्टौ चाऽणिमादयः, वशगा भवन्ति, ते सूरेस्तस्य पादुके किं०, त्रिदशैर्देवैः स्तुते सुजयतां स्विति सर्वप्रकारेण जयतां जयिन्यौ भवतामिति काव्यार्थः । अत्राऽष्टकस्यैवोपयोगाद् नवमं वृत्तं ग्रन्थकृन्नामाङ्कितं न विवृतम्, अष्टकमेव विवृतमिति ॥ २२ ॥

भक्त्येत्यभिष्टुत्य सदर्थसार्थ-
श्रव्येण काव्यप्रकटाष्टकेन ।
श्रीहीरसूरीन्द्रपदौ मुनीन्दुः
कृती कृतार्थीकुरुते स्म जन्म ॥ २३ ॥

इति अमुना काव्यप्रकटाऽष्टकेन, किं०, सदर्थसमूहैः श्रव्येण श्रवणीयेन, श्रीहीरविजयसूरिपदौ अभिष्टुत्य स्तुत्वा, मुनीन्द्रः स गुरुः, किं०, कृती दक्षः, जन्म कृतार्थीकुरुते स्म स्वावतारं सार्थकं कृतवानित्यर्थः ॥ २३ ॥

पद्माभिरामामभितोऽभिसर्प-
दुल्लोलकल्लोलितभूमिभागाम् ।
ततः प्रभुः पत्तनराजधानीं
मरालबालः सरसीमिवाऽऽगात् ॥ २४ ॥

ततो वटपल्लीतः, प्रभुर्गुरुः, सरसीं मरालबाल इव पत्तनराजधानीमागादित्यन्वयः, पत्तनराजधानीं सरसीं च श्लेषेण विशिनष्टि—कीदृशीं, पद्माभिः श्रीभिः अभिरामां, पक्षे पद्मैः कमलैरभिरामां रम्यां, पुनः किं०, अभितो विष्वक्, अभिसर्पन्तो धावन्तो ये उल्लोला लहर्यस्तैः कल्लोलितो वीचीमयो भूमिभागो यत्र, पक्षे उत्प्राबल्येन लोल उत्सुकत्वाचापल्यभाक् कल्लोलितो हर्षितो भूमिभागो यस्यां ताम्, एतावता कलहंसः सर इव, गुरुः पत्तननगरं प्राप्त इति ॥ २४ ॥

पयोदवद् वारिजवच्च विन्ध्या-
ऽभिधानभूमीधरवच्च जज्ञे ।
मुदे गुरुस्तन्नगरप्रजानां
सारङ्गसारङ्गदृशामिवोच्चैः ॥ २५ ॥

गुरुस्तन्नगरप्रजानां पत्तनजनानां, मुदे जज्ञे जात इत्यन्वयः, किंवत्, पयोदो मेघस्तद्वत्, यथा सारङ्गश्चातकस्तस्य सारङ्गदृशः स्त्रियस्तासां, पुनः, वारिजं कमलं तद्वत्, यथा सारङ्गो भ्रमरस्तस्य सारङ्गदृशां भ्रमरीणां,पुनः,विन्ध्याभिधानो भूमीधरो विन्ध्याचलस्तद्वत्, यथा सारङ्गा हस्तिनस्तेषां सारङ्गदृशो हस्तिन्यस्तासाम्, अत्र सारङ्गशब्दानेकार्थो यथा "सारङ्गो विहगान्तरे चातके चञ्चरीके च द्विपैणशबलेषु च" इति वचनादत्र सारङ्गशब्दस्य त्रयोऽर्थाः समर्थिता इति ॥ २५ ॥

इतश्च—इतश्चेति संबन्धान्तरसूचकमव्ययम्,

यथा—

भट्टारकश्रीविजयादिसेन-<br>
पट्टैकपाथोधिकलानिधीनाम् ।<br>
पूर्वं पवित्रीकृतपत्तनानां<br>
तपागणाचार्यमहीधनानाम् ॥ २६ ॥

विशुद्धसिद्धान्तसुधापिबानां<br>
सुधापिबाऽऽचार्यधियां गुरूणाम् ।<br>
उत्साहितश्चारुवचोविचारै-<br>
र्वातैरिवाऽम्भोधर औत्तराहैः ॥ २७ ॥

निजं परित्यज्य मताधिपत्यं<br>
लुम्पाकमुख्यो मुनिमेघराजः ।<br>
भट्टारकक्ष्मापमथो ववन्दे<br>
तत्पादयोर्मूलमुपाययियासुः ॥ २८ ॥

त्रयाणां व्याख्या यथा—इतश्चावसरे तपागणस्य आचा-

र्यराजः श्रीविजयदेवसूरयस्तेषां, किंलक्षणानाम्, पूर्वं पवित्रीकृतं पत्तनं यैस्तेषां तत्राणहिल्लपाटके स्थितानामिति, पुनः किं०, भट्टारकश्रीविजयादिसेनपट्टैकपाथोधौ कलानिधयश्चन्द्रास्तेषाम् ॥२६॥ पुनः किं०, विशुद्धसिद्धान्तसुधां निर्मलाऽऽगमामृतं पिबन्तीति तेषां विशुद्धसिद्धान्तसुधापिबानां, पुनः किं०, सुधापिबाचार्यः सुराचार्यो बृहस्पतिरिति यावत्, तद्वद् धीर्येषां तेषां गुरूणां,चारु वचोविचारैः मनोज्ञवाग्विचारैः,औत्तराहैः कौबेरैयैः, वातैः पवनैः, अम्भोधर इव उत्साहितः, एतावता श्रीविजयदेवसूरिवचनैर्विशेषेणोत्साहविषयीकृत इति ॥ २७ ॥ स क इत्याह— लुम्पाकमुख्यो लुङ्काख्यकुमतस्वामी पूर्वं श्रीहीरविजयसूरीश्वरदीक्षितऋषिमेघजीकस्य प्रशिष्यः मुनिमेघराजः, निजं मताधिपत्यं लुम्पाकमुख्यतां, परित्यज्य, अथ भट्टारकक्ष्मापं श्रीभट्टारकराजं श्रीविजयसेनसूरिं, ववन्देऽवन्दत, स किं कर्तुमिच्छुः, उपाऽऽयियासुः आगमनमिच्छुः, किं, तत्पादयोश्चरणयोर्मूलं पार्श्वं सेवितुकाम इति ॥ इति त्रयाणां व्याख्या ॥ २८ ॥

सुधारसासारसवर्णवर्ण-
माकर्ण्य सम्यक् सुगुरूपदेशम् ।
घनाघनध्वानमिव प्रवेकं
केकी विवेकी स मुदं प्रपेदे ॥ २९ ॥

स मेघराजर्षिः, सम्यग् भावेन, समाकर्ण्य श्रुत्वा, कं, सुगुरूपदेशं, किं०, सुधारसासारस्य पीयूषरसवृष्टेः सवर्णास्तुल्या वर्णा अक्षराणि यत्र तम्, इव यथा, केकी मयूरः, घनाघनध्वानं मेघध्वनिं, श्रुत्वा, तथा मुदं प्रपेदे हर्षं प्राप्तवानिति, शेषं सुगमम् ॥ २९ ॥

निजं नभोम्भोजनिभं विभाव्य

मतं कुमत्यर्णवपूर्णिमेन्दुम् ।
स श्रीतपागच्छमनच्छगच्छं
छायालयं शीलितुमुत्सुकोऽभूत् ॥ ३० ॥

निजं मतं, किं०, कुमत्यर्णवे कुबुद्धिजलधौ पार्वणेन्दुं तद्वृद्धिकर्तृत्वात्, ईदृग् लुङ्काख्यकुमतं, पुनः, नभोम्भोजनिभं गगनारविन्दतुल्यं परमार्थतोऽसत्प्रायं, विभाव्य विचार्य, स मेघराजऋषिः, श्रीतपागच्छं अनच्छगच्छं बहलवृक्षम्, अत एव छायायाः शोभायाः, पक्षे अनातपश्छाया तदालयं, शीलितुं सेवितुम्, उत्सुकोऽभूदिति ॥ ३० ॥

तं मेघराजर्षिमशेषसङ्घः
सिसेविषुं वीक्ष्य गुरुक्रमाब्जम् ।
हर्षप्रकर्षोद्गतरोमराजि-
रुत्कोरको भूरुहवद् बभूव ॥ ३१ ॥

अशेषसङ्घस्तं मेघराजर्षिं, किं०, सिसेविषुं, किं, गुरुक्रमाब्जं गुरुचरणकमलसेवास्पृहयालुं, वीक्ष्य हर्षप्रकर्षेणोद्गतो रोमराजिर्यस्य सः, भूरुहवद् वृक्षवत्, उत्कोरको जातकलिक इव, बभूवाऽभूत् ॥ ३१ ॥

मनोरमाडम्बरडिण्डिमाभान्
महान् गताघे सकलेऽपि सङ्घे ।
प्रकुर्वति श्रीसुततुल्यरूपो
भूपो मुनीनां तमधाद् यतित्वे ॥ ३२ ॥

गताघे निष्पापे, सकलेऽपि सङ्घे पत्तनवासिनि, महान् उत्सवान्, किं०, मनोरमो रम्यो य आडम्बरो जिनशासनप्र-

भावनारूपो विचित्रवादित्रपवित्रगीतगानादिमयमहाडम्बरस्तस्य सूचने डिण्डिमाभान् पटहतुल्यान्, प्रकुर्वति सति, मुनीनां भूपो गुरुः, किं०, श्रीसुततुल्यं कामसमानं रूपं यस्य सः, तं मेघराजं लुम्पाकवेषधारिणं स्थानकत्रिकोपेतं, यतित्वेऽधात् तपागच्छ-संबन्धिवेषप्रदानपूर्वकं दीक्षितवानिति ॥ ३२ ॥

सङ्घोऽन्यदा श्रीकुमरादिमस्य
गिरेः पुरस्य प्रतिपत्तिपूर्वम् ।
विज्ञेश्वरान् विज्ञपयाम्बभूव
विस्तारवद्वैनयिकैर्वचोभिः ॥ ३३ ॥

अन्यदा श्रीकुमरादिमस्य गिरेः कुमरगिरेः पुरस्य पत्तननगराभ्यर्णवर्तिनः सङ्घः प्रतिपत्तिपूर्वं भक्तिपूर्वकं, विज्ञेश्वरान् गुरून्, वचोभिर्वचनैः, किं०, विस्तारवद्वैनयिकैर्विस्तारिविनयैः, विज्ञपयाम्बभूव विज्ञप्तिकामग्रे वक्ष्यमाणलक्षणां चकारेत्यर्थः॥३३॥

कृपालवः श्रीमहनीयपादाः
प्रसादमाधाय गतावसादाः ।
अस्मास्वनुग्राहिधियोऽस्मदीये
पुरेऽथ वर्षास्थितिमातनुध्वम् ॥ ३४ ॥

अथ श्रीमहनीयपादाः पूज्यपादाः, किं०, कृपालवो दयालवः, पुनः, किं०, गतावसादा विगतविषादाः, प्रसादमाधाय विधाय, पुनः किं०, अस्मासु अस्मादृशेष्वपि जनेषु अनुग्राहिणी धीर्येषां ते अनुग्राहिधियः, अस्मदीये पुरे पूर्वोक्तनामके, वर्षास्थितिं चतुर्मासीम्, आतनुध्वं कुरुध्वम् ॥ ३४ ॥

लतामिवाऽऽमोदभृतां नितान्त-
कान्तैः फलौघैरनघां घनौघाः ।

चक्रुस्तरां स्फारफलां तदीय-
विज्ञप्तिमाप्तावनिवासवास्ते ॥ ३५ ॥

घनौघा मेघप्रवाहा इव लतां, ते आप्तावनिवासवा मुनिवरेन्द्राः, तदीयविज्ञप्तिं स्फारफलवतीं चक्रुस्तरामनुमेनिरे इति, लतां विज्ञप्तिं च विशेषणद्वारेण विशिनष्टि—किं०, आमोदेन गन्धेन हर्षेण च भृतां, पुनः किं०, नितान्तं नित्यं कान्तैः प्रियैः, फलौघैरनघां निर्मलां मनोज्ञां वेति ॥ ३५ ॥

अथो तिथौ सर्वसुखातिथौ ते
वारे जयश्रीप्रणयप्रचारे ।
योगे जगद्रङ्गतरङ्गयोगे
क्षणे क्षणाढ्ये ललिते च लग्ने ॥ ३६ ॥

अथ पत्तननगरात् तिथौ, किंलक्षणे, सर्वसुखानामतिथौ, तिथिशब्दस्य पुंस्त्रीलिङ्गत्वात् पुंस्त्वविशेषणमदुष्टमाषाढशुद्धप्रतिपादि, पुनर्वारे किं०, जयश्रीणां जयलक्ष्मीणां प्रणयस्य प्रचारो यस्मिंस्तस्मिन् जयदायिनि गुरुवासर इति, पुनर्योगे किं०, जगद्रङ्गतरङ्गस्य योगः संबन्धो यस्मिंस्तस्मिन् गुरुपुष्यसंयोगजातेऽमृतसिद्धिनाम्नि योगे, पुनः, क्षणे पञ्चदशलवप्रमाणे, किं०, क्षणाढ्ये उत्सवमये, च पुनः, लग्ने ललिते मनोज्ञग्रहस्थितिशालिनीति भावः ॥ ३६ ॥

अमन्दमोदोच्छलदच्छलाङ्गि-
बर्हिप्रबर्हालयतुङ्गशृङ्गम् ।
तीर्थेशतीर्थोत्कटपुण्डरीक-
विक्रीडितभ्राजितमध्यभागम् ॥ ३७ ॥

श्रद्धालुसाधुस्फुटधर्मकर्म-

सन्मेखलाभूषितभूमिदेशम् ।
सन्नागरीयव्यवहारिहारि-
व्यापारविस्तारिवसुप्रवेशम् ॥ ३८ ॥
सान्द्रद्रुमस्वर्द्रुमकाननाली-
क्रीडत्सुदृक्स्वर्गसुदृङ्मनोज्ञम् ।
आतोद्यपाथोदनिनादहृद्यं
सन्नन्दनं सुन्दरभद्रशालम् ॥ ३९ ॥
सुवर्णपूर्णं विबुधाधिगम्यं
वृषप्रकर्षोत्सवराजिरम्यम् ।
स्वःसद्गिरिं वा कुमराग्रगामि-
गिरिं पुरं श्रीगुरवोऽधिजग्मुः ॥ ४० ॥

वा इवार्थे, तेन इव यथा, स्वःसद्गिरिं सुरगिरिमिव, श्रीगुरवः पूज्यास्ते, कुमराग्रगामिगिरिं पुरं कुमरगिरिनगरं अधिजग्मुः, अथ कुमरगिरिं सुरगिरिं च समानधर्मत्वेन वर्णयति-अमन्देन मोदेन उद्यत्प्रमोदेन उच्छलन्तो ये अच्छलाङ्गिनो निर्मायपुरुषास्तल्लक्षणैर्बर्हिभिर्मयूरैः प्रबर्हाणि प्रकृष्टानि आलया एव तुङ्गशृङ्गाणि उच्चशिखराणि यत्र तं, पुनः किं०, तीर्थेशस्य अर्थादासन्नोपकारिश्रीमहावीरस्य यत्तीर्थं शासनं चतुर्विधसङ्घो वा तल्लक्षणो य उत्कटः प्रोद्धतः पुण्डरीकः शार्दूलस्तस्य विक्रीडितेन क्रीडया भ्राजितः शोभितो मध्यभागो यत्र तम् ॥ ३७ ॥ पुनः किं०, श्रद्धालुसाध्वोरगार्यनगारयोर्यः स्फुटो धर्मो द्विविधस्तस्य कर्माणि कृत्यानि क्रियारूपाणि तल्लक्षणे ये मेखले ताभ्यां भूषितो भूमिदेशो यत्र तं, पुनः किं०, सन् विद्यमानो यो नागरीयो भूरितरदेशपरदेशिनगरसत्को व्यवहारेण हारी न्यायोपपन्न-

इति यो व्यापारस्तल्लक्षणो वसुप्रवेशो रत्नस्वर्णादिप्रवेशो यत्र तम् ॥ ३८ ॥ पुनः किं०, सान्द्रा बहलाश्छायादिभिर्ये द्रुमा-आम्रराजादनमधूककर्कन्धूखर्जूरीकेतकीनिम्बजम्बूकदम्बतालफलिनीप्रभृतयस्त एव स्वर्द्रुमाः फलफुल्लादिप्रदानेन आशापूरकत्वात् कल्पद्रुमास्तेषां या काननाली वनराजी तस्यां क्रीडन्त्यो याः सुदृशः स्त्रियस्ता एव स्वर्गसुदृशोऽप्सरसस्ताभिर्मनोज्ञं रम्यम्, पुनः किं०, आतोद्यानि वाद्यानि तद्रूपा ये पयोदनिनादा वारिधरध्वनयस्तैर्हृद्यं, पुनः किं०, सन्नन्दनं शोभननन्दनवनं, नगरपक्षे सतां साधूनां नन्दनं हर्षकारकं, पुनः, सुन्दरं भद्रशालाभिधानं मेरोर्द्वयोः पूर्वपश्चिमयोः पार्श्वयोः पृथक् पृथग् द्वाविंशतिसहस्रयोजनप्रमाणं भूतललीनं वनं यत्र तं, नगरपक्षे सुन्दरा भद्रा भद्रकारिणी शाला गृहादिशाला पौषधशाला वा यत्र तम् ॥ ३९ ॥ पुनः किं०, सुवर्णैः शोभनवर्णैर्ब्राह्मणादिभिः, पक्षे सुवर्णेन काञ्चनेन पूर्णं, पुनः किं०, विबुधैः पण्डितैः, पक्षे सुरैश्चाऽधिगम्यं सेवनीयं, पुनः किं०, वृषप्रकर्षस्य सुकृतोत्कर्षस्य, पक्षे वृष्णः शक्रस्य प्रकर्षेण उत्सवराज्या रम्यम्, एवमुक्तवर्णकसाम्यात् सुरगिरिमिव कुमरगिरिं श्रीगुरवोऽधिजग्मुः प्राप्ताः । इति पञ्चभिः कुलकव्याख्या ॥ ४० ॥

पुरं सदामोदपदं तदुच्चै-
गवां विलासैस्तपगच्छभर्तुः ।
प्रबोधलक्ष्मीं बिभराम्बभूव
पयोजपाणेरिव पद्मखण्डम् ॥ ४१ ॥

पयोजपाणेः सूर्यस्येव, तपगच्छभर्तुः गुरोः, गवां विलासैः किरणविलासैर्वाणीविलासैश्च, तत् पुरं पद्मखण्डमिव किं०, आमोदस्य हर्षस्य गन्धस्य च पदं स्थानम्, प्रबोधलक्ष्मीं स्मेर-

तासंपत्तिं प्रतिबोधसंपत्तिं च, बिभराम्बभूव, अत्र खण्डशब्दस्य पुंनपुंसकत्वात् खण्डमिति प्रयोगः ॥ ४१ ॥

गुरुर्गरीयान् नगरस्य तस्य
समुन्नतिं सत्कमलश्चकार ।
प्रवर्धमानैर्महसां समूहैः
पानीयराशेरिव शर्वरीशः ॥ ४२ ॥

गरीयान् गुरुः, शर्वरीश इव चन्द्र इव, किं०, सत्कमलः सती सत्या विद्यमाना वा कमला ज्ञानादिश्रीर्यस्य स इति, पक्षे सन् विद्यमानः कमलो लाञ्छनमृगो यत्र सः, अथवा

"गजे शङ्खे हरौ छत्रे चन्द्रे पद्मे जिनालये ।
मौक्तिके विद्रुमे स्वर्णे या नित्या परमेश्वरी" ॥ १ ॥

इति श्रीजिनशासनप्रभावकश्रीआमनामनृपप्रतिबोधकश्रीबप्पभट्टिमहाकविवचनात्, तथा

"चन्द्रं गता पद्मगुणान् न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखं तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः" ॥२॥

इति कालिदासोक्तकुमारसंभवप्रयोगात्, तथा "छत्रेन्दुपद्मादिषु रूढिमात्रं" इति श्रीजिनप्रभाचार्यवचनाच्च चन्द्रेऽपि श्रीसद्भावात् सती विद्यमाना कमला यत्र स इति गुरोश्चन्द्रस्य च तुल्यधर्मविशेषणता, तेन सत्कमलो गुरुस्तस्य नगरस्य पानीयराशेः समुद्रस्येव, प्रवर्धमानैः प्रसर्पद्भिः, महसामुत्सवानां तेजसां च समूहैः समुन्नतिं चकारेति काव्यार्थः ॥ ४२ ॥

धर्म्याणि कर्माणि च धार्मिकौघैः
प्रपञ्चितानि प्रसभं बभूवुः ।
तत्र स्थितेऽस्मिन् सुगुरौ कुलीरे

तेजांसि सूराविव निर्जराणाम् ॥ ४३ ॥

अस्मिन् सुगुरौ तत्र कुमरगिरौ सति चतुर्मासीमासीने सति, धर्म्याणि कर्माणि सौकृतकृत्यानि, किं०, धार्मिकौकैः श्राद्धसार्थैः, प्रपञ्चितानि विस्तारितानि निर्मापितानीति यावत्, प्रसभं बलात्कारेण हठेनेति अहमहमिकयेति, बभूवुर्जातानि; दृष्टान्तोऽत्र–निर्जराणां सूरौ सुराचार्ये, कुलीरे कर्कटे, स्थिते सति, तेजांसि यथा जायन्ते, कर्कस्थो हि गुरुरुच्चत्वेन महातेजस्वीति ज्योतिर्विदां मतमिति ॥ ४३ ॥

सङ्घोऽनघः पत्तनपत्तनस्थ-

स्तत्र स्थितं श्रीगुरुराजराजम् ।

ननाम नित्यं कृतनेत्रयुग्म-

शैत्यं समागत्य सतत्त्वसत्यम् ॥ ४४ ॥

पुनः, तत्र स्थितं श्रीगुरुराजराजं सूरीन्द्रचन्द्रं, किं०, कृतनेत्रयुग्मशैत्यं विहितनयनयुगलाह्लादं, पुनः किं०, सह तत्त्वसत्याभ्यां वर्तते यस्तं सतत्त्वसत्यं, पत्तनपत्तनस्थोऽणहिल्लपाटकवासी सङ्घश्चतुर्विधोऽपि, नित्यं समागत्य ननामाऽनमत् ॥४४॥

ज्येष्ठस्थितिं तत्र समास्थितः श्री-

तपाधिपोऽतिप्रकटप्रतापः ।

आसीदसह्यः परतीर्थिकानां

धाराधराणामिव मातरिश्वा ॥ ४५ ॥

तत्र नगरे ज्येष्ठास्थितिं वर्षास्थितिं, समास्थितः सन्, अतिप्रकटप्रतापः श्रीतपाधिपस्तपगच्छराट्, परतीर्थिकानामन्यपाक्षिकाणाम्, असह्यो बलवत्त्वेनाऽसहन इति, आसीत्; मातरिश्वा पवन इव, धाराधराणां मेघानामिवेति दृष्टान्तः॥४५॥

एकाहलीलातुलितर्द्धिमास-
चतुष्टयं चारु निरन्तरायम् ।
निर्माय निर्मायतया ततोऽसौ
चचाल चारित्रिकुलावचूलः ॥ ४६ ॥

मासचतुष्टयं चतुर्मासकं, किं०, एकाहलीलातुलितर्द्धि एकस्य अह्नो वासरस्य लीलया तुलिता ऋद्धिर्यत्र तत् एकदिनकेलितुल्यमिवेति, पुनः किं०, निरन्तरमायो लाभो यत्र तत्, अथवा निरन्तरायं निर्विघ्नमिति "विघ्नेऽन्तरायः प्रत्यूहः" इति वचनात्, निर्माय कृत्वा, असौ चारित्रिकुलावचूलः साधुसमूहध्वजझुम्बनकतुल्यः, निर्मायतया निष्कपटत्वेन, चचालाऽचलत्, शङ्खेश्वरं प्रतीति शेषः ॥ ४६ ॥

तत्रत्यसङ्घः सह पत्तनाह्व-
पुरीयसङ्घेन गताघसङ्घः ।
तमन्वगात् सूरिशिरोऽवतंसं
दिनो दिनाधीशमिवाऽनुरागात् ॥ ४७ ॥

तत्रत्यः कुमरगिरीयः सङ्घः, पत्तनसङ्घेन सह किं०, गताघसङ्घः निर्गतपातकोच्चयः, गतदुःखोच्चयो वा; तं सूरिशिरोऽवतंसं भट्टारकमौलिशेखरम्, अन्वगात् पृष्ठेऽव्रजत्, दिनो वासरः, दिनाधीशं सूर्यमिवेति दृष्टान्तः ॥ ४७ ॥

क्रमादथ श्रीतपगच्छनाथः
शङ्खेश्वरं प्राप्य पुरं पुराणम् ।
ननाम निश्छद्म-सपद्मपार्श्वे
पार्श्वं जिनेन्द्रं वृजिनद्रुपार्श्वम् ॥ ४८ ॥

अथ श्रीतपगच्छनाथस्ताभ्यां द्वाभ्यां सङ्घाभ्यां सह शङ्खेश्वरं

पुरं प्राप्य गत्वा, पार्श्वं जिनेन्द्रं, किं०, निश्छद्म निष्कपटम्, अथवा निश्छद्मेति क्रियाविशेषणम्, पुनः पार्श्वं किं०, सह पद्मया लक्ष्म्या वर्तते यत्, अथवा पद्मया पद्मावत्या देव्या भगवतोऽधिष्ठायिकया सह वर्तते यत् तत् सपद्मं पार्श्वं समीपं यस्य तम्, अथवा सपद्मः सपद्मावतीकः पार्श्वः पार्श्वनामा यक्षो यत्र तं, पुनः किं०, वृजिनद्रौ पापपादपे पार्श्वं पर्शुसमूहं तदुच्छेदकत्वात्, शेषं गतार्थम् ॥ ४८ ॥

विघ्नौघविध्वंसनजागरूकं
प्रणम्य पार्श्वं सुगुरुः सशूकम् ।
सङ्घेन साकं ववले कलावा-
निवोज्ज्वलाभिः कलितः कलाभिः ॥ ४९ ॥

पार्श्वेशं शङ्खेश्वराख्यं, किं०, विघ्नौघविध्वंसने जागरूकम्, अत एव पुनः सशूकं सदयं, सुगुरुः प्रणम्य सङ्घेन साकं सह, ववले वलित इति; किं०, कलाभिः,किं०, उज्ज्वलाभिः,कलितोऽलङ्कृतः, क इवेत्याह–कलावानिव चन्द्र इवेति दृष्टान्तः ॥४९॥

स्थानात् ततस्तस्य महाजनस्य
निर्बन्धतः साधुमहीमहेन्द्रैः ।
पद्माऽऽस्पदं पत्तनपत्तनं तै-
रलङ्कृतं पद्ममिव द्विरेफैः ॥ ५० ॥

ततः स्थानात्, शङ्खेश्वरात् तस्य महाजनस्य पत्तनसंबन्धिनः, निर्बन्धत आग्रहतः, तैः साधुमहीमहेन्द्रैर्मुनिराजैः, द्विरेफैर्भ्रमरैः, पद्ममिव, पद्मायाः लक्ष्म्या आस्पदं पत्तनपत्तनम्, अलङ्कृतं विभूषितमिति, पत्तननगरे समागतमित्यर्थः ॥ ५० ॥

वाल्लभ्यभूमिर्भुवनत्रयस्य

एकाह्लीलातुलितर्द्धिमास-
चतुष्टयं चारु निरन्तरायम् ।
निर्माय निर्मायतया ततोऽसौ
चचाल चारित्रिकुलावचूलः ॥ ४६ ॥

मासचतुष्टयं चतुर्मासकं, किं०, एकाह्लीलातुलितार्द्धि एकस्य अह्नो वासरस्य लीलया तुलिता ऋद्धिर्यत्र तत् एकदिनकेलितुल्यमिवेति, पुनः किं०, निरन्तरमायो लाभो यत्र तत्, अथवा निरन्तरायं निर्विघ्नमिति "विघ्नेऽन्तरायः प्रत्यूहः" इति वचनात्, निर्माय कृत्वा, असौ चारित्रिकुलावचूलः साधुसमूहध्वजझुम्बनकतुल्यः, निर्मायतया निष्कपटत्वेन, चचालाऽचलत्, शङ्खेश्वरं प्रतीति शेषः ॥ ४६ ॥

तत्रत्यसङ्घः सह पत्तनाह्व-
पुरीयसङ्घेन गताघसङ्घः ।
तमन्वगात् सूरिशिरोऽवतंसं
दिनो दिनाधीशमिवाऽनुरागात् ॥ ४७ ॥

तत्रत्यः कुमरगिरीयः सङ्घः, पत्तनसङ्घेन सह किं०, गताघसङ्घः निर्गतपातकोच्चयः, गतदुःखोच्चयो वा; तं सूरिशिरोऽवतंसं भट्टारकमौलिशेखरम्, अन्वगात् पृष्ठेऽव्रजत्, दिनो वासरः, दिनाधीशं सूर्यमिवेति दृष्टान्तः ॥ ४७ ॥

क्रमादथ श्रीतपगच्छनाथः
शङ्खेश्वरं प्राप्य पुरं पुराणम् ।
ननाम निश्छद्म-सपद्मपार्श्वं
पार्श्वं जिनेन्द्रं वृजिनद्रुपार्श्वम् ॥ ४८ ॥

अथ श्रीतपगच्छनाथस्ताभ्यां द्वाभ्यां सङ्घाभ्यां सह शङ्खेश्वरं

पुरं प्राप्य गत्वा, पार्श्वं जिनेन्द्रं, किं०, निश्छद्म निष्कपटम्, अथवा निश्छद्मेति क्रियाविशेषणम्, पुनः पार्श्वं किं०, सह पद्मया लक्ष्म्या वर्तते यत्, अथवा पद्मया पद्मावत्या देव्या भगवतोऽधिष्ठायिकया सह वर्तते यत् तत् सपद्मं पार्श्वं समीपं यस्य तम्, अथवा सपद्मः सपद्मावतीकः पार्श्वः पार्श्वनामा यक्षो यत्र तं, पुनः किं०, द्दृजिनद्रौ पापपादपे पार्श्वं पर्शुसमूहं तदुच्छेदकत्वात्, शेषं गतार्थम् ॥ ४८ ॥

विघ्नौघविध्वंसनजागरूकं
प्रणम्य पार्श्वं सुगुरुः सशूकम् ।
सङ्घेन साकं ववले कलावा-
निवोज्ज्वलाभिः कलितः कलाभिः ॥ ४९ ॥

पार्श्वेशं शङ्खेश्वराख्यं, किं०, विघ्नौघविध्वंसने जागरूकम्, अत एव पुनः सशूकं सदयं, सुगुरुः प्रणम्य सङ्घेन साकं सह, ववले वलित इति; किं०, कलाभिः, किं०, उज्ज्वलाभिः, कलितोऽलङ्कृतः, क इवेत्याह–कलावानिव चन्द्र इवेति दृष्टान्तः ॥४९॥

स्थानात् ततस्तस्य महाजनस्य
निर्बन्धतः साधुमहीमहेन्द्रैः ।
पद्माऽऽस्पदं पत्तनपत्तनं तै-
रलङ्कृतं पद्ममिव द्विरेफैः ॥ ५० ॥

ततः स्थानात्, शङ्खेश्वरात् तस्य महाजनस्य पत्तनसंबन्धिनः, निर्बन्धत आग्रहतः, तैः साधुमहीमहेन्द्रैर्मुनिराजैः, द्विरेफैर्भ्रमरैः, पद्ममिव, पद्मायाः लक्ष्म्या आस्पदं पत्तनपत्तनम्, अलङ्कृतं विभूषितमिति, पत्तननगरे समागतमित्यर्थः ॥ ५० ॥

वाल्लभ्यभूमिर्भुवनत्रयस्य

प्रशंसनीयो यशसां समूहैः ।
कियद्दिनीं तत्र गुरुर्विचित्र-
महोत्सवोत्साहिजने स्थितः सः ॥ ५१ ॥

गुरुः किं०, भुवनत्रयस्य वाल्लभ्यभूमिर्वल्लभत्वास्पदं सौभाग्यस्य स्थानमिति यावत्, पुनः, यशसां समूहैः प्रशंसनीयो वर्णनीय इति, तत्रेति पत्तननगरे, किं०, विचित्रा नानाविधा ये महोत्सवास्तेषु उत्साही औत्सुक्यभृत् जनो यत्र तस्मिन् विचित्रमहोत्सवोत्साहिजने, कियद्दिनीं कियत्कालं, स्थितः फाल्गुनचतुर्मासकं यावत् तत्र स्थितवानिति शेषः ॥ ५१ ॥

श्रीवीरविश्वेश्वरशासनश्री-
भुजापरीरम्भितकण्ठपीठः ।
अन्येद्युरुद्यद्गुणवान् मुनीन्दुः
श्रीस्तम्भतीर्थं प्रति स प्रतस्थे ॥ ५२ ॥

श्रीवीरविश्वेश्वरस्य या शासनश्रीः तद्भुजया परीरम्भितमाश्लेषितं कण्ठपीठं यस्य सः, स मुनीन्दुर्मुनिचन्द्रः, किं०, उद्यद्गुणवान् उदितोदितगुरुगुणशालीति, स्तम्भतीर्थं नगरं प्रति, अन्येद्युरेकदा, प्रतस्थे चलितवानिति ॥ ५२ ॥

प्रबोधमुच्चैर्जनयन् जनाना
पद्माकराणामिव पद्मिनीशः ।
अवार्यशौण्डीर्यविलासगेहं
श्रीसूरिसिंहो व्यहरद् धरित्र्याम् ॥ ५३ ॥

पद्माकराणां कमलनिकराणां, पद्मिनीशः सूर्य इव, जनानां प्रबोधं जनयन् कुर्वन्, पुनः किं०, अवार्यशौण्डीर्यस्य विलास-

गेहं श्रीसूरिसिंहः, स धरित्र्यां गूर्जरत्रायां, व्यहरद् विहारं कृतवानिति ॥ ५३ ॥

अथाऽऽकरग्रामपुरादिपौर-
परम्पराभिः प्रचुरप्रकारैः ।
अभ्यर्च्यमानः किल काञ्चनादि-
पुष्पैर्भृशं लाभमुपार्जयंश्च ॥ ५४ ॥

अगण्यलावण्यवरेण्यपुण्य-
नैपुण्यपुण्यप्रणयप्रतीतः ।
मयूखमालीव मयूखजालै-
र्युगप्रधानातिशयैः परीतः ॥ ५५ ॥

मुक्ताफलौघैरिव पङ्कजाक्षी-
वक्षःस्थलीं क्ष्मां पदपांसुपूरैः ।
विभूषयन् भूललनाललाम
श्रीस्तम्भतीर्थं गुरुराविवेश ॥ ५६ ॥

अथ शुभे दिने पत्तननगरात् चाणसमाख्यग्रामे सातिशयमहामहिमामयश्रीभटेवाभिधानपार्श्वनाथयात्रां विधाय क्रमेण आकरग्रामपुरादीनां पौरपरम्पराभिर्जनश्रेणीभिः, प्रचुरप्रकारैर्बहुभेदैः, काञ्चनादिपुष्पैः, आदिशब्दाद् रजतादिग्रहस्तेन काञ्चनरजतपुष्पाभरणनाणकादिभिर्भूरिभिः प्रकारैः, अभ्यर्च्यमानः पूज्यमानः, च पुनः, लाभं भृशमुपार्जयन् स्वीकुर्वन्निति ॥५४॥ पुनः किं०, अगण्यं गणनातीतं यल्लावण्यं सद्गतिसद्भाषासद्वीक्षणलक्षणं यदुक्तम्—"सद्गमनसन्निरीक्षणसज्जल्पमिति वदन्ति लावण्यम्" इति, तेनाऽगण्यलावण्यं बहुलवणिमा, पुनः, वरेण्यं वरिष्ठं यत् पुण्यनैपुण्यं धर्मदक्षत्वं, पुनः, पुण्यः पवित्रः

प्रणयः सर्वजन्तुषु सौजन्यरूपस्तेन तैर्वा प्रतीतः प्रसिद्धः, पुनः, मयूखमाली सूर्य इव, मयूखजालैः किरणगणैः, तथा युगप्रधानानां श्रीवीरशासनवर्तिनां चतुरधिकद्विसहस्रीमितानां श्रीसुधर्मस्वाम्यादिश्रीदुष्प्रसहान्तानां सूरीणां येऽतिशया वर्तमानाऽऽगमादिज्ञानविज्ञानलाभोदयमुख्यास्तैः युगप्रधानातिशयैस्तत्तुल्यैः सूरिगुणैः, परीतो व्याप्त इति ॥ ५५ ॥ पुनर्गुरुः किं कुर्वन्नित्याह– मुक्ताफलानामोघैः सङ्घातैः, पङ्कजाक्षी पद्मनेत्रा तस्या वक्षःस्थलीं हृदयस्थलीमिव, पदपांसुपूरैश्चरणरेणुनिचयैः, क्ष्मां भुवं, विभूषयन् क्रमेण राजनगरादिस्थानानि पावयन्, श्रीस्तम्भतीर्थं किं०, भूललनायाः पृथ्वीपुरन्ध्र्या ललाम तिलकं तदलङ्कारभूतत्वात्, आविवेश प्रविष्ट इति ॥ इति त्रयाणां व्याख्या ॥ ५६ ॥

पुरं पृथिव्यां प्रथितं तदा तद्
गुरुश्च विश्वत्रयविस्तृतश्रीः ।
तीर्थद्वयस्येत्यजनिष्ट शिष्टः
सङ्गः सरङ्गः कृतभीतिभङ्गः ॥ ५७ ॥

तदा तत् पुरं स्तम्भतीर्थनगरं श्रीस्तम्भनपार्श्वनाथश्रीचिन्तामणिपार्श्वनाथादिचारुचैत्यमण्डिततत्वेन स्थावरतीर्थभूतं नाम्नाऽपि तीर्थमिति एकं पुरं तीर्थत्वेन प्रथितम्, द्वितीयश्च पुनर्गुरुः, किं०, विश्वत्रये विस्तृता श्रीर्यस्येति जङ्गमं तीर्थमिति, तीर्थद्वयस्य स्थावरजङ्गमरूपस्य, सङ्गः सङ्गम', किं०, शिष्ट उत्तमः, पुनः, सरङ्गः सहर्षः, पुनः, कृतो भीतेर्भयस्य भङ्गो येन सः, अजनिष्ट जात इति ॥ ५७ ॥

प्रकाशगुर्वीं गुरवस्तमोघ्ना-
दिनस्य लक्ष्मीमिव ते वितेनुः ।

महामहोभिर्भुवनाभिरामां

तत्र प्रतिष्ठां प्रकटप्रतिष्ठाम् ॥ ५८ ॥

गुरवः, किं०, तमोघ्नाः पापापहाः, पक्षे "तमोघ्नो वह्नि-सूर्येन्दुबुद्धकेशवशम्भुषु" इत्यनेकार्थत्वादत्र सूर्याधिकारत्वाद् गुरवस्तमोघ्नास्ते गुरुभानवः, तत्र स्तम्भतीर्थे, दिनस्य लक्ष्मी-मिव वासरश्रियमिव, कीदृशीं, प्रकाशेन उद्द्योतेन एकत्र आ-लोकेन, अन्यत्र श्रीजिनशासनोद्द्योतेन, गुर्वीं गरीयसीं, पुनः, महोभिर्महोत्सवैः महातेजोभिश्च, भुवनाभिरामां प्रतिष्ठां, किं०, प्रकटा प्रतिष्ठा गौरवं यस्यां तां, वितेनुश्चक्रुरिति ॥ ५८ ॥

वित्तैश्च वित्तेशसमः समान-

स्तत्रत्यसङ्घोऽपि समं ववर्ष ।

क्षेत्रेषु सप्तस्वपि सूरिसूर-

वचःप्रणुन्नोऽम्बुमुचामिवौघः ॥ ५९ ॥

च पुनः, तत्रत्यसङ्घः किं०, वित्तैर्धनैः, वित्तेशसमः धन-दतुल्यः, अत एव समानः साभिमानः सन्, अथवा समानः सपूजो लोकैर्धनवान् पूज्यत इति, पुनः किं०, सूरिसूरस्य भट्टारकभास्करस्य वचःप्रणुन्नोऽम्बुमुचां मेघानामोघः समूह-इव सप्तस्वपि क्षेत्रेषु जिनभवनजिनबिम्बाऽऽगमादिषु, अपिशब्दा-दन्येष्वपि दीनाऽनाथसाधर्मिकादिष्वपि, समं युगपत् , ववर्षेति धनोत्सर्जनमकरोदिति ॥ ५९ ॥

तस्याग्रहात् तत्र पवित्रतीर्थे

श्रीस्तम्भतीर्थे नगरे गणेन्द्रः ।

स्थितिं वितेने बृहतीं वपुष्मा-

निवैष धर्मः कृतसर्वशर्मा ॥ ६० ॥

तत्र श्रीस्तम्भतीर्थे नगरे, किं०, पवित्रं तीर्थं जैनचैत्यादिरूपम्, अथवा तीर्यते संसारसागरोऽनेनेति तीर्थं चतुर्विधसङ्घरूपं यत्र तत्र, तस्य सङ्घस्य, आग्रहाद् गणेन्द्रो गच्छराट्, किं०, कृतसर्वशर्मा विहितसकलसौख्यः, अत एव इवोत्प्रेक्ष्यते-वपुष्मान् मूर्तिमान्, धर्म एष इति बृहतीं स्थितिं चतुर्मासीं, वितेनेऽकरोदिति ॥ ६० ॥

तत्पारणे पुनरपि प्रथिता प्रतिष्ठा
चक्रे तपाधिपतिना बहुना महेन ।
श्रीधाम्न्यकब्बरपुरेऽथ पुरे गरिष्ठे
ज्येष्ठा स्थितिश्च रुचिरोत्सवकारिसङ्घे ॥६१॥

तत्पारणे तस्य चतुर्मासकस्य पारणके, पुनरपि तत्रैव तीर्थे तपाधिपतिना तपागच्छनायकेन, बहुना भूयसा, महेनोत्सवेन, प्रथिता प्रसिद्धा, धनव्ययादिनेति शेषः, प्रतिष्ठा चक्रे कृतेति, अथ प्रतिष्ठाकरणानन्तरं, ज्येष्ठा स्थितिश्च पुनरकब्बरपुरे स्तम्भतीर्थसमीपस्थायिनि शाखापुरे, किं०, श्रीधाम्नि लक्ष्मीस्थाने, पुनः, गरिष्ठे द्रव्यभावाभ्यां गरीयसि, पुनः किं०, रुचिरोत्सवकारी सङ्घः श्राद्धसङ्घो यत्र तत्र, चक्र इति योज्यम् ६१

स्थित्वा तत्र कियन्त्यहानि विलसच्छौण्डीर्यसंपत्तिभि-
र्भ्राजिष्णुर्भुवनातिशायिसततश्रीदानसन्तानकः ।
मार्गद्रूनिव वादिनो घनमदान् निर्मूलमुन्मूलयन्
गन्धारं नगरं जगाम भगवान् भट्टारकानेकपः ॥६२॥

तत्र अकब्बरपुरे चतुर्मासीं विधाय कियन्ति अहानि दिनानि, स्थित्वा पारणेऽपीति शेषः, स भगवान् पूज्यः, किं०, भट्टारकेषु अनेकपः कुञ्जर इति, किंभूत इति विशेषणत्रयेण कुञ्जरसाधर्म्यं सूरेः सूचयति– विलसद् दीप्यमानं यत् शौ-

ण्डीर्यं पराक्रमस्तत्संपत्तिभिर्भ्राजिष्णुर्भासनशीलः, पुनः किं०, भुवनातिशायि जगदतिशायि सततं नित्यं श्रियोपेतं यद् दानं गजमदलक्षणं तस्य सन्तानं सन्ततिर्यस्मात् स दानसन्तानः के सन्तानक इति, गुरुः किं०, भुवनातिशायिसततश्रीणां दाने प्रदाने सन्तानकः कल्पद्रुम इति, पुनः, घनमदान् बह्वहङ्कारान् वादिनो मार्गद्रूनिव वर्त्मस्थतरूनिव, निर्मूलमुन्मूलयन्निति गजोपमां बिभ्रत् स भट्टारकानेकपः, गन्धारं नाम नगरं बन्दिरमिति प्रतीतं, चतुर्मासककरणाय जगाम प्राप्तवान्। इदं शार्दूलविक्रीडितं वृत्तम्, समग्रः सर्गस्तूपजात्येति ज्ञेयम् ॥ ६२ ॥

• • • • • • • • • • • • • • • • • • • • • • • • • • • • •

इतीति विश्वं विशदम् ।

इति सकलसुविहितसभासार्वभौमसमानपण्डितमण्डलीमौलिमौलीयमानपण्डितश्रीकमलविजयगणिसुशिष्यमुख्यपण्डितपुरन्दरप्रख्यपण्डितश्रीविद्याविजयगणिविनेयवाचकश्रीगुणविजयगणिविरचितायां श्रीविजयप्रदीपिकाभिधानधारिकायां सुखावबोधिकायां श्रीविजयप्रशस्तिमहाकाव्यटीकायामेकोनविंशः सर्गोऽर्थतः समर्थितः ॥



अर्हम्

## अथ विंशः सर्गः ।

—०*०—

अथ विंशः सर्गः समारभ्यते–

अथ तत्र सृजंश्चार्वीं चतुर्मासीमसीममुत् ।
पद्मोल्लासं गुरुर्गोभिर्दिवाकर इवाऽकरत् ॥ १ ॥

अथाऽधुना, तत्र बन्दिरे गन्धारनाम्नि, गुरुः किं०, असीममुद् निरर्गलप्रमोद इति, चार्वीं रुचिरां, चतुर्मासीं सृजन् कुर्वन्, दिवाकर इव गोभिः किरणैर्वाणीभिश्च, पद्मोल्लासं पद्माया उल्लासं, पक्षे कमलानामुल्लासम्, अकरत् कुरुते स्मेत्यन्वयगमनिका ॥ १ ॥

कामं कुवलयोल्लासरचनाद् वचनाद् गुरोः ।
महैः साऽभूत् पुरी पूर्णा पूर्णेन्दोरिव पूर्णिमा ॥ २ ॥

गुरोर्वचनात् पूर्णेन्दोः पूर्णचन्द्रादिव, किं०, कामं प्रकामं, कुवलयोल्लासस्य चन्द्रविकाशिनीलोत्पलोल्लासस्य, पक्षे भूवलयोल्लासस्य रचनं निर्मापणं यस्मात् तस्मात् कुवलयोल्लासरचनात्, सा पुरी गन्धारनाम्नी नगरी, पूर्णिमा राकेव, महैस्तेजोभिरुत्सवैश्च, पूर्णाऽभूदिति ॥ २ ॥

नानामहोत्सवोत्साहमयं मासचतुष्टयम् ।
सूरीशः पूरयामास वासरं भानुमानिव ॥ ३ ॥

तत्र मासचतुष्टयं चतुर्मासीं, किं०, नानामहोत्सवैर्विचित्रोत्सवैरुत्साहैश्च, लोकानामिति गम्यम्, तन्मयं तत्प्रधानम्, अत्र प्राधान्ये मयद्, सूरीशः श्रीविजयसेनगुरुः, भानुमान् सूर्यः, वासरमिव पूरयामासेति ॥ ३ ॥

प्रान्ते तत्र तपागच्छश्रेष्ठो ज्येष्ठस्थितेरथ ।
चक्रे प्रतिष्ठामुत्कृष्टमहिमां बहुभिर्महैः ॥ ४ ॥

अथ तत्र तपागच्छश्रेष्ठो गुरुः, ज्येष्ठस्थितेः प्रान्ते चतुर्मासकपारणके, बहुभिर्घनैः, महैः, प्रतिष्ठां किं०, उत्कृष्टमहिमाम्, आकारान्तो महिमाशब्दोऽस्तीति, चक्रे कृतवानिति ॥ ४ ॥

इतश्च वसुधावध्वा भालभालविभूषणम् ।

अस्ति सूर्यपुरं नाम बन्दिरं सुन्दरेन्दिरम् ॥ ५ ॥

इतः संबन्धान्तरे, चपुनः, सूर्यपुरं नाम सूरतिबन्दिरं, किं०, सुन्दरेन्दिरं रम्यश्रि, अस्ति; किं०, वसुधावध्वा भूभामिन्याः, भाले भालविभूषणं तिलकतुल्यमिति भावः ॥ ५ ॥

यदभ्यर्णमभिव्याप्य स्रवन्ती तपनात्मजा ।
संव्यानमिव नगरश्रियः शोभां शुभां दधौ ॥ ६ ॥

यस्य सूरतिबन्दिरस्य अभ्यर्णं समीपम्, अभिव्याप्य विष्वग् व्याप्तिविषयीकृत्य, तपनात्मजा तापीनाम्नी, स्रवन्ती नदी, शुभां शोभां दधौ धरति स्मेति, इवोत्प्रेक्ष्यते—नगरस्य श्रियो लक्ष्म्याः, संव्यानं परिधानाम्बरमिवेत्यर्थः ॥ ६ ॥

अथानघस्य सङ्घस्याऽऽग्रहेणानुग्रहप्रभुः ।
गन्धारबन्दिरात् तत्र नगरे गुरुरीयिवान् ॥ ७ ॥

अथ गुरुः किं०, अनुग्रहः कृपारूपस्तत्र प्रभुः समर्थः स्वामी वा, तत्र नगरे सूर्यपुरनगरे, अनघस्य निर्दोषस्य, सङ्घस्य आग्रहेण गन्धारबन्दिराद् भृगुकच्छबन्दिरलोकान् रानेरबन्दिरलोकांश्च सन्तोष्य तापीतटिनीं नावोत्तीर्य ईयिवान् प्राप्त इति॥७॥

गुरोरागमनोदन्तः प्रासरत् सकले पुरे ।
तादृशामागता वार्ता यतः स्वैरविहारिणी ॥८॥

गुरोः सूरेः, आगमनस्य उदन्तः समाचारः, सकले पुरे प्रासरद् विस्तीर्णवान्, यतः कारणात्, तादृशां पुरुषोत्तमानां वार्ता आगता सती, स्वैरविहारिणी सर्वत्र गामिनी भवतीत्यर्थः ॥८॥

सङ्घोऽनघोऽथ तत्रत्यो भूरिभूषणभूषितः ।
प्रत्युज्जगाम परमगुरुं गुरुमिवाऽमरः ॥ ९ ॥

अथ तत्रत्योऽनघो मनोज्ञः, स्फारालङ्कारनेपथ्यादिमत्त्वा-

त्, अथवा अनघो निर्मलो द्विधापि मलरहितत्वात्, सङ्घः श्राद्धश्राद्धीरूपः, पुनः किं०, भूरिभूषणैः स्वर्णाभरणैर्बह्वाभरणैर्वा भूषितः सन्, परमगुरुं श्रीगच्छेश्वरम्, अमरो देवः, गुरुं बृहस्पतिमिव, अमर इत्यत्र जातित्वादेकवचनम्, प्रत्युज्जगाम सम्मुखमागत इति ॥ ९ ॥

प्रध्वस्तकुमतिध्वान्तप्रसरे सूरिभास्करे ।
उदिते मुदितः सङ्घलोकः कोक इवाऽभवत् ॥ १० ॥

सूरिभास्करे किं०, प्रध्वस्तकुमतिध्वान्तप्रसरे परास्तकुपाक्षिकतमोभरे, तत्र उदिते सति, सङ्घलोकस्तद्वासीति, कोक इव चक्रवाक इव, मुदितो हर्षितोऽभूदिति ॥ १० ॥

धूःकोटिमिव धौरेयः सदाचरणचञ्चुरः ।
दधानो हीरपदवीं तत्र तस्थावथो गुरुः ॥ ११ ॥

अथो गुरुर्धौरेय इव वृषभवत्, किं०, सदाचरणेन शोभनानुष्ठानक्रियारूपेण, पक्षे सदा सर्वदा चरणैः क्रमणैः चञ्चुरो मनोहरः, उणादिशब्दोऽयमिति, धुरायाः कोटिमग्रभागमिव धूःकोटिं धुर्यांमुखं, तथा हीरपदवीं श्रीहीरविजयसूरेः पदवीं, पट्टलक्षणां पद्धतिं वा, दधानः सन्, तत्र बन्दिरे, तस्थौ स्थित इति, चतुर्मासीमिति शेषः ॥ ११ ॥

दानेन विक्रमार्कार्कनन्दनाद्यनुकारिणः ।
लसल्लीलेन शीलेन सुदर्शनसुदर्शनाः ॥ १२ ॥
स्फुरत्तमतपोभावभावभावादिभिर्गुणैः ।
भृशं रोचिष्णवश्चारुरत्नै रत्नाकरा इव ॥ १३ ॥
कलहंसा इव क्षीरनीरयोः पुण्यपापयोः ।
पृथग् विवेकं कुर्वाणा विवेकिश्रावका अथ ॥१४॥

प्रणुन्नाः पूज्यवचनैः संपत्साफल्यमिच्छवः ।
कारयाञ्चक्रुरर्हार्हत्प्रतिष्ठाया महामहम् ॥ १५ ॥

अथ तत्रत्याः सूर्यपुरीया विवेकिश्रावकाः, किं०, दानेन विक्रमार्को विक्रमादित्यनृपः, अर्कनन्दनः कर्णराट् कौन्तेयो महादातेति प्रतीत इत्यादीनामनुकारिणस्तुल्या इति, पुनः, लसल्लीलेन स्फुरत्केलिना, शीलेन ब्रह्मणा अब्रह्मत्यागरूपेण, सुदर्शनश्रेष्ठिन इव, सुदर्शनं शोभनं दर्शनं येषां त इति ॥१२॥ पुनः किं०, स्फुरत्तमं चारुतरं यत् तपो द्वादशधा तस्य यो भावोऽभिप्रायस्तपोरुचिरिति, पुनर्भावस्य भावनाख्यस्य गुणस्य भावो लीला, अथवा भावः सत्ता इत्यादिभिर्गुणैर्दानशीलतपोभावैः, आदिशब्दाद् विवेकविनयचातुर्यगाम्भीर्यधैर्यमाधुर्याऽऽर्जवमार्दवादिभिः, भृशमतिशयेन, रोचिष्णवः राजमानाः, कैरिव क इत्याह–रत्नाकराः समुद्रा रत्नखानयो वा, रत्नैर्यथा मणिमुक्ताफलशुक्तिशङ्खप्रमुखैरिति दृष्टान्तः॥१३॥ पुनः किं०, कलहंसा राजहंसा इव, क्षीरनीरयोर्दुग्धपानीययोर्यथा, तथा पुण्यपापयोः सुकृतदुष्कृतयोः, पृथक् पृथग् विवेकं विभागं, कुर्वाणाः, अत एव विवेकिश्रावका इति पदं सार्थं न पुनरनर्थकमिति ॥१४॥ अथ ते श्रावकाः पूज्यवचनैः प्रणुन्नाः प्रेरिताः सन्तः, संपत्साफल्यं लक्ष्मीसफलीकारम्, इच्छवोऽभिलाषिण इति, अर्हाः पूजनीया येऽर्हन्तस्तत्प्रतिष्ठाया जिनप्रतिमास्थापनायाः, महामहं महोत्सवं, कारयामासुरिति ॥ इति चतुर्णां व्याख्या ॥ १५ ॥

अथ श्रीस्फूर्तिसंपूर्तौ मुहूर्ते बहुभिर्महैः ।
मुनिनाथो जगन्नाथप्रतिमाः प्रत्यतिष्ठिपत् ॥१६॥

अथ मुहूर्ते किं०, श्रीस्फूर्तिसंपूर्तौ शोभासमुन्नतिसंपूरके, मुनिनाथो गुरुः, जगन्नाथानां जिनानां प्रतिमाः, प्रत्यतिष्ठिपत् स्थापयामास ॥ १६ ॥

अत्याग्रहग्रहात् तत्र सङ्घस्याऽनघचेतसः ।
आसामास सहर्षासु वर्षासु स महर्षिराट् ॥ १७ ॥

तत्र नगरे, प्रतिष्ठानन्तरमनघचेतसो निष्पापमनसः, सङ्घस्य अत्याग्रहग्रहात् बहुहठग्रहणात्, वर्षासु किं०, सहर्षासु क्षेमेण वाहनाद्यागमात् सानन्दासु, स महर्षिराड् गुरुः, आसामास चतुर्मासकं स्थितवानित्यर्थः ॥ १७ ॥

भाग्येनेवायमस्माकं धर्मोऽध्यक्षत्वमागतः ।
मूर्तिमाली समभ्यागात् किंवा वृक्षः सुपर्वणाम् ? ॥ १८ ॥
दक्षिणो दक्षिणावर्तवारिजः किमु चोर्जितः ।
किंवा दारिद्र्यवह्न्यम्भः कुम्भः पीयूषपायिनाम् ? ॥ १९ ॥
नयनानन्दनं सूरिं सुधाञ्जनसमं समम् ।
एवं व्यचिन्तयच्चित्ते वीक्षमाणो महाजनः ॥ २० ॥

(त्रिभिर्विशेषकम्)

अथ त्रयाणां व्याख्या—सूरिं श्रीविजयसेनसूरिं, किं०, नयनानन्दनं नेत्राह्लादकं, पुनः किं०, सुधाञ्जनसममसृताञ्जनतुल्यं, पुनः, समं सरलं, वीक्षमाणः पश्यन्, महाजनो नागरलोकः, चित्त एवं व्यचिन्तयत्, एवमिति किं? तदेव श्लोकद्वयेनाह—भाग्येन इवोत्प्रेक्ष्यते—अस्माकं पुण्येन, अयं गुरुरूपधारी साक्षाद् धर्म एव, अध्यक्षत्वं प्रत्यक्षताम्, आगतः; वाऽथवा, किं सुपर्वणां वृक्षः कल्पद्रुमः, मूर्तिमाली मूर्त इव, समभ्यागात् ॥ १८ ॥ च पुनः, किमु इति वितर्के, उत्प्रेक्षार्थे वा, अथवा अयं दक्षिणावर्तो वारिजः शङ्खः, किं०, दक्षिण उदारः, पुनः, ऊर्जितो दीप्त इति, वाऽथवा, किं०, पीयूषपायिनां देवानां कुम्भः कामकुम्भ इति, किं०, दारिद्र्यवह्नौ दौर्गत्याग्नौ अम्भः पानीयं तदुपशामकत्वादिति ॥ १९ ॥ विंशः श्लोकस्तु प्रागे-

वाऽन्वयविषयीकृत इति पुनर्नोक्त इति दिक् ॥ इति त्रयाणां व्याख्या ॥ २० ॥

श्रीतपागच्छनाथोऽथो पाथोवाहप्रवाहवत् ।
सल्लोकस्तोककानेषोऽतोषयद् वचनामृतैः ॥ २१ ॥

पाथोवाहो मेघस्तत्प्रवाहवत्, एष श्रीतपागच्छनाथः, अथ वचनामृतैर्वाक्पानीयैः, सल्लोका एव ये स्तोककाश्चातकास्तान्, अतोषयत् तुतोषेति गमनिका ॥ २१ ॥

अथ प्रान्ते चतुर्मास्या अस्याः सौभाग्यभाग्यभूः ।
विजहार महीहारः पुरग्रामाकुलामिलाम् ॥ २२ ॥

अथाऽस्याश्चतुर्मास्याः प्रान्ते कार्तिकचतुर्मासकपारणके, सौभाग्यभाग्ययोर्जगद्वल्लभत्वभागधेययोर्भूः स्थानं, पुनः, मह्याः पृथिव्या हारोऽलङ्कृतिभूतः, यतो "वसुधाभरणं पुरुषः" इत्याद्युक्तत्वात्, इलां पृथिवीं, किं०, पुरग्रामैराकुलां तद्व्याप्तत्वादिति, विजहारेति गुरुस्ततो बन्दिराद् व्यहार्षीदिति ॥ २२ ॥

क्रमेण क्रमविच्चक्रचक्रभृद् विहरन् गुरुः ।
स्तम्भतीर्थं पुरं प्रापद् मानसं मानसौकवत् ॥२३॥

गुरुः किं०, क्रमविदां मार्गविदां चक्रे समूहे चक्रभृत् सार्वभौमः, क्रमेण विहरन् स्तम्भतीर्थं पुरं प्रापत्, मानसौक इव हंस इव, मानसं सरोवरमिति, ओकशब्दोऽकारान्तोऽप्यस्तीति ध्येयम् ॥ २३ ॥

दूरीकृताघसङ्घेन सङ्घेनाऽनघचेतसा ।
महीयांसो महास्तत्र सूत्रयाञ्चक्रिरे तदा ॥ २४ ॥

सङ्घेन तीर्थीयश्राद्धसङ्घेन, किं०, दूरीकृता अघस्य दुःखस्य सङ्घाः समूहा येन तेन, पुनः किं०, अनघचेतसा निष्पापमनसा,

तेनाऽत्र नार्थस्य पुनरुक्ततादोषः, यच्छ्रीहेमाचार्यधुर्यैः "अघं दुःखे व्यसनैनसोः" इति, तत्र नगरे, तदा गुर्वागमे, महीयांसो महा महोत्सवाः, सूत्रयाञ्चक्रिरे कृता इति ॥ २४ ॥

स्थित्वा कियच्च तत्रोच्चैरर्चितो नागरैर्नरैः ।
द्वीपसङ्घाग्रहात् तत्र गुरुर्गन्तुमना अभूत् ॥ २५ ॥

च पुनः, तत्र स्तम्भतीर्थे, कियत्कालं स्थित्वा नागरैर्नगरलोकैः, अर्चितः सन्, अन्यदा द्वीपबन्दिरस्थसङ्घस्याऽऽग्रहात् तत्र सुराष्ट्रदेशे, गुरुः गन्तुमना अभूद् द्वीपबन्दिरे गन्तुकामोऽजनीत्यर्थः ॥ २५ ॥

श्रीमद्विजयदेवेनाऽनूचानेन समन्वितः ।
व्यहार्षीदृषिमुख्योऽथ कलभेनेव कुञ्जरः ॥ २६ ॥

अथ स ऋषिमुख्यो गुरुः, श्रीमद्विजयदेवेन सूरिणा स्वपट्टधारिणा, समन्वितः सहित इति। दृष्टान्तमाह—कुञ्जरो गजेन्द्रः षष्टिहायनिकः, कलभेन गजबालकेनेवेति, व्यहार्षीत् ॥ २६ ॥

क्रमाच्छ्रीविमलं शैलं पूर्वशैलमिवागते ।
सूरिसूरे सङ्घलोकाः कोका इव मुदं दधुः ॥२७॥

क्रमादिति ततश्चलनानन्तरं कियद्भिर्दिनैः श्रीविमलं शैलं श्रीशत्रुञ्जयं महातीर्थं, पूर्वशैलं पूर्वाचलमिव, सूरिसूरे गच्छेशसूर्ये तस्मिन्, आगते सति, सङ्घलोकाः स्तम्भतीर्थराजनगरपत्तननवीननगरद्वीपबन्दिरादिसङ्घजनाः कोकाश्चक्रवाका इव, मुदं हर्षं, दधुर्धरन्ति स्मेति ॥ २७ ॥

अथ शत्रुञ्जये यात्रां कृत्वा स्थित्वा कियद्दिनीम् ।
अनेकसङ्घलोकानां पूरयित्वा मनोरथान् ॥ २८ ॥
श्रीपूज्योपासनप्रह्वमप्यनूचानचक्रिणम् ।

गूर्जरत्राविहारायाऽऽदिश्य सङ्घघनाऽऽग्रहात् ॥ २९ ॥
द्वीपबन्दिरसङ्घेन सार्धमद्वैतसंपदा ।
प्रभुः प्रत्युन्नतद्रङ्गं प्रतस्थे सुस्थिताऽऽशयः ॥ ३० ॥

अथ चैत्र्यां पूर्णिमायां श्रीशत्रुञ्जये श्रीऋषभदेवमुख्यशृङ्गे द्वितीये शृङ्गे च श्रीमरुदेवाङ्किते श्रीअजितशान्तिस्तोत्रनिष्पत्ति-भूमौ श्रीशान्तिनाथश्रीअद्भुतादिनाथप्रासादाभिरामे, यात्रां कृत्वा, पुनः कियद्दिनीं स्थित्वा, अनेकसङ्घलोकानां मनोरथान् पूरयित्वेति ॥२८॥ अनूचानचक्रवर्तिनं,किं०, श्रीपूज्योपासने प्रह्वं परायणमपि श्रीविजयदेवसूरिं सङ्घस्य गूर्जरदेशसत्कस्य घनाऽऽग्र-हात् , गूर्जरत्राविहाराय आदिश्य आदेशविषयीकृत्येति ॥२९॥ स्वयं किं कृतवानित्याह—अद्वैतसंपदाऽद्वितीयश्रीकेण, द्वीपबन्दिर-सङ्घेन सार्धं प्रभुः उन्नतमूनाख्यं द्रङ्गं शत्रुञ्जयात् पञ्चाशत्क्रोशा-न्तरालस्थितं प्रति, प्रतस्थे चलित इति, किं०, सुस्थितः सम्यग् मर्यादया मनोवचःकायाऽनाबाधया स्थित आशयोऽभिप्रायो यस्य स इति॥ इति त्रयाणां व्याख्या ॥ ३० ॥

गौर्वागमनिकी वार्ता पृथ्व्यां प्रासीसरत् तदा ।
गन्धधूलीभवो गन्धो रोद्धुं किं शक्यते क्वचित् ? ॥३१॥

तदा तत्र देशे सौराष्ट्रे पृथ्व्यां गौर्वागमनिकी गुरोः आ-गमनाद् भवा गौर्वागमनिकी, वार्ता प्रासीसरत् प्रसारं प्रापेति । तत्कारणमेवाह— किं गन्धधूलीभवः कस्तूरीसंभवः, गन्धः क्वचिद् रोद्धुं केनापि शक्यते ? अपि तु नेति ।

यदाख्यान्ति स्म गुरवः—

“वार्ता च कौतुकवती विशदा च विद्या
लोकोत्तरः परिमलश्च कुरङ्गनाभेः ।
तैलस्य बिन्दुरिव वारिणि दुर्निवार-

मेतत् त्रयं प्रसरतीति किमत्र चित्रम् ?" ॥ १ ॥

पुनरपरेऽप्यूचिरे—

"कर्पूर ! रे ! परिमलस्तव मर्दितस्य
श्रीखण्ड ! रे ! परिमलस्तव घर्षितस्य ।
रे ! काकतुण्ड ! तव वह्निगतस्य गन्धः
कस्तूरिका स्वयमबोधि बुधैरदृष्टा" ॥ २ ॥

इत्याद्युक्तत्वात् कस्तूरिकागन्धवद् गुर्वागमनोदन्तोऽपि विस्तृत इति भावः ॥ ३१ ॥

अथाऽऽयातान् गुरूञ्ज्ञात्वा श्राद्धाः श्रीद्वीपवासिनः ।
अभ्युत्तस्थुर्घनोत्कण्ठा नीलकण्ठा घनानिव ॥ ३२ ॥

अथ क्रमेण गुरून् आयातान् समीपप्राप्तान्, ज्ञात्वा द्वीपवासिनः श्राद्धाः द्वीपबन्दिरसज्जनाः, किं०, घना बह्वी उत्कण्ठा दुर्लभगुरुदर्शनविषयिणी स्पृहा येषां ते घनोत्कण्ठाः, घनान् मेघान्, नीलकण्ठाः केकिन इव, अभ्युत्तस्थुः संमुखागमनसामग्रीरचनविषयेऽत्यौत्सुक्यभाजोऽभूवन्निति तत्त्वम् ॥ ३२ ॥

गुरुर्जगद्गुरुस्तूपं त्रिः परीय वरीयसीम् ।
पादुकायुगलीं नत्वा द्रङ्गमुन्नतमाविशत् ॥ ३३ ॥

अथ जगद्गुरोः श्रीहीरसूरेः, स्तूपं त्रिरिति त्रीन् वारान्, परीय प्रदक्षिणीकृत्य, तत्रस्थां वरीयसीं वरिष्ठां, पादुकायुगलीं गुरुपादद्वयीं, नत्वा, उन्नतं द्रङ्गं द्वीपात् पञ्चक्रोश्या अर्वाग्वर्तिनम्, आविशत् प्रविष्ट इति ॥ ३३ ॥

अथास्ति द्वीपवास्तव्यो मेघनामा परीक्षकः ।
समस्तवणिजां मुख्यस्ताराणामिव चन्द्रमाः ॥ ३४ ॥

द्वीपबन्दिरवासी परीक्षकश्रेणिमुख्यो मेघनामा व्यवहारी

तत्र समस्तवणिजां मुख्यश्चन्द्रमा इव यथा ताराणामस्तीति गमनिका ॥ ३४ ॥

पद्मनाभस्य पद्मेव भाग्यसौभाग्यभाजिनी ।
तस्यास्ति लाडकीनाम्नी चार्वी चञ्चललोचना ॥३५॥

पद्मनाभस्य विष्णोः, यथा पद्मा श्रीः, किं०, भाग्यं सौभाग्यं च भजतीत्येवंशीला, तथा तस्य मेघपरीक्षकस्य, चार्वी मनोज्ञा, चञ्चललोचना स्त्री, लाडकीनाम्नी साऽपि भाग्यसौभाग्यभाजिनी यतो दर्शनादेव यवनभूपानामपि मान्येति शेषः ॥ ३५ ॥

ताभ्यां कारयितुं दब्धामथ प्रथितविस्तराम् ।
प्रतिष्ठामुन्नतदङ्गे विदधे साधुसिन्धुरः ॥ ३६ ॥

अथ ताभ्यां दम्पतिभ्याम्, उन्नतदङ्गे समागत्य समस्तद्वीपसङ्घेन सह कारयितुं दब्धां प्रारब्धां प्रतिष्ठां, किं०, प्रथितविस्तरां सुगमं; साधुसिन्धुरो गुरुः, विदधेऽकरोत् ॥ ३६ ॥

द्वितीयामद्वितीयर्द्ध्या श्राद्ध्याऽमूलाभिधानया ।
तत्र निर्मापितां चक्रे प्रतिष्ठां हृष्टहृद् गुरुः ॥ ३७ ॥

पुनः, तत्रैवोन्नतदुर्गे, अमूलांनाम्न्या श्राद्ध्या, किं०, अद्वितीया ऋद्धिर्यस्यास्तया महर्द्ध्येत्यर्थः; निर्मापितां प्रतिष्ठां हृष्टहृद् हर्षितचेता गुरुः, चक्रे कृतवानिति ॥ ३७ ॥

तृतीयामथ तत्रैव प्रतिष्ठां शिष्टसंपदा ।
श्राद्धः कालाभिधः सूरिचक्रिणाऽचीकरत् ततः ॥३८॥

अथ पुनः, तत्रैवोन्नतदुर्गे, द्वीपबन्दिरतः समेत्य कालाभिधः श्राद्धः शिष्टसंपदा विशिष्टश्रिया, प्रतिष्ठां, किं०, तृतीयां, सूरिचक्रिणा गुरुणा, अचीकरत् कारयामासेति ॥ ३८ ॥

सङ्घाऽऽग्रहात् ततो हीरसूरिस्वःप्राप्तिपाविते ।
तत्र चक्रे चतुर्मासीं निस्सीमगरिमा गुरुः ॥३९॥

ततः प्रतिष्ठात्रयीकरणानन्तरं, तत्रोन्नतद्रङ्गे,किं०, हीरसूरेः श्रीहीरविजयगुरूत्तमस्य स्वःप्राप्त्या स्वर्गगमनेन पाविते, गुरुः किं०, निस्सीमगरिमा निरर्गलगौरवाऽऽढ्यः,चतुर्मासीं चक्रे ॥३९॥

अथ पारणके तस्मात् पुरात् सूरिपुरन्दरः ।
चलितः कलितो लोकैः प्रतिष्ठाहेतवे द्रुतम् ॥४०॥

तस्मात् उन्नतपुरात् , अथ चतुर्मासकपारणके स सूरिपुरन्दरो गुरुः, लोकैः श्रावकश्राविकारूपैः अन्यैरपि गान्धर्वादिभिश्च, कलितः सन् , प्रतिष्ठाहेतवे चलित इति ॥ ४० ॥

क्रमाद् मुनिपतिः प्रापद् मकराकरमूलगम् ।
विवेकिलोकसंकीर्णं पत्तनं देवपत्तनम् ॥ ४१ ॥

स मुनिपतिः क्रमाच्चलन् मकराकरमूलगं समुद्रान्तिकवर्ति, देवपत्तनं नाम पत्तनं पूर्वं श्रीचन्द्रप्रभप्रभुवारके श्रीचन्द्रशेखरराजाङ्गजश्रीचन्द्रयशसा राज्ञा स्वामिनः समवसरणस्थाने जीवितस्वामिनश्चन्द्रप्रभस्य सार्धशतधनुर्मितचन्द्रकान्तरत्नमयप्रतिमाप्रासादालङ्कृतं चन्द्रप्रभासपुरमिति प्रथितं स्थापितं लोके प्रभासतीर्थमिति विस्तृतं सांप्रतं तु देवकपत्तनं नाम नगरं, पुनः किं०, विवेकिभिर्लोकैः संकीर्णं प्रापत् ॥ ४१ ॥

तत्राऽस्त्यमरदत्ताख्यो धनी विष्णाह्वयस्तथा ।
तृतीयो लालजीनामा धाम धर्मैकसंपदाम् ॥४२॥

तत्र देवकपत्तने, अमरदत्ताख्यो धनी धनवान् , पुनः, द्वितीयो विष्णाह्वयः, पुनः, तृतीयो लालजीनामा आस्ति, एते त्रयोऽपि किं०, धर्मः प्रतीतः, एका अद्वितीयाः संपदश्च धर्मै-

कसंपदस्तासां धाम गृहमिति ॥ ४२ ॥

व्यवहारिवरा भूरिमहोभरपुरस्सरम् ।
प्रतिष्ठा गुरुभिस्तिस्रः कारयामासुराशु ते ॥४३॥

ते व्यवहारिवराः त्रयोऽपि पूर्वोक्तनामकाः, भूरिमहोभरपुरस्सरं बहुतरोत्सवातिशयपूर्वकं, गुरुभिः पूज्यैः, तिस्रः प्रतिष्ठाः कारयामासुरिति ॥ ४३ ॥

ततोऽपि च चलन् सूरिः पूरिताखिलदिग्यशाः ।
अभ्यागाद् द्वीपपार्श्वस्थं श्रीदेवकुलपाटकम् ॥४४॥

ततो देवपत्तनतः प्रतिष्ठात्रयं विधाय सूरिश्चलन्, पुनः किं०, पूरिता अखिला दिशो येनेदृग् यशो यस्य स पूरिताखिलदिग्यशाः, श्रीदेवकुलपाटकं देलवाडाख्यं पुरं द्वीपबन्दिरपार्श्ववर्ति, अभ्यागात् ॥ ४४ ॥

तत्र प्रतिष्ठामेकां तु हीरजीश्रावकौकसि ।
द्वितीयां च गृहे शोभांश्राद्ध्याः सूरिवरोऽकरोत् ॥४५॥

तत्र देवकुलपाटके, हीरजीनामा परीक्षको द्वीपबन्दिरवासी श्राद्धस्तस्य ओकसि गृहे, एकां प्रतिष्ठां, च पुनः, द्वितीयां प्रतिष्ठां शोभांनाम्न्या द्वीपवासिन्याः श्राद्ध्याः, गृहे सूरिवरः अकरोत् कुरुते स्म ॥ ४५ ॥

फरङ्गीसमुदायेनाऽन्यदा काजीविराजिना ।
कपीतानकलासादिपादरीसहितेन च ॥ ४६ ॥

द्वीपबन्दिरतोऽभ्येत्य श्रीदेवकुलपाटके ।
इति विज्ञपयाञ्चक्रे जल्पं दत्त्वा तपाधिपः ॥ ४७ ॥

अन्यदा फरङ्गीसमुदायेन, किं०, काजीविराजिना काजीनामा

फरङ्गीणां गुरुस्थानीय इति तेनान्वितेन,पुनः,कपीतानोऽधिकारि-विशेषः,कलासः अमात्यविशेषः,तदादयोऽन्येऽपि फरङ्गीविशेषाः, पुनः, पादरीनामा फरङ्गी द्रङ्गे पद्रवास्तव्यस्तत्र नित्यस्थायी, तेन सहितेन॥ ४६॥ फरङ्गीसार्थेन किं कृतमित्याह– श्रीद्वीपबन्दिराद् देवकुलपाटके, अभ्येत्याऽऽगत्य, जल्पं दत्त्वा अस्माभिर्भवतां किमपि विरुद्धं न विधापनीयमित्यादि जल्पप्रदानपूर्वं, तपाधिपः श्रीविजयसेनगुरुः, इति वक्ष्यमाणं, विज्ञपयाञ्चक्रे विज्ञप्तिविषयीकृत इति ॥ युग्मव्याख्येति ॥ ४७ ॥

गुरूत्तंस ! त्वयाऽस्माभिर्धर्मगोष्ठी विधास्यते ।
विरूपं न च केनापि कस्याचित् संनिधास्यते ॥४८॥

हे गुरुत्तंस ! त्वया सह अस्माभिर्धर्मगोष्ठी विधास्यते, च पुनः, केनापि अस्मद्गृह्येण, कस्यचिद् भवद्गृह्यस्याऽनुगस्यापि, किञ्चिद् विरूपं प्रतिकूलं, न संनिधास्यते केनापि प्रातिकूल्येन न स्थास्यत इति भावार्थः ॥ ४८ ॥

आगच्छ स्वच्छचेतस्त्वं तद् वरं द्वीपबन्दिरम् ।
नो चेत् तदा यस्त्वच्छिष्यमुख्यस्तं प्रेषय द्रुतम् ॥४९॥

हे स्वस्थचेतः ! निर्मलहृदय !, ततः कारणात्, त्वं द्वीपबन्दिरमागच्छ स्वयं पादैः पवित्रयेति, चेद् यदि, त्वं नागच्छसि तदा यः शिष्यः, किं०, त्वच्छिष्येषु मुख्यः स्यात्, तं तत्र प्रेषयेति ॥ ४९ ॥

एवं फिरङ्गीवर्गस्याऽऽग्रहेण प्राहिणोद् गुरुः ।
श्रीनन्दिविजयाऽऽह्वानवाचकं द्वीपबन्दिरे ॥ ५० ॥

एवमित्युक्तलक्षणेन, फरङ्गीवर्गस्य आग्रहेण, गुरुः सूरिः, श्रीनन्दिविजयाह्वानं वाचकं स्वशिष्यं, द्वीपबन्दिरे प्राहिणोत् अप्रेषयत् ॥ ५० ॥

फरङ्गिमुख्यप्रमुखैस्तत्कलारञ्जितैः स च ।
सदकारि निजच्छत्रार्पणप्रासाददर्शनात् ॥ ५१ ॥

फरङ्गीमुख्याः पाद्रीयकाजीप्रमुखास्तन्मुख्यैरपरैरपि फरङ्गीलोकैः, किं०, तत्कलाभिः सद्रूपलावण्यवाक्पाटवादिभिः, रञ्जितैस्तुष्टैः, स वाचकः, निजच्छत्रार्पणं स्वकीयच्छत्रकप्रदानं, पुनः, स्वकीयप्रासादानां देवगृहाणां गृहाणां वा दर्शनं तस्मात् निजच्छत्रार्पणप्रासाददर्शनात्, सदकारि सत्कृत इति ॥ ५१ ॥

व्याख्यानवृषगोष्ठ्यादि कृत्वा स्थित्वा दिनत्रयीम् ।
सोऽन्वितः सङ्घलोकेनाऽभ्यागाद् गुरुपदद्वयीम् ॥५२॥

स वाचकः, व्याख्यानमुपदेशदानं वृषगोष्ठ्यादि जीवाऽजीवादिनवतत्त्वात्मकविचारस्वरूपनिरूपणादि, तत्र द्वीपे कृत्वा, फरङ्गीगेहेष्विति शेषः, पुनस्तत्र दिनत्रयीं स्थित्वा सङ्घलोकेनाऽन्वितः परिवृतः, गुरुपदद्वयीमभ्यागात् प्रत्यागत इति ॥५२॥

सूरिप्रष्ठस्ततस्तुष्टः स्वशिष्योन्नतिदर्शनात् ।
अथ प्रतस्थे यात्राऽर्थं जीर्णदुर्गं प्रति प्रभुः ॥ ५३ ॥

ततः स सूरिषु प्रष्ठो मुख्यः, स्वशिष्यस्य वाचकस्य उन्नतिदर्शनात् तुष्ट इति मुदितोऽभूत्, अथ प्रभुः कदाचिदवसरे जीर्णदुर्गं प्रति श्रीनेमिनाथयात्राऽर्थं, प्रतस्थेऽचलत् ॥ ५३ ॥

द्वीपबन्दिरवास्तव्यः सङ्घः श्रीमान् महामनाः ।
रैवताचलयात्रार्थमचालीद् गुरुणा सह ॥ ५४ ॥

अथ गुरुणा सह द्वीपबान्दिरीयः सङ्घः किं०, श्रीमान् लक्ष्मीवान्, पुनः, महामना उदात्तचेता इति, रैवताचलस्य गिरिनारगिरेर्यात्रायै अचालीत् ॥ ५४ ॥

आमोददायिनीं पूज्यपूज्यपादद्वयीं पथि ।
सङ्घोऽनघमना भेजे षट्पदः पद्मिनीमिव ॥ ५५ ॥

अनघमनाः स सङ्घः षट्पदो भ्रमरः, पद्मिनीं यथा, तथा पूज्यस्य पूजनार्हस्य पूज्यस्य गुरोः पादद्वयीं, किं०, आमोददायिनीं हर्षदायिनीं,पक्षे गन्धदायिनीं, पथि मार्गे, भेजेऽभजत् ॥५५॥

अग्रेसरेण गुरुणा गुरुणा ब्रह्मचारिणा ।
देवसेनेव सा रेजे सङ्घलोकपरम्परा ॥ ५६ ॥

गुरुणा महता धर्मदेशिना वा, गुरुणा श्रीसूरिणा, किं०, ब्रह्मचारिणा शीलशालिना, पक्षे ब्रह्मचारिणा कार्तिकेयेन, अग्रेसरेण अग्रगामिना सता "देवसेनेन्द्रकन्यायां सैन्ये दिविषदामपि" इति श्रीहेमाचार्यवचनात्, यथा देवसेनानाम्नी इन्द्रकन्या कार्तिकेयेन शुशुभे, एतदर्थानुवादिकालिदासमहाकविवचो यथा "अथोपयन्त्रा सदृशेन युक्तां स्कन्देन साक्षादिव देवसेनाम्" इत्यादि, अथवा देवसेना सुरसेनाऽपि,यथा तेनाग्रेसरेण सेनान्या शुशुभे, तथा सा सङ्घलोकपरम्परा पुरोविहारिणा गुरुणा रेजे इति ॥ ५६ ॥

सङ्घेन सार्धमद्वैतहर्षेणर्षिसुरर्षभः ।
जीर्णदुर्गमगात् तत्र राजा खुरमनामकः ॥ ५७ ॥

अद्वैतहर्षेण हर्षाद्वितीयेन, सङ्घेन द्वीपवासिना, सार्धं स ऋषिसुरर्षभः मुनिपुरन्दरः, जीर्णदुर्गं गिरिनारगिरितलहट्टिकालङ्कारं, पुरा श्रीऋषभदेवसूनुना भरतानुजन्मना सुराष्ट्रकुमारेण स्थापितम्, अगात् प्राप्त इति, तत्र दुर्गे खुरमनामा राजा श्रीअकब्बरपातिशाहिपरममान्योम्बरामुख्यश्रीआजमखाननन्दनस्तदानीं सौराष्ट्रराष्ट्राधिपत्येनाऽस्तीति शेषः ॥ ५७ ॥

स क्रूरोऽपि गुरोर्भाग्याद् भूकान्तः शान्ततामगात् ।
चन्द्रसंपर्कतश्चन्द्रोपलः किं नाऽम्बु मुञ्चति ?॥ ५८ ॥

स भूकान्तो राजा खुरमनामा, स्वभावादेव यतिषु क्रूरोऽपि तदानीं गुरोर्भाग्यात् शान्ततामगात् शान्तो जात इति, दृष्टान्तेनामुमेवार्थं समर्थयति—चन्द्रोपलश्चन्द्रकान्तः, चन्द्रसंपर्कतः शशधरकरसंयोगात्, अम्बु पानीयं, किं न मुञ्चति ? न द्रवति किं ?, द्रवत्येवेत्यर्थः ॥ ५८ ॥

राज्ञाऽथ सत्कृतस्तेन सङ्घेन बहुना सह ।
गिरिं रैवतनामानमारुरोह महामुनिः ॥ ५९ ॥

अथ तेन राज्ञा सत्कृतो यात्राऽनुज्ञादानादिना बहुमानविषयीकृत इति, बहुना सङ्घेन सह रैवतनामानं गिरिमुज्जयन्तं पर्वतं, स महामुनिः आरुरोहाऽधिरूढ इति ॥ ५९ ॥

मुदितः स गतश्चैत्ये नेमिनः स्वामिनस्ततः ।
बिम्बमम्बुधरच्छायं वीक्ष्य प्रीतिं परां दधौ ॥ ६० ॥

स गुरुर्मुदितः सन्, चैत्ये गूर्जरत्राधीशश्रीसिद्धराजजयसिंहदेवमहामन्त्रीश्वरसज्जनश्रेष्ठिकारिते पृथिवीजयनाम्नि प्रासादे, गतः प्राप्तः, तत्र नेमिनः स्वामिनो बिम्बं, किं०, अम्बुधरच्छायं श्यामच्छवित्वात्, वीक्ष्य, परां प्रीतिं दधौ महाहर्षवानभूदिति भावः ॥ ६० ॥

कृत्वा तीर्थस्य तस्याथ सेवां विविधभङ्गिभिः ।
सूरिः सङ्घसखो भूरिपीतामृत इवाभवत् ॥ ६१ ॥

तस्य तीर्थस्य गिरिनारस्य, विविधभङ्गिभिः सहस्राम्रव-

णनिरीक्षणतत्रस्थजिनप्रतिमापादुकाप्रणमनपर्वतेन्द्रमूर्धमुकुटश्रीप्रपञ्चकशिखरपञ्चकमुख्यशृङ्गशृङ्गारभूतभुवनाऽम्बासमानाऽम्बादेवीनिध्यानश्रीनेमीश्वरसम्यग्ध्यानविधानादिविचित्रप्रकारैः, सेवां वन्दनदर्शनादिरूपां, भक्तितः शक्तितश्च भावपूजारूपां च, कृत्वा सङ्घसखश्चतुर्विधसङ्घसहितः सूरिः, भूरिपीताऽमृत इव बहुतरपीतपीयूष इव, अभवत् परमानन्दमयो जात इति ॥ ६१ ॥

अतिमात्रां तीर्थयात्रां कृत्वा सत्त्वभृदग्रणीः ।
उत्ततार गिरेस्तस्मात् केसरीव शनैः शनैः ॥ ६२ ॥

अतिमात्रां बह्वीं, तीर्थयात्रां देववन्दनगिरिशिखररामणीयकविलोकनादिरूपां, कृत्वा सत्त्वभृदग्रणीः साहसिकमुख्यः, सगुरुः, शनैः शनैः केसरीव, तस्माद् गिरेः, उत्ततार उत्तीर्णवान् ॥ ६२ ॥

स्थित्वा कियन्ति दिवसान्यथ जीर्णदुर्गे
कृत्वा धराऽधिपतिना सह धर्मगोष्ठीम् ।
श्रीदेवपत्तनपुरं गुरुराजगाम
सङ्घोऽपि धाम मुदितः स निजं जगाम ॥६३॥

अथ यात्राकरणानन्तरं, कियन्ति दिवसानि जीणदुर्गे स्थित्वा पुनर्धराऽधिपतिना खुरमनाम्ना मुद्गलमुख्येन सह, धर्मगोष्ठीं कृत्वा श्रीदेवपत्तनबन्दिरं गुरुः श्रीविजयसेनसूरिः, आजगाम चतुर्मासकास्थित्यै प्राप्त इति, स द्वीपबन्दिरवासी समस्तसङ्घोऽपि च किं०, मुदित इति निर्विघ्नतासूचकमिदं विशेषणम्, ततः क्षेमेण निजं धाम गृहं, जगाम गतवानिति । वसन्ततिलकेयम् ॥ ६३ ॥

* * * * * * * * * * * * * * * * * * * * * * * * * * * * * * * * * * * * * * *

इतीति निखिलं निगदसिद्धम् ।

इति सकलसुविहितसभासार्वभौमसमानपण्डितमण्डलीमौलिमौलीयमानपण्डितश्रीकमलविजयगणिसुशिष्यमुख्यपण्डितपुण्डरीकप्रख्यपण्डितश्रीविद्याविजयगणिविनेयवाचकश्रीगुणविजयगणिविरचितायां श्रीविजयप्रदीपिकाभिधानधारिकायां सुखावबोधिकायां श्रीविजयप्रशस्तिमहाकाव्यटीकायां विंशः सर्गोऽर्थतः समर्थितः ॥

अर्हम्

# अथैकविंशः सर्गः ।

अथ एकविंशः सर्गो निसर्गेण सुगमोऽपि किञ्चिद् विव्रियते–

अथ सङ्घाग्रहाद् देवपत्तने बृहतीं स्थितिम् ।
कृत्वा प्रतिष्ठयोर्द्वन्द्वमद्वन्द्वमहिमं तथा ॥ १ ॥
ततः पत्तनतो वाचंयमयामत्रतीपतिः ।
पुलिने पयसांपत्युः प्रयाणैः प्रगुणैश्चलन् ॥ २ ॥
क्रमेण तटिनीनाथतटभूतलभूषणम् ।
अलञ्चकार नगरं देवतः कुलपाटकम् ॥ ३ ॥

( त्रिभिर्विशेषकम् )

अथ देवपत्तने बृहतीं स्थितिं कृत्वा ज्येष्ठस्थितिं विधाय, तथा अद्वन्द्वमहिममद्वितीयमाहात्म्यं, प्रतिष्ठयोः द्वन्द्वं प्रतिष्ठाद्वयं, विधाय च ॥ १ ॥ किं कृतवानिति श्लोकद्वयेनाह–ततः पत्तनतो देवपत्तनात्, वाचंयमयामवतीपतिः यतियामिनीशः, पयसां-

पत्युः समुद्रस्य, पुलिने तटे, प्रगुणैः पटुभिः, प्रयाणैः अखण्डितैश्चलन्निति ॥ २ ॥ क्रमेण देवतः कुलपाटकं देउलवाडाख्यं नगरं, किं०, तटिनीनाथस्य अर्णवस्य यत्तटभूतलं तस्य भूषणमिव भूषणं शृङ्गारभूतत्वात्, अलञ्चकाराऽऽगतवान् ॥ इति त्रयाणां व्याख्या ॥ ३ ॥

तत्रागमनादनन्तरं यज्जातं तदाह—

इत्यचिन्ति फरङ्गीन्द्रैरन्यदा द्वीपवासिभिः ।
गुरुः समागतो नूनमनूनमहिमाऽर्णवः ॥ ४ ॥

अन्यदा द्वीपवासिभिः फिरङ्गीन्द्रैः कपीतानकाजीकलासपाद्रीयप्रमुखफरङ्गीमुख्यैः प्राग्मिलितैः, इति अग्रे वक्ष्यमाणम्, अचिन्ति चिन्तितमिति, किं?, तदेवाह—नूनं निश्चितं गुरुर्देवकुलपाटके समागतः श्रूयते, स किं०, अनूनस्य पूर्णस्य महिम्नः अर्णवः समुद्र इति ॥ ४ ॥

यत्प्रभावात् पुराऽत्रत्यो लोकः सक्षेममागतः ।
तत्तेन साकं साङ्गत्यं साम्प्रतं साम्प्रतं हि नः ॥५॥

पुनः, यत्प्रभावाद् यस्य गुरोः प्रसादात्, योऽत्रत्यो लोको यात्रार्थमनेन गुरुणा सह गते वर्षे गतोऽभूत्, स द्वीपवासी लोकोऽर्थात् सङ्घः, सक्षेमं सकुशलं, गृहे आगतः मीर्यां खुरमसत्ककृच्छ्राद् मुक्त इति, ततः कारणात्, तेन गुरुणा साकं साङ्गत्यं मिलनं, नोऽस्माकमपि, साम्प्रतमधुना, साम्प्रतमुचितमिति ॥५॥

फरङ्गिमुख्यैर्ध्यात्वेति प्रीतितोऽभ्येत्य भूरिभिः ।
एवं विज्ञैकविज्ञप्तैः पात्रीचक्रे गुरुर्गुरुः ॥ ६ ॥

इत्युक्तरूपं फरङ्गिमुख्यैर्ध्यात्वा विचिन्त्य, देवकुलपाटके अभ्येत्य, एवमग्रे वक्ष्यमाणं, गुरुर्गुरुः परमगुरुरिति, विज्ञैकविज्ञप्तैः, पात्रीचक्रे निपुणविज्ञप्तिकाविषयीकृत इत्यर्थः ॥ ६ ॥

अथ यद्विज्ञसं तदाह—

गुरो ! त्वमसि सर्वत्र हितकृत्यकृतौ कृती ।
जगत्या वत्सलश्चाऽसि त्वमेवाऽऽषाढमेघवत् ॥ ७ ॥

हे गुरो ! त्वमेव सर्वत्र भूवलये, हितकृत्यस्य कृतौ करणे, कृती दक्षः, असीति वर्तसे, च पुनः, त्वमेव आषाढमेघवत्, जगत्या विश्वस्य विश्वाया वा, वत्सलोऽसीति ॥ ७ ॥

तत्त्वं कृपां समाधाय समेहि द्वीपबन्दिरम् ।
अस्मन्मनोरथं सार्थं व्यर्थं नो कर्तुमर्हसि ॥ ८ ॥

ततः कारणात्, कृपां समाधाय कृत्वा, द्वीपबन्दिरमस्मत्साम्राज्यशालि, समेहि आगच्छ, सर्वथा अस्मन्मनोरथं, किं०, सार्थं युष्मदागमनवचःश्रवणसमुद्भूतागण्यपुण्यप्रयोजनसद्भावात् सार्थकं, कर्तुमर्हसि, न तु व्यर्थं, निरर्थकं कर्तुं नाऽर्हसीति ॥८॥

भूयः प्रणुन्नः प्रीत्येति तैः फरङ्गीभिराप्तराट् ।
द्वीपसङ्घाग्रहं चोच्चैस्तरं चेतसि चिन्तयन् ॥ ९ ॥
लाभो भूरितरो भावी यदत्र सुकृतश्रियः ।
इति प्रीतमनाः सूरिरभ्यागाद् द्वीपबन्दिरम् ॥१०॥

आप्तराड् गुरुः, तैः फरङ्गीभिः, इति प्रणुन्नः प्रेरितो भूरितरविज्ञप्तिकादिना अनुकूलित इति, च पुनः, द्वीपसत्कसङ्घाग्रहं, किं०, उच्चैस्तरं महत्तरं, चेतसि चिन्तयन् फरङ्गीद्वारा सङ्घस्याऽपि प्रसादाभिमुख्यं भवतु इति ध्यायन् ॥ ९ ॥ पुनः, यदिति यतो हेतोः, अत्र बन्दिरे, सुकृतश्रियो धर्मधनस्य, लाभोऽस्माकम्, अन्येषां लोकानां च बोधिप्राप्तिरूपो लाभो भावीति, आ सुधर्मस्वामिनोऽद्य यावत् कस्याप्याचार्यस्याऽत्रागमनाद्यभावादिति, इति प्रीतमना इति व्यावर्णितहेतुत्रयेण फरङ्गीविज्ञप्तिसङ्घाग्रह-

लोकानुग्रहलक्षणकारणत्रयेण प्रीतचेताः, सूरिः श्रीविजयसेन-सूरिर्द्वीपबन्दिरमभ्यागादागतः ॥ इति युग्मव्याख्या ॥ १० ॥

ततः फरङ्गीप्रभुणा प्रहितं मचुआह्वयम् ।
वाहनं गुरुरारोहद् विमानं मघवानिव ॥११॥

ततो गुर्वागमात् तुष्टेन फरङ्गीप्रभुणा द्वीपाधिपतिना, प्रहितं, पुनः, मचुआनामकं धनिकस्यैवोपवेशनार्हं, वाहनं प्रवहणं, गुरुः आरोहत् आरूढ इति, मघवान् इन्द्र इव, विमानमर्थात् पालकमिति यावत् ॥ ११ ॥

तेनोत्तीर्याऽवारपारं सूरिर्द्वीपं समाविशत् ।
फरङ्गीप्रमुखा लोकाः सर्वेऽप्यभ्यागमन् मुदा ॥ १२ ॥

तेन फरङ्गीस्वामिप्रेषितेन, विशिष्टसुखासनस्थानीयेन स्फारशृङ्गारचित्रादिरचनारमणीयेन मचुआख्यवाहनेन, अवारपारं पारावारम्, उत्तीर्य सूरिर्द्वीपं बन्दिरं, समाविशत् प्रविवेश, फरङ्गीप्रमुखास्तत्रत्याः सर्वेऽपि लोका अभ्यागमन् संमुखमागता इति ॥ १२ ॥

सङ्घश्चमत्कृतोऽत्युच्चैश्चक्रे तत्र तमुत्सवम् ।
यद्वर्णनं विधातुं स्याच्चतुरश्चतुराननः ॥ १३ ॥

तत्रत्यः सङ्घः अत्युच्चैः चमत्कृतः यथाऽहो ! अस्मदीयो भाग्योदयः, अहो ! गुरूणामनार्यैरपि माननीयो महोदय इति चमत्कारमाप्तः सन् , तत्र बन्दिरे तमुत्सवं चक्रे, यद्वर्णनं विधातुं कर्तुं, चतुराननश्चतुर्मुखो ब्रह्मेति यावत्, चतुरो दक्षः स्यान्नापरः कोऽपीति तात्पर्यम् ॥ १३ ॥

धन्यम्मन्यैः राजमान्यैर्वदान्यैरास्तिकोत्तमैः ।
पूजितः श्रीतपानाथस्तीर्थनाथ इवाऽमरैः ॥ १४ ॥

धन्यम्मन्यैः आत्मानं कृतार्थं मन्यमानैः, पुनः, राजमान्यैः अमात्यादिभिः, पुनः, वदान्यैर्दानशीलैः, आस्तिकोत्तमैः श्राद्धमुख्यैः, अमरैस्तीर्थनाथस्तीर्थङ्कर इव, श्रीतपानाथः सूरिः, पूजितः स्वर्णरूप्यनाणककुसुमाभरणादिभिरिति शेषः ॥१४॥

पपौ पीयूषगण्डूषदेशीयां गुरुदेशनाम् ।
द्वीपवास्यखिलो लोकश्चकोर इव चन्द्रिकाम् ॥१५॥

गुरुदेशनां गुरोर्व्याख्यां, किं०, पीयूषगण्डूषदेशीयां सुधाचुलुकतुल्यां, चन्द्रिकां ज्योत्स्नां, चकोर इव, द्वीपवासी लोकः पपौ पिबति स्माऽत्यादरेण श्रवणगोचरीकुरुते स्मेति भावः ॥१५॥

ऐश्वर्यगर्जितव्याप्तरोदसीकन्दरोदरम् ।
गुरुमेघं समुद्वीक्ष्य सङ्घकेकी जहर्ष सः ॥ १६ ॥

ऐश्वर्यं प्रभुत्वं तदेव गर्जितं गर्जारवस्तेन व्याप्तं रोदसीकन्दरोदरं द्यावाभूमीगुहाविवरं येन तं, गुरुमेघं सूरीश्वरजलधरं, समुद्वीक्ष्य दृष्ट्वा, स सङ्घकेकी जहर्ष हर्षितोऽभूत् ॥ १६ ॥

रत्नैरेव गुरोस्तत्र वध्वो वर्धापनं व्यधुः ।
रत्नाकरोऽभ्यर्णवर्ती यत्र किं तत्र चित्रकृत् ? ॥ १७ ॥

तत्र बन्दिरे गुरोः, वध्वः स्त्रियः, रत्नैरेव वर्धापनं व्यधुरित्यन्वयः; यत्र रत्नाकरः समुद्रः, अभ्यर्णवर्ती समीपस्थः स्यात्, तत्र किं चित्रकृत् किमाश्चर्यकारि ?, इति ॥ १७॥

धर्मगोष्ठीक्षणे चाथ फरङ्गीप्रभुपर्षदि ।
सार्वज्ञं शासनं सूरिः सत्यं स्थापयति स्म सः ॥१८॥

अथैकदा फरङ्गीप्रभुपर्षदि तद्देहेषु तदीयसभायां, धर्मगोष्ठीक्षणे क्रियमाणे सति, सूरिः सार्वज्ञं शासनं जैनं मतं, सत्यं स्थापयति स्म, नाऽन्यत् किमपि सत्यमिति ॥ १८ ॥

गुरोर्माहात्म्यतस्तुष्टाः फरङ्गीप्रमुखा जनाः ।
अनार्या अपि यत्, काऽपि चातुरी महतामहो !॥१९॥

अहो ! इत्याश्चर्ये, फरङ्गीप्रमुखा अनार्या अपि जनाः,गुरोर्माहात्म्यतस्तदा तुष्टाः, यतः कारणात् ,काऽपि महतां पुरुषाणां चातुरी लोकातिशायिनी ॥ १९ ॥

एवं फरङ्गीद्रङ्गेऽपि कृत्वा धर्मप्रभावनाम् ।
गुरुर्वृतो नागरौघफरङ्गीन्द्रैस्ततोऽचलत् ॥ २० ॥

फरङ्गीद्रङ्गे द्वीपबन्दिरे, बहुदिनानि स्थित्वा एवं धर्मप्रभावनां कृत्वा च, गुरुः, किं०, नागरौघैर्नगरलोकनिकरैः फरङ्गीन्द्रैश्च वृतो वेष्टितोऽनुगम्यमान इति, ततो बन्दिरादचलत् ॥२०॥

प्रार्थितः पुण्यपूर्णेन सङ्घेन द्वीपवासिना ।
चतुर्मासं चकाराऽसौ तद् देवकुलपाटके ॥ २१ ॥

पुण्यपूर्णेन महापुण्यवता, द्वीपवासिना सङ्घेन प्रार्थितो विज्ञप्तः, असौ गुरुः, तच्चतुर्मासकं वर्षास्थितिरूपं, देवकुलपाटके चकाराऽकरोत् ॥ २१ ॥

पारणेऽपि चतुर्मास्या आकारणकृते गुरोः ।
नवीननगराधीशाधिकारिश्राद्धसिन्धुरैः ॥ २२ ॥
प्रेषिता भावितस्वान्ताः श्रावकाः सुविवेकिनः ।
तैरागत्य स विज्ञप्तो भृशं सूरिरथाचलत् ॥ २३ ॥

अनयोर्व्याख्या–तत्र चतुर्मास्याः पारणके जाते, गुरोः आकारणस्य आह्वानस्य कृते विज्ञप्तिकरणाय, नवीननगराधीशस्य येऽधिकारिणोऽमात्याः श्राद्धसिन्धुराः श्रावकमुख्यास्तैः ॥ २२ ॥ नवानगरनृपतिराउलजामजीप्रधानैः श्रावकैः प्रेषिताः श्रावकाः,किं०, भावितस्वान्ता धर्मवासनावासितात्मानः, पुनः,

सुविवेकिन इति प्रतीतम्, तैः श्राद्धैरागत्य देवकुलपाटके समेत्य, भृशं विज्ञप्तः सूरिः अथाऽचलत् ॥ इति युग्मव्याख्या ॥ २३ ॥

ततः सुराष्ट्राविषयं पावयन् पदपांसुभिः ।
हलारदेशसीमस्थं प्रभुर्भानुवटं ययौ ॥ २४ ॥

ततः पदपांसुभिश्चरणरेणुभिः, सुराष्ट्राविषयं सौराष्ट्रदेशं, पावयन् प्रभुर्गुरुः, भानुवटं भाणवडनामग्रामं, हलारदेशस्य नवानगरसत्कदेशस्य, सीमस्थं सन्धिवर्तिनं, ययौ गत इति ॥२४॥

तत्र साडम्बरं प्राप्तैः श्रेष्ठिमुख्यैः सविस्तरम् ।
सुवर्णटङ्काद्यैश्चाऽर्चना चक्रे गणेशितुः ॥ २५ ॥

तत्र भाणवडग्रामे, साडम्बरं प्राप्तैः संमुखागतैः, नवानगराधीशाधिकारिश्रेष्ठिमुख्यैः सर्वश्राद्धैः, गणेशितुर्गच्छनायकस्य, सुवर्णटङ्कप्रमुखैर्नाणकैः, अर्चना पूजा, चक्रे कृता ॥ २५ ॥

वृतस्तैश्च तपाधीशो नवं नगरमध्यगात् ।
अहंपूर्विकयाऽऽगच्छन्मार्गलोकाऽभिवन्दितः ॥ २६ ॥

च पुनः, तैः श्राद्धैः कैश्चिदन्यैरपि राजवर्गीयैः, वृतो वेष्टितः, तपाधीशो गुरुः, नवं नगरं नाम द्रङ्गम्, अध्यगात्; गुरुः किं०, अहंपूर्विकया अहमहमिकया, आगच्छन्तो ये मार्गे लोकाः पौरास्तैरभिवन्दितो नतः स्तुतश्च, वदुङ्धातोः स्तुत्यभिवादनार्थत्वात् ॥ २६ ॥

प्रवेशस्योत्सवस्तत्राऽभूतपूर्वोऽद्भुतैकभूः ।
जज्ञे विज्ञकविश्रेणीवचनानामगोचरः ॥ २७ ॥

तत्र नवीननगरे, गुरोः प्रवेशोत्सवः, किं०, अभूतपूर्व इति कस्यापि तपागच्छपतेस्तत्राऽनागमनात्, अत एव अद्भुतैकभूराश्चर्यस्यैकहेतुरिति, पुनः, विज्ञानां पण्डितानां कवीनां च वर्णन-

कलावतां या श्रेणी तस्या वचनानामगोचरोऽविषय इति ॥२७॥

नैकाश्वाद्यंशुकादीनां दानानि दद्रिरेतराम् ।
सङ्घलोकेन तुष्टेन यथेष्टं याचके जने ॥ २८ ॥

तत्रत्यसङ्घलोकेन याचके जने मार्गणादौ, यथेष्टं यथारुचि, नैकाश्वाद्यंशुकादीनामनेकतुरङ्गमसिचयादीनाम्, आदिशब्दात् करभकनकमुद्रिकाकर्णाभरणजामद्रुद्रादीनां चापि दानानि दद्रिरेतरां भूरितराणि दत्तानीत्यर्थः ॥ २८ ॥

श्रीपूज्यपादपीयूषपादमुद्वीक्ष्य तत्क्षणात् ।
उल्लासं सरसः सङ्घपारावारः प्रपेदिवान् ॥ २९ ॥

श्रीपूज्यपादपीयूषपादं गुरुचन्द्रमसम्, उद्वीक्ष्य दृष्ट्वा, स सङ्घ एव पारावारः समुद्रः, किं०, सरसः सहर्षः, पक्षे सजलः, उल्लासं प्रपेदिवान् प्राप्त इति ॥ २९ ॥

अपूजि सूरिराजोऽथ श्राद्धैः स्वर्णादिनाणकैः ।
तच्चतुर्मासकं तत्र निर्विघ्नं निरमापयत् ॥ ३० ॥

अथ स सूरिराजस्तत्रत्यैः श्राद्धैः स्वर्णादिनाणकैः अपूजि पूजितः, च पुनः,तत्र नवीननगरे, तच्चतुर्मासकं निरमापयद् निष्पादयामासेति ॥ ३० ॥

जामनामा पुरे तत्र भाग्यवान् भूमिवल्लभः ।
दर्शनाय मुनीशस्य सोऽन्यदाऽऽगाद् मुदाऽऽस्पदम्॥३१॥

तत्र पुरे नवानगरे, जाम इति कुलरूढिजं नाम यस्य सः, यतएतद्वंशजाः सर्वेऽपि जामनामान उच्यन्ते तेन जामो नाम भूमिवल्लभो राजा सः, अन्यदा मुनीशस्य सूरेः, दर्शनाय मुदा हर्षेण, आस्पदं प्रतिश्रयम्, अथवा स राजा, किं०, मुदाऽऽस्पदं हर्षस्थानं सन्, आगात् ॥ ३१ ॥

इतश्च गूर्जरस्थानां श्रीअनूचानचक्रिणाम् ।
सर्वेषामपि सङ्घानामाग्रहेण महीयसा ॥ ३२ ॥
प्रतस्थे सुमुहूर्तेऽथ ततः श्रीमांस्तपाधिपः ।
क्रमेण विहरन्नुर्व्यां प्राप शङ्खेश्वरं पुरम् ॥ ३३ ॥

इतश्चेत्यस्मिन्नवसरे, गूर्जरत्रादेशवर्तिनां श्रीअनूचानचक्रिणां स्वपट्टधारकश्रीविजयदेवसूरीणाम्, अपेश्चकारार्थत्वात् पुनः, सर्वेषां सङ्घानां राजनगरपत्तनस्तम्भतीर्थराजधन्यपुरप्रमुखसमस्तनगरवास्तव्यश्रावकसमवायानां, महीयसा अतिमहताऽऽग्रहेणेति ॥३२॥ अथ चतुर्मासकपारणके, सुमुहूर्ते दिनशुद्ध्यादौ सति, ततो नवानगरात्, श्रीमान् तपाधिपस्तपागच्छराट्, क्रमेण उर्व्यां पृथिव्यां, विहरन् शङ्खेश्वरं पुरं महातीर्थभूतम्, प्राप ॥ इति युग्मव्याख्या ॥ ३३ ॥

विघ्नवल्लीवनीपार्श्वं पार्श्वं शङ्खेश्वराभिधम् ।
ननाम निखिलैः सङ्घलोकैः स परिवारितः ॥३४॥

स गुरुर्निखिलैः समस्तैः राधनपुरपत्तनराजनगरसत्कैः सङ्घलोकैः, परिवारितः सन्, शङ्खेश्वरं पार्श्वं, किं०, विघ्नवल्लीवनीषु अन्तरायलतावनेषु पार्श्वं पर्शुसमूहं तदुच्छेदकत्वात्, ननामेत्यनमत् ॥ ३४ ॥

अहम्मदावादपुरं प्रतस्थे प्रति गच्छराट् ।
तत्रत्यभूरिसङ्घस्याऽऽग्रहतो महतस्ततः ॥ ३५ ॥

ततः शङ्खेश्वरपुराद् गच्छराट् अहम्मदावादपुरं प्रति प्रतस्थे चलितः; तच्चलनहेतुमाह—तत्रत्यभूरिसङ्घस्य अहम्मदावादवासिमहासमुदायस्य, महत आग्रहतो महानिर्बन्धात् ॥ ३५ ॥

श्रीमद्विजयदेवाह्वसूरीन्द्रादिपरिच्छदः ।

आगाद् गुरुरथो राजनगरे श्रीगरीयसि ॥ ३६ ॥

अथो गुरुः, किं०, श्रीमान् यो विजयदेवाह्वः सूरीन्द्रः स्वपट्टभृत् तदादिः परिच्छदो यस्य सः, आदिशब्दाद्वाचकपण्डितादिग्रहः, राजनगरेऽहम्मदावादे, किं०, श्रीगरीयसि लक्ष्मीमहीयसि, आगात् प्राप्तवानिति ॥ ३६ ॥

समुज्ज्वलकलाशालिसूरिराजविलोकनात् ।
आसन्नुल्लासिनः सर्वे सागरा इव नागराः ॥ ३७ ॥

समुज्ज्वलाभिः कलाभिः शाली यः सूरिराजः सूरिचन्द्रस्तस्य विलोकनात्, नागरा नगरवासिलोकाः, सागरा इव उल्लासिनः आसन् जाता इति ॥ ३७ ॥

तत्रासीने चतुर्मासीं श्रीभट्टारकभास्करे ।
पद्मोल्लासा अजायन्त सदालिप्रीतिहेतवः ॥ ३८ ॥

श्रीभट्टारकभास्करे सूरीश्वरसूर्ये, तत्र राजनगरे, चतुर्मासीमासीने सति, पद्माया लक्ष्म्याः, पक्षे पद्मानां पङ्कजानामुल्लासाः पद्मोल्लासाः, द्वयेऽपि किं०, सदालीनां सज्जनश्रेणीनां, पक्षे सदा नित्यम्, अलीनां भ्रमराणां प्रीतिहेतवः, अजायन्त जाता इति ॥ ३८ ॥

इतश्च सङ्घमध्ये यो विरोधो द्वादशाऽऽब्दिकः ।
भङ्क्तुं शक्योऽभवत् केनाप्यधिपेनापि न क्वचित् ॥ ३९ ॥
स गुरोर्गुणसंभारभ्राजिनो वचसा क्षणात् ।
अभज्यततमां सामजन्मना भूमिजन्मवत् ॥ ४० ॥

इतः पुरा ज्ञातिवेधरूपो द्वादशाऽऽब्दिको द्वादशवर्षीयो विरोधः सङ्घमध्येऽभूत्, यः केनापि अधिपेनापि मीर्यांश्रीसमास्तिसंज्ञकोम्बरादिनाऽपि, भङ्क्तुं निवर्तयितुं, शक्यो नाभूद् न

भग्न इति ॥ ३९ ॥ गुरोः किं०, गुणसंभारभ्राजिनः गुणसमूहशालिनः, वचसा वाक्येन, स विरोधः, सामजन्मना हस्तिना, भूमिजन्मा तरुरिव, अभज्यततमां बम्भज्यते स्मेति ॥ इति युग्मव्याख्या ॥ ४० ॥

तत्र कृत्वा चतुर्मासीं निवासं धर्मकर्मणाम् ।
चकार सूरिराट्श्रेष्ठः प्रतिष्ठानां चतुष्टयम् ॥ ४१ ॥

धर्मकर्मणां सुकृतकृत्यानां निवासं चतुर्मासीं तत्र कृत्वा पारणके सूरिराट्श्रेष्ठो भट्टारकमुख्यः, प्रतिष्ठानां चतुष्टयं जिनबिम्बस्थापनाचतुष्कं; द्वयं तु माघे, द्वयं तु वैशाखे, चकार कृतवानिति ॥ ४१ ॥

माहेन्द्रा उत्सवा एते किंवा नन्दीश्वरोत्सवाः ? ।
वीक्ष्येति दक्षा व्याचख्युस्तत्प्रतिष्ठामहामहान् ॥४२॥

तत्प्रतिष्ठानां महामहान् महोत्सवान्, वीक्ष्य, दक्षाः पण्डिताः, इति व्याचख्युः इति कथयन्ति स्म; तदेव पूर्वार्धेनाह—एते प्रतिष्ठोत्सवाः किं माहेन्द्राः उत्सवाः इन्द्रोत्सवाः ?, किंवा नन्दीश्वरोत्सवाः नन्दीश्वरद्वीपे देवैर्निर्मीयमाणा अष्टाह्निकोत्सवाः ?; इदं विशेषणद्वयं तासां प्रतिष्ठानां सर्वातिशायित्वख्यापनपरमिति भावः ॥ ४२ ॥

अथ गुरुकृतसुकृतकृत्याद्युपसंहर्तुकामस्तद्गच्छवर्तिपरिकरादि च व्याख्यातुकामः प्राह—

इत्याद्यनेकसद्धर्मकर्मनिर्माणकार्मणम् ।
श्रीगुरोर्वचनं चारु रेजे चतुरचित्तहृत् ॥ ४३ ॥

इत्यादीनि उक्तपूर्वाणि अनेकानि यानि सद्धर्मकर्माणि दीक्षाप्रतिष्ठाप्रभृतीनि तेषां निर्माणे निष्पादने कार्मणं वशी-

करणं, श्रीगुरोर्वचनं, चारु मनोज्ञं, पुनः, चतुरचित्तहृद् निपुणचेतोहारि, रेजे शोभते स्मेति ॥ ४३ ॥

परिवारः प्रभोर्भूरिविभूतिभरभासुरः ।
अनल्पः कल्पशाखीव महामाहात्म्यभूरभूत् ॥ ४४ ॥

प्रभोः परिवारः स्वकीयगच्छवर्त्याचार्योपाध्यायपण्डितप्रभृतिसमवायरूपः, किं०, भूरिविभूतिभरेण ज्ञानविज्ञानादिसम्पत्समूहेन भासुरः, पुनः, अनल्पोऽतुच्छः, कल्पशाखीव सुरतरुरिव, महामाहात्म्यभूः बहुप्रभावभवनम्, अभूत् ॥ ४४ ॥

तत्रादौ गुरुपट्टधरं श्रीमदाचार्यसिन्धुरं श्लोकत्रयेण वर्णयति—

तथाह्यहार्यगाम्भीर्यशौर्यशौण्डीर्यवीर्यवान् ।
अभङ्गभाग्यसौभाग्यवैराग्यादिगुणार्णवः ॥ ४५ ॥
श्रीयौवराज्यसाम्राज्यप्राज्यर्द्धिधरणीधरः ।
विवेकालोकसुश्लोकलोककोकदिवाकरः ॥ ४६ ॥
राजते विजयश्रीभिर्भ्राजिष्णुर्भुवनाद्भुतः ।
श्रीमद्विजयदेवाह्वः सूरीन्द्रश्चन्द्रनिर्मलः ॥ ४७ ॥

तथाहीति पूर्वोक्तार्थसमर्थनपरं वचः, अहार्याणि यानि गाम्भीर्यशौर्यशौण्डीर्यवीर्याणि मनोवचःकायोद्भवा गुणास्तद्वान्, पुनः, अभङ्गा अखण्डा ये भाग्यसौभाग्यवैराग्यादिगुणास्तेषामर्णवः समुद्रः ॥ ४५ ॥ पुनः, श्रीयौवराज्यस्य युवराजभावस्य यत् साम्राज्यं तस्य प्राज्या पुष्कला ऋद्धिः सम्पत् सैव धरणी भूमिस्तत्र धरः पर्वतस्तस्या धारकत्वात्, पुनः, विवेकाऽऽलोका विवेकप्रकाशवन्तः, पुनः, सुश्लोकाः शोभनयशसः ये लोकास्त एव कोकास्तेषु दिवाकरः, तदानन्दहेतुत्वात् ॥ ४६ ॥ पुनः, विजयश्रीभिर्जयलक्ष्मीभिर्भ्राजिष्णुः

शोभनशीलः, अत एव भुवनाद्भुतो लोकचित्रकृत्, श्रीमान् विजयदेवसूरिरित्याचार्यो राजत इति, शेषं स्पष्टम् ॥ इति त्रयाणां व्याख्या ॥ ४७ ॥

गुरो राज्येऽप्युपाध्याया अष्टावुत्कृष्टसम्पदः ।
क्षमाभारधरा धीरा राजन्ते दिग्गजा इव ॥ ४८ ॥

गुरोः श्रीविजयसेनसूरेः, राज्ये उपाध्याया अपि अष्टौ राजन्ते, किं०, उत्कृष्टा ज्ञानादिविषयिणी सम्पद् येषां ते । इवोत्प्रेक्ष्यते—ऐरावतपुण्डरीकवामनकुमुदाञ्जनपुष्पदन्तसार्वभौमसुप्रतीकाख्या अष्टौ दिग्गजाः, द्वयेऽपि किं०, क्षमायाः क्षान्तेः पृथिव्याश्च भारं धरन्तीति क्षमाभारधराः, अत एव पुनर्धीरा धैर्यशालिन इत्यर्थः ॥ ४८ ॥

विशिष्टज्ञानविज्ञानतपोमाहात्म्यमण्डिताः ।
पण्डिताः सन्ति शतशः स्थापिताः सूरिशेखरैः ॥४९॥

विशिष्टज्ञानविज्ञानतपसां यद् महत्त्वं तेन मण्डिताः, सूरिशेखरैर्गुरुभिः, स्थापिताः शतशः पण्डिताः सन्तीति सामान्यतो निर्देशः ॥ ४९ ॥

अथ श्लोकचतुष्केण तानेव विशिनष्टि—

लक्षणार्णवपारीणमतिवैभवधारिणः ।
केचित्केचित्तर्कशास्त्रवाग्वाक्पत्यनुकारिणः ॥५०॥
केचित् पुनर्नव्यकाव्यकलाकौशलहारिणः ।
केचिच्च कौतुकाकीर्णाख्यानव्याख्यानकारिणः ॥५१॥
केचित् सकलसूत्रार्थप्रश्नप्रतिवचःप्रदाः ।
अगण्यगणितज्योतिःशास्त्रविज्ञाश्च केचन ॥५२॥
केचित् साहित्यशास्त्राब्धिमथने मन्दराद्रयः ।

केचिच्च रुचिराचारविचारचतुराशयाः ॥ ५३ ॥

केचित् पण्डिताः, किं०, लक्षणार्णवस्य व्याकरणसमुद्रस्य सिद्धहेमादेः पारीणं पारगामि यन्मतिवैभवं तद्धरन्तीत्येवंशीला- इति, अनेन वैयाकरणसूचनं, पुनः, केचित् पण्डिताः,तर्कशास्त्राणि जैनशैवभेदभिन्नानि यानि प्रमाणप्रकरणानि स्याद्वादरत्नाकर- तत्त्वचिन्तामणिप्रमुखाणि तेषां या वाग् वाणी तत्र वाक्पत्यनु- कारिणो बृहस्पतितुल्या इति तार्किकसूचनम् ॥ ५० ॥ पुनः केचित् पण्डिताः, नव्यं स्तवनार्हम्, अथवा नव्यं तात्का- लिकं यत्काव्यकलाकौशलं कवित्वशक्तिनैपुणं तेन हारिणो मनोहरा इति कवित्सूचनं, च पुनः, केचित् पण्डिताः, कौतु- काकीर्णानि आख्यानानि यानि कौतुककथानकानि पाण्डव- विक्रमार्कत्रिषष्टीयचरितप्रभृतीनि तेषां यद् व्याख्यानं सभासु क्षणकरणं तत्कुर्वन्तीत्येवंशीला इति व्याख्यानिवक्तृसूचनम् ॥५१॥ पुनः, केचित् पण्डिताः, सकलानि यानि सूत्राणि गण- धरश्रुतकेवलिप्रत्येकबुद्धादिमुनिवरविरचितानि तेषामर्थविषय- कप्रश्नप्रतिवचःप्रदाः पृष्टोत्तरप्रदायिन इति विशेषणमिदमङ्गो- पाङ्गादिसूत्रवृत्तिभाष्यादिनिपुणपिशुनम् , पुनः, केचित् पण्डिताः, अगण्यं गणनाऽतीतं यद्गणितं गणितशास्त्रं त्रिशतीलीलावत्यादि, पुनः, ज्योतिःशास्त्रं चारम्भसिद्धिसुधीशृङ्गारवार्त्तिकरत्नमाला- भुवनदीपकादि तत्र विज्ञा इति गणकमौहूर्तिकसूचनम् ॥ ५२ ॥ पुनः, केचित् पण्डिताः, साहित्यशास्त्राणि काव्यकला- मूलानि यानि काव्यकल्पलताकाव्यप्रकाशकाव्यानुशासनका- व्यत्रयीकाव्यपञ्चकचम्पूच्छन्दोऽनुशासनालिङ्गानुशासनादीनि या- नि कवित्वशास्त्राणि तद्रूपाब्धिमथने मन्दराद्रयो मेरुतुल्या इति; काव्यशास्त्रसमुद्रपारगामिन इति सूचितम्, च पुनः, केचित् पण्डिताः, रुचिरश्चारुर्य आचारः साधुसामाचारीश्रीओघनिर्यु- क्तिपिण्डनिर्युक्तिदशवैकालिकोत्तराध्ययनादिग्रन्थरूपः, तथा वि-

चारश्च जीवविचारनवतत्त्वतत्त्वार्थप्रवचनसारसंग्रहणिकर्मग्रन्था-दिग्रन्थरूपः, तत्र चतुराशया इतिः अनेन विविधजैनविचारवेत्तृसूचनम् ॥ ५३ ॥

इत्याद्युत्कर्षकलितैः सार्धकद्विशतीमितैः ।
विद्वद्भिर्भाति गच्छोऽयं रत्नौघैरिव रोहणः ॥ ५४ ॥

इत्यादयो ये व्यावर्णिता उत्कर्षा ज्ञानादयस्तत्कलितैः, पुनः, सार्धद्विशतीप्रमाणैः, कैश्चिच्छ्रीहीरविजयसूरिस्थापितैः, कैश्चिच्च श्रीगुरुहस्तस्थापितैः,विद्वद्भिः पण्डितैः,गीतार्थैरिति यावत्; अयं गच्छस्तपागणः, रत्नौघैः रोहणाचल इव भातीति ॥५४॥

श्रीमद्विजयसेनाह्वसूरिदृक्प्रथितोदयः ।
द्विसहस्रीमितः साधुसमुदायोऽस्ति संप्रति ॥ ५५ ॥

श्रीविजयसेनसूरिप्रसन्नदृशा प्रथित उदयो यस्येति सः, साधूनाम्, अर्थात् साध्वीसमेतानां द्विसहस्रीमितः समुदायः सांप्रतमस्तीति ॥ ५५ ॥

अनेन साधुसाध्वीनां समुदायेन सूरिराट् ।
अन्वितो विहरत्युर्व्यां स्वयूथेनेव यूथराट् ॥ ५६ ॥

सूरिराट् श्रीविजयसेनसूरिमुख्यः, अनेन उक्तप्रकारेण साधुगणेनान्वितो यूथेन गजसत्केन, यूथराडिव गजेन्द्र इव, उर्व्यां पृथ्व्यां, विहरतीति ॥ ५६ ॥

श्रीगुरोरुपदेशेन स्थाने स्थाने पुरे पुरे ।
ग्रामे ग्रामे विदधिरे श्रावकैः सुविवेकिभिः ॥ ५७ ॥
प्रासादा विशदा द्वेधा कलधौताचलश्रियः ।
नन्दीश्वरादिप्रातिमाप्रतिमाः प्रतिमाः पुनः ॥ ५८ ॥

गतार्थोऽयम् ॥ ५७ ॥ किं विदधिर इत्याह—प्रासादा विदधिरे कृता इत्यन्वयः, किं०, द्वेधा वर्णत उच्चत्वतश्च, कलधौताचलो रूप्याद्रिः सुमेरुश्च तद्वत् श्रीर्येषां ते पुनः, विशदा निर्मलाः, पुनः, नन्दीश्वरद्वीपस्थजिनप्रतिमानां प्रतिमास्तुल्याः, प्रतिमा विदधिरे ॥ युग्मव्याख्येयम् ॥ ५८ ॥

अथ गुरूपदेशाद् यत्र जीर्णोद्धारा जातास्तदाह—

क्रीडाऽऽश्रये जयश्रीणां श्रीमच्छत्रुञ्जये गिरौ ।
उत्तुङ्गशृङ्गे तारङ्गे श्रीविद्यानगरे पुनः ॥ ५९ ॥
पुरे राणपुरे प्रौढेऽप्यारासणपुरे पुनः ।
पत्तनादिषु नगरेष्वपि शङ्खेश्वरे पुरे ॥ ६० ॥
श्रीसूरीन्द्रोपदेशेन संनिवेशेन संपदाम् ।
जाता जगज्जनोद्धारा जीर्णोद्धारा अनेकशः ॥६१॥

जयश्रीणां क्रीडाऽऽश्रये केलीगृहे, श्रीशत्रुञ्जये, पुनः,तारङ्गे, किं०, उत्तुङ्गशृङ्गे उच्चशिखरे, पुनः, श्रीविद्यानगरे इलादुर्गाधीश्वरस्य वैषम्ये सति वसतिस्थानीये ॥ ५९ ॥ पुनः, राणपुरे पुरे धरणचतुर्मुखविहारभूषिते, अपि पुनः, आरासणपुरे श्रीविमलमन्त्रिकारितप्रासादेषु, पुनः, पत्तनादिषु नगरेषु श्रीपञ्चासरपार्श्वनाथश्रीनारङ्गपुरीयपार्श्वनाथादिप्रासादानां, पुनः, शङ्खेश्वरग्रामे च श्रीपार्श्वनाथस्य मूलतोऽपि नवीनशिखरबद्धप्रासादनिर्मापणम् ॥६०॥ संपदां संनिवेशेन स्थानेन श्रीसूरीन्द्रस्य उपदेशेन इत्यादयोऽनेकशो जीर्णोद्धाराः, किं०, जगज्जनानामुद्धारो येभ्यस्ते, जाता अभूवन् ॥ इति त्रिभिर्विशेषकम् ॥६१॥

अथ गुरोश्चरितमुपसंहरन् गुरुमूर्तिमेव वृत्तद्वयेन वर्णयति—

किं लक्ष्मीः पुरुषोत्तमप्रणयिनी किं पार्वती वामदृक्
किं ब्राह्मी कवितुष्टिकृत् किमु शची शश्वद् वृषोल्लासिनी ?।

किं वेयं रुचिरस्ति मित्रहृदयाह्लादप्रदानोद्यता
सौभाग्यैकमयीं विलोक्य विबुधैर्यन्मूर्तिमित्युच्यते ॥६२॥

यन्मूर्तिं, किं०, सौभाग्यैकमयीं केवलसौभाग्यशालिनीं, विलोक्य, विबुधैः पण्डितैः, इति पूर्वपदत्रयीवर्णितं यथा, इति उच्यते, इति क्रियाकारकसंपर्कः । तदेवाह—इयं किं लक्ष्मीः?, तत्र हेतुमाह—किं०, पुरुषोत्तमप्रणयिनी, मूर्तिपक्षे पुरुषोत्तमा नरोत्तमाः शाहिश्रीमदकब्बरप्रभृतयस्तेषां प्रणयिनी वल्लभा, पक्षे पुरुषोत्तमो नारायणस्तस्येति, पुनः, किं पार्वती ?, किं०, वामदृग् मनोज्ञनयना मनोज्ञदर्शना वा, पक्षे वामे महेश्वरे दृग् दृष्टिर्यस्याः सेति; पुनरियं किं ब्राह्मी ?, किं०, कवीनां पण्डितानां, तुष्टिकृत्, पक्षे कवेर्विधातुस्तत्पुत्रीत्वादिति, पुनरियं किं शची ?, किं०, शश्वत् सततं वृषस्य धर्मस्य उल्लासिनी, पक्षे वृषा शक्रस्तस्येति, वाऽथवा, इयं किं रुचिरस्ति ?, अस्तीति क्रिया सर्वत्र योज्यते, किं०, मित्राणां सुहृदां, हृदयाह्लादप्रदाने उद्यता उत्सुका, पक्षे मित्रस्य सूर्यस्य तत्कलत्रत्वादिति; शेषं सुगमम् ॥ ६२ ॥

मूर्तिर्यस्य गुरोर्निकामसुभगाऽस्त्यानन्दकन्दाङ्कुरः
किञ्चात्रैव मनोज्ञसङ्गतिरयं रम्यो गुणानां गणः ।
योगं रत्नसुवर्णयोरिव सृजन् धाताऽनयोर्दूषणं
स्वीयं रत्नविडम्बकोऽयमिति यद् विद्मः पिधत्ते स्म तत्।६३।

यस्य गुरोर्मूर्तिर्निकाममत्यर्थं सुभगा अस्तीत्यन्वयः । अत एव किं०, आनन्दकन्दाङ्कुरः सर्वेषामप्याह्लादहेतुत्वात्, किञ्च, अत्रैव मूर्तौ शरीरे, अयं गुणानां ज्ञानादीनां व्यावर्णितस्वरूपाणां, गणो रम्यो रुचिरोऽस्तीति, किं०, मनोज्ञसङ्गतिस्तुल्यसङ्गम इति, अतः कारणात्, अनयोर्गुरुमूर्तिगुणगणयोः,

रत्नसुवर्णयोरिव योगं संबन्धमैकाधिकरण्यलक्षणं, सृजन् कुर्वन्, धाता वेधाः, रत्नविडम्बकः "रत्नदोषी विधाता" इति स्वीयं दूषणं यद् वर्तते,वयमिति विद्मः किं तत् पिधत्ते स्माऽऽच्छादयति स्म?, इति स्वं कलङ्कं किं निराकरोत्?, इति तत्त्वम् ॥ ६३ ॥

अथ गुरोः सर्ववर्णनपूर्वकमाशीर्वादस्तथाहि–

पुरे पुरे भूरिमहेभ्यसभ्य-
वदान्यराजन्यकराजमान्यैः ।
जनैः कृताऽतुच्छमहोत्सवौघै-
र्धन्यैरजन्यैरभिगम्यमानः ॥ ६४ ॥

पुरे पुरे तुम्बुरुकिंनरस्वरै-
र्गान्धर्ववर्गैः कृतगीतगानः ।
पुरे पुरे पौरमहीमहेन्द्रैः
प्रदीयमानाऽनभिमानमानः ॥ ६५ ॥

संस्तूयमानोऽनघसङ्घलोकै-
रिवाऽब्जिनीशोऽखिलवालिखिल्यैः ।
अभ्यर्चितः काञ्चनरूप्यपुष्प-
रूपैः सुरूपैः सुरवृक्षवच्च ॥ ६६ ॥

श्रीभारतं खण्डमखण्डमेतत्
प्रोल्लासयन् पङ्कजिनीशितेव ।
तमो हरन् विश्वगतं समन्ता-
च्चिरं जयत्येष गुरुर्गरीयान् ॥ ६७ ॥

गुरुः किं०, पुरे पुरे नगरे नगरे, स्थाने स्थाने वा; जनैः, किं०, भूरिमहेभ्या बहुधनाढ्याः,पुनः, सभ्याः सभास्तारः, पुनः,

वदान्या दानशीलाः, पुनः, राजन्यका राजसमूहा राजवर्गीणा वा, पुनः, राजमान्या अमात्यश्रेष्ठ्यादयस्तैः, किं०, कृता अतुच्छा महोत्सवौघा यैस्तैः, अत एव धन्यैः पुण्ययुतैः, पुनः, अजन्यैः अकलहैः, अभिगम्यमानः सेव्यमान इति ॥ ६४ ॥
पुनः, पुरे पुरे गान्धर्ववर्गैर्गायनगणैः, किं०, तुम्बुरुकिन्नरौ देवगायनोत्कृष्टौ तयोरिव स्वरो येषां तैः, कृतं गीतगानं यस्य सः, पुनः, पुरे पुरे पौरैर्नागरैर्महीमहेन्द्रैश्च राजभिः, प्रदीयमानमनभिमानं निरहङ्कृति मानं पूजा यस्य सः ॥ ६५ ॥
पुनः, वालिखिल्यैः सूर्यबन्दिविशेषैः, अब्जिनीशः सूर्य इव, अनघसङ्ख्लोकैः संस्तूयमानः, च पुनः, गुरुः किं०, सुरवृक्षवत् काञ्चनरूप्याणां यानि पुष्पाणि रूपाणि च नाणकानि तैः, काञ्चनरूप्यपुष्परूपैः, किं०, सुरूपैः रम्यैः, अभ्यर्चितः पूजित इति॥६६॥
पुनः, श्रीभारतं खण्डं भरतार्धम्, अखण्डं यथा स्यात् तथा, पङ्कजिनीशितेव सूर्य इव, प्रोल्लासयन्, पुनः, विश्वगतं जगद्वर्ति तमो ध्वान्तं पापं च, समन्तात् सर्वतः, हरन्, एष गुरुः श्रीविजयसेनसूरिः, चिरं जयतीति । अत्र वर्तमानार्थविभक्तेः प्रयोगाद् गुरौ समीपवर्तिनि सत्येष ग्रन्थः पूर्णीकृत इति सूचितम् ॥ चतुर्णां व्याख्या ॥ ६७ ॥

अथाऽस्य काव्यस्याऽऽशीर्वादावसरः–

श्रीहीरहीरविजयाभिधसूरिसिंह-
श्रीपट्टभृद्विजयसेनमहामुनीन्दोः ।
सौभाग्यपद्धतिरियं मुदितं करोतु
चेतः सतां शशिकलेव चकोरकाणाम् ॥६८॥

श्रियां गच्छैश्वर्यरूपलक्ष्म्यां हीरो मणिरिव श्रीहीरो यो हीरविजयाभिधः सूरिसिंहस्तस्य यः श्रिया युक्तः पट्टभृत् श्रीपट्टधारी विजयसेनो नाम्ना महामुनिषु इन्दुरिव यस्तस्य श्री-

हीरहीरविजयाभिधसूरिसिंहश्रीपट्टभृद्विजयसेनमहामुनीन्दोः, इयं विजयप्रशस्तिनाम्नी सौभाग्यमयी शास्त्रपद्धतिः, चकोरकाणां शशिकलेव, सतां पण्डितानां सज्जनानां वा, चेतो मुदितं हर्षितं करोत्वित्याशीः ॥ ६८ ॥

पुनरप्याशिषं दिशति–

श्रीसूरिराड्विजयसेनमुनीन्द्रचन्द्र-
माहात्म्यवर्णनविधाननिधानभूमिः ।
नानामनोज्ञतरतुङ्गरसाभिरामा
भूयादियं विजयिनी विजयप्रशस्तिः ॥६९॥

श्रिया युक्तो यः सूरिराड् विजयसेनमुनीन्द्रचन्द्रस्तस्य यन्माहात्म्यवर्णनविधानं तदेव निधानं तस्य भूमिरिव भूमिः, इयं विजयप्रशस्तिः, कीदृशी , नानाप्रकाराः पुनर्मनोज्ञतरा रम्यतमाः, पुनः, तुङ्गा महान्तो ये रसाः, ग्रन्थपक्षे शृङ्गारादयः, भूमिपक्षे रसा मधुरादयः, तैः अभिरामा चार्वी नानामनोज्ञतरतुङ्गरसाऽभिरामा, विजयिनी विजयवती, भूयात् सर्वोत्कर्षेण वर्ततामिति॥६९॥

अथ विशेषादाशीर्वादमाह–

यावद् व्योमपथाध्वगौ विचरतः श्रीपुष्पदन्ताविमौ
यावद् वारिधिरन्तरीपकमलां धत्ते धरित्र्याः पुनः ।
यावत् स्वर्गसदां गिरिश्च भुवनाम्भोजे भवेत् कर्णिका
तावत् काव्यमिदं सदा विजयतां कुर्वत् सतां मङ्गलम् ।७०।

यावत्कालम् , इमौ पुष्पदन्तौ सूर्याचन्द्रमसौ, किं०,व्योमपथाध्वगौ नभःपथपथिकौ, विचरतो भ्राम्यत इति, पुनः, यावद् वारिधिः समुद्रः, धरित्र्याः पृथ्व्याः, अन्तरीपकमलां निवसनश्रियं, धत्ते धरति, च पुनः, यावत् स्वर्गसदां देवानां, गिरिरर्थाद्

मेरुः, भुवनाम्भोजे जगत्कमले, कर्णिका भवेत्, पद्मनालतामालम्बते, तावत्कालम्, इदं विजयप्रशस्तिनामकं, काव्यं सतां पुंसां, मङ्गलं कल्याणं, कुर्वत्, सदा नित्यं, विजयतां शाश्वतं विजयवद् भूयादिति भावार्थः ॥ ७० ॥

• • • • • • • • • • • • • • • • • • • • • • • • • • • • • • •

इतीति समस्तं पाठसिद्धम् ।

इति सुविहितसभासार्वभौमसमानसकलपण्डितमण्डलीमौलिमौलीयमानपण्डितश्रीकमलविजयगणिशिष्यमुख्यपण्डितपुण्डरीकमुख्यपण्डितश्रीविद्याविजयगणिविनेयवाचकश्रीगुणविजयगणिविरचितायां सुखावबोधिकायां श्रीविजयप्रदीपिकाभिधानधारिकायां श्रीविजयप्रशस्तिमहाकाव्यटीकायामेकविंशः सर्गोऽर्थतः समर्थितः ॥

तत्समाप्तौ च समाप्ता श्रीविजयप्रशस्तिमहाकाव्यवृत्तिः ।



# प्रशस्तिः ।



प्रशस्तिरूपो ग्रन्थोऽयं तत्प्रशस्तिरिहाऽस्तु का ? ।
तथापि निजगुर्वादिस्वरूपं तु निरूप्यते ॥ १ ॥
विबुधानन्दने श्रीमद्वीरशासननन्दने ।
शोभते श्रीतपागच्छः सुरगच्छ इवोदयी ॥ २ ॥
राकेन्दुरिव यो गच्छः स्वच्छस्तन्नास्ति कौतुकम् ।
ज्ञानक्रियामये पक्षद्वये पूर्णस्तदद्भुतम् ॥ ३ ॥
तत्तपगणगगनाङ्गणतरुणतरणिकरणितेजसाऽऽकीर्णाः ।
श्रीहीरविजयसूरिप्रभवोऽभूवन् भुवनविदिताः ॥ ४ ॥
तत्पट्टपद्मिनीपद्मबन्धवः श्रुतसिन्धवः ।
श्रीमद्विजयसेनाख्याः सूरयो गुणभूरयः ॥ ५ ॥
तत्पट्टदुग्धजलनिधिचन्द्रः श्रीविजयदेवसूरीन्द्रः ।
गौतमतः प्रति संप्रति जयति भरतभूषणं भगवान् ॥ ६ ॥
ध्यानस्य चाऽपि धान्यस्याप्यन्तरे न महत्यपि ।
सादरः सोऽग्रहीत् पूर्वमपरं तु निरादरः ॥ ७ ॥
अहो ! चित्रमहो ! चित्रमहो ! माहात्म्यमुत्तमम् ।
अनार्येष्वपि धुर्येण फरङ्गीपातशाहिना ॥ ८ ॥
यस्मिन् सूरौ चतुर्मासीमासीने द्वीपबन्दिरे ।
सदा व्याख्याविधानाऽऽज्ञा ददे साऽद्यापि वर्तते ॥ ९ ॥

( युग्मम् )

यैः प्रतिष्ठाश्चतस्रश्च कृताः पत्तनपत्तने ।
तत्र राजतमुद्राणामर्धं लक्षं व्ययीकृतम् ॥ १० ॥
स्तम्भतीर्थे महातीर्थे प्रतिष्ठानां त्रयं तथा ।
रूप्यका व्ययितास्तत्र सहस्राणि चतुर्दश ॥ ११ ॥

पुनर्यै राजनगरे प्रतिष्ठाद्वयमद्वयम् ।
विदधे व्ययितं तत्र श्राद्धै रूप्यायुतं तथा ॥ १२ ॥
नटीपद्रे चटद्रङ्गे प्रतिष्ठैका प्रतिष्ठिता ।
श्रीबृहन्नगरे वीरप्रतिष्ठा विश्वविश्रुता ॥ १३ ॥
इयद्दराख्यनगरे स्वावतारेण सुन्दरे ।
प्रतिष्ठात्रितयं चक्रे येन सूरिषु चक्रिणा ॥ १४ ॥
जीर्णे श्रीमद्युगादीशे यवनैर्व्यङ्गिते सति ।
तत्पदे स्थापितो येन नूतनः प्रथमप्रभुः ॥ १५ ॥
तथा यैः साबलीस्थाने प्रतिष्ठाद्वितयं कृतम् ।
पुनरारासणस्थाने स्थापिता मूलनायकाः ॥ १६ ॥
येन जावालपुर्यां च काञ्चनाऽचलमौलिगे ।
विहारे स्थापितो वीरो वीरहीरानुकारिणा ॥ १७ ॥
प्रतिष्ठाद्वैतमद्वैतं श्रीमन्मालवमण्डले ।
उज्जयिन्यां महापुर्यां पुरे रामपुरेऽपि च ॥ १८ ॥
दक्षिणस्यां च कनडीबीजापुरपुरे तथा ।
प्रतीच्यां च कच्छदेशे प्रतिष्ठा येन निर्ममे ॥ १९ ॥
प्रतिष्ठे द्वे चोत्तरादिङ्मण्डने मेडतापुरे ।
इत्याद्यनेकस्थानेषु प्रतिष्ठा यैर्विनिर्मिताः ॥ २० ॥
श्रीमण्डपे मण्डपाद्रौ दृष्ट्वा यद्रूपमद्भुतम् ।
श्रीअकब्बरभूशक्रसूनुः शाहिः सलेमराट् ॥ २१ ॥
तपागच्छश्रावकेन्द्रचन्द्रपालादिसाक्षिकम् ।
महातपाजिहाङ्गीरीबिरुदं दत्तवान् मुदा ॥ २२ ॥
( युग्मम् )

विक्रमार्कमहीभर्तुर्विधुसिद्धिकलामिते ।
वर्षे हर्षेण सर्वर्षिसुरर्षभसमश्रिया ॥ २३ ॥
येन श्रीमदिलादुर्गे षष्ठ्यां मासि च माधवे ।
पवित्रे पुष्यनक्षत्रे दिने कुमुदिनीपतेः ॥ २४ ॥

कनकविजयाभिधानः श्रीवाचकमुख्यमण्डलीसिंहः ।
संस्थापितो निजपदे सूरिर्नाम्ना विजयसिंहः ॥ २५ ॥
( त्रिभिर्विशेषकम् )

बालमरालेन यथा राजमरालो बिभर्ति भुवि शोभाम् ।
श्रीविजयसिंहगुरुणा तथा विजयदेवसूरीशः ॥ २६ ॥
श्रीगौतमगणधरवद् विजयात् सिंहाभिधानसूरिवरः ।
श्रीवीरस्येव पुरो विराजते विजयदेवगुरोः ॥ २७ ॥
उत्तराध्ययनानीव तुर्योपाङ्गपदानि वा ।
षट्त्रिंशद् यत्र राजन्ते गुणास्तपगणाधिपे ॥ २८ ॥
श्रीविजयदेवसूरेस्तस्य श्रीविजयसिंहसूरेश्च ।
राज्ये प्राज्ये विजयिनि वारिनिधाविव सदाऽस्ताघे ॥२९॥

इतश्च—

पूर्वं तपागणेऽभूवन् मुनिसुन्दरसूरयः ।
तेषां राज्ये विरेजुः श्रीलक्ष्मीभद्राभिधा बुधाः ॥३०॥
रत्नशेखरसूरीशरचिता याऽर्थदीपिका ।
साऽपि संशोधिता यैः श्रीलक्ष्मीभद्रविशारदैः ॥ ३१ ॥
यैर्दीक्षिताश्च षट्त्रिंशद् विनेयास्तेषु तात्त्विकाः ।
तत्त्वप्रकाशिकाटीकापाठिनोऽष्टादशाऽभवन् ॥ ३२ ॥
लक्ष्मीभद्रीयशाखायां शाखायामिव शाखिनः ।
नानाशिष्यफलश्रेणीपेशलायामिलातले ॥ ३३ ॥
श्रीहेमविमलसूरेर्वारेऽभूवन् मनीषिशुभविमलाः ।
गङ्गातरङ्गविमला मनसा वचसा च वपुषा च ॥ ३४ ॥
तत्पादामरभूधरबन्धुरशोभाविधावमरतरवः ।
श्रीअमरविजयविबुधा विबुधाचार्या इव स्वधिया ॥ ३५ ॥
तत्क्रमणयमलकमलाऽऽकरकमलाकरणकमलकरकल्पाः ।
श्रीकमलविजयकोविदकमलाधीशा भुवि बभूवुः ॥ ३६ ॥
ज्ञानदर्शनचारित्रप्रगुणा यद्गुणा इह ।

अनुचक्रुः प्रमाणेन तारकाम्बरसागरान् ॥ ३७ ॥
गुणानां स्पर्धया येषां दोषा अपि दधुस्तुलाम् ।
मरीचिकादकाऽऽकाशकजवन्ध्यातनूरुहाम् ॥३८॥
हृद्यविद्यागुणगणैर्विनेयपटलीपटीः ।
पाणिवेम्ना वयति स्म येषां वाक्चातुरी तुरी ॥ ३९ ॥
अहो ! लाभोदयो यैस्तु दीक्षिता शिष्यसप्ततिः ।
तत्र पञ्चदशाऽभूवन् पण्डिता [1]द्वौ च वाचकौ ॥ ४० ॥
येषां गीतार्थसार्थेषु मुख्यताऽभूत् तपागणे ।
ग्रहेष्विव मरुन्मार्गे पद्मिनीप्रेयसामिव ॥४१॥
तेषां तनूर्द्वितीयेव तृतीयमिव लोचनम् ।
श्रीविद्याविजयो विद्वान् विद्यानां निधिभूरभूत् ॥ ४२ ॥
ज्ञानविज्ञानमुख्यास्तु यस्मिँल्लोकम्पृणा गुणाः ।
नासिकेव मुखे किन्तु विनयो दिद्युतेतराम् ॥ ४३ ॥
शिष्यभावेन तस्याहं दत्तस्तैः श्रीगुरूत्तमैः ।
निरक्षरोऽप्यथो तेन शिक्षया साक्षरीकृतः ॥ ४४ ॥
याभ्यां कुञ्जरतां नीतः पूतरप्रतिमोऽप्यहम् ।
ताभ्यां गुरुभ्यामनृणीभवेयं कथमाभवम् ?॥ ४५ ॥
मातापित्रोरिव तयोः प्रसादादेव केवलम् ।
आलपन् बालवत् किञ्चिद् न निन्द्योऽहं महत्तरैः ॥४६॥
अथो बृहद्गुरोः शिष्यो गुरोश्च गुरुसोदरः ।
श्रीहेमविजयोऽभिज्ञो जज्ञे कविषु कुञ्जरः ॥ ४७ ॥
श्रीहेमसुकवेस्तस्य हेमसूरेरिवाऽभवत् ।
वाग्लालित्यं तथा देवे गुरौ भक्तिश्च भूयसी ॥ ४८ ॥
यदीया कविताकान्ता न केषां कौतुकावहा ? ।
विनापि हि रजो यस्माद् यशःसुतमसूत या ॥ ४९ ॥
तेन श्रीविजयसेनसूरेः सर्वज्ञचित्तहृत् ।

---

1 उपाध्यायश्रीगुणविजयगणि–उपाध्यायकुशश्रीलसागरगणिनामानौ पाठकावभूताम् ।

स्वर्गकल्लोलिनीतुल्या कीर्तिकल्लोलिनी कृता ॥ ५० ॥
अन्येऽपि स्तुतित्रिदशतरङ्गिण्यादयो घनाः ।
रचयाञ्चक्रिरे ग्रन्थाः स्तोत्राणि शतशः पुनः ॥ ५१ ॥
चतुर्विंशत्यर्हतां च विजयस्तुतयः पुनः ।
बाल्येऽप्यबालधीगम्यं श्रीपार्श्वचरितं महत् ॥ ५२ ॥
सद्भावशतकं चापि कस्तूरीप्रकरः पुनः ।
सूक्तरत्नावलिश्चाप्यन्योक्तिमुक्तामहोदधिः ॥ ५३ ॥
चक्रे वक्रेतरो येन कथारत्नाकरः स्फुरन् ।
व्याख्यापीयूषलुब्धानां विबुधानां मनोहरन् ॥ ५४ ॥
इत्यादिग्रन्थविधौ सौधे कलसाधिरोपणसवर्णम् ।
विजयप्रशस्तिकाव्यं तेन कृतं विजयसेनगुरोः ॥ ५५ ॥
इतस्तस्य कवीन्द्रस्य दैवाद् दिवमुपेयुषः ।
पश्चाद् मयाऽथ विवृतं तत्काव्यं गुरुशासनात् ॥ ५६ ॥
एवं सत्यपि सन्ति च वक्तारश्चतुरचक्रिणः ।
केचित् सुगमा हैमी कृतिरिति तस्याष्टीका निरर्थैव ॥५७॥
तत् साधु साध्वभिदधे शृण्वन्तु प्रतिवचोऽहमपि विदधे ।
आलोके सति मङ्गलदीपो दिवसे न किं क्रियते ? ॥५८॥
अथवा दृक्तर्पणको दर्पणको रविपुरो न किं ध्रियते ? ।
काव्यस्याऽस्याऽपि तथा सुगमस्यापि हि भवतु विवृतिः ।५९।
इत्याकूतकृतधिया वाचकगुणविजयनामधेयेन[1] ।
विद्याप्रदानसुरतरुपितृव्यगुरुरक्तहृदयेन ॥ ६० ॥
श्रीविजयदेवसूरेः सांनिध्यादल्पबुद्धिबोधाय ।
बोधाय च केषाञ्चिद् विदुषां च मनोविनोदाय ॥६१॥
विजयप्रशस्तिकाव्यप्रकाशिका विजयदीपिका टीका ।
विदधे विक्रमनृपतेर्वर्षे वसुवसुनृप १६८८ प्रमिते ॥ ६२ ॥
(विशेषकम्)

---

1 सुधिया गुणविजयनामधेयेन ।

मूलमार्तण्डसंयोगे योगे सौभाग्यनाम्नि च ।
असौ सौभाग्यपञ्चम्यां पूर्णा सौभाग्यमश्नुताम् ॥ ६३ ॥
प्रारब्धेलादुर्गे बह्वी विदधे च योधपुरदुर्गे ।
श्रीमालेऽपि च कियती श्रीरोहिण्यां च पूर्णेयम् ॥ ६४ ॥
पूर्णा गीर्वाणगुरोस्तपागणगुरोः प्रसादतश्चैषा ।
जाताऽऽदेर्नवमस्याऽनवमस्य परस्य तच्चित्रम् ॥ ६५ ॥
सारासारविवेकप्रवेकमातिभिः समेतशमसौख्यैः ।
वैरङ्गिकसैद्धान्तिकतार्किकवैयाकरणमुख्यैः ॥ ६६ ॥
श्रीचारित्रविजयवरवाचकराजैरशोधि वृत्तिरियम् ।
यत्किञ्चिदिह विरुद्धं स्याच्छोध्यं सज्जनैस्तदपि ॥ ६७ ॥
यतः— (युग्मम्)
गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥ ६८ ॥
गीतरतेर्या भार्या चातुर्याहार्यवर्यमाधुर्या ।
कविरत्नगन्धमाता सा जयतु सरस्वतीमाता ॥ ६९ ॥
श्रेयःस्फूर्तेर्यस्य मूर्तेः पुरस्तादेषा टीका पूरिता दूरिताऽऽपत् ।
भूयात् सोऽयं सद्गुणश्रेणिसिद्ध्यै जीरापल्लीपार्श्वनाथः प्रसिद्ध्यै ७०
अस्य काव्यस्य टीकायां ससूत्रायामनुष्टुभाम् ।
सहस्रा दश संजाताः साधिकाः सर्वसंख्यया ॥ ७१ ॥

इति महोपाध्यायश्रीगुणविजयगणिविरचिता
श्रीविजयप्रशस्तिकाव्यवृत्तिप्रशस्तिः ।



## श्रीयशोविजयजैनग्रन्थमाला मां आजसुधी छपाइने प्रकाशित थएला ग्रन्थो नुं सूचीपत्र ।



| | | |
|---|---|---|
| १. | प्रमाणनयतत्त्वालोकालङ्कार—मूल श्रीवादिदेवसूरि | ०-८-० |
| २. | हैमलिङ्गानुशासन—श्रीहेमचन्द्रसूरि | ०-५-० |
| ३. | सिद्धहेमशब्दानुशासन—लघुवृत्तिसहित | ३-०-० |
| ४. | गुर्वावलि—मुनिसुन्दरसूरिरचित बीजी आवृत्ति | ०-४-० |
| ५. | रत्नाकरावतारिका—बे परिच्छेद टि. पं. सहित | १-०-० |
| ६. | सिद्धहेमशब्दानुशासन—मूलमात्र | ०-५-० |
| ७. | स्तोत्रसंग्रह—भाग-१ सीलीक मां नथी | ०-६-० |
| ८. | मुद्रितकुमुदचन्द्रप्रकरण—श्रावक यशश्चन्द्रकृत | ०-८-० |
| ९. | स्तोत्रसंग्रह—भाग-२ सीलीक मां नथी | १-०-० |
| १०. | क्रियारत्नसमुच्चय—श्रीगुणरत्नसूरिविरचित | २-०-० |
| ११. | श्रीसिद्धहेमशब्दानुशासनसूची अकारादि अनुक्रम | ०-४-० |
| १२. | कविकल्पद्रुम—श्रीहर्षकुलगणिरचित श्लोकबद्ध धातुपाठ | ०-४-० |
| १३. | सम्मतितर्काख्यप्रकरण—प्रथमखण्ड न्यायनोअलौकिक ग्रन्थ. श्रीसिद्धसेनदिवाकर विराचित | ३-०-० |
| १४. | श्रीजगद्गुरुकाव्य—श्रीहीरविजयसूरि नुं चरित्र | ०-४-० |
| १५. | श्रीशालिभद्रचरित्र—टिप्पणसाहित पत्राकार | १-४-० |
| १६. | श्रीपर्वकथासंग्रह—प्रथमभाग पत्राकार | ०-४-० |
| १७. | षड्दर्शनसमुच्चय—राजशेखरसूरिकृत | ०-४-० |
| १८. | शीलदूतकाव्य—चारित्रसुन्दरगणिकृत | ०-४-० |
| १९. | निर्भयभीमव्यायोग—श्रीरामचन्द्रसूरिकृत | ०-४-० |
| २०. | श्रीशान्तिनाथचरित्र—श्रीमुनिभद्रसूरिविरचित | ३-०-० |
| २१. | रत्नाकरावतारिका—रत्नप्रभाचार्यकृत परिच्छेद ३थी८ | १-८-० |
| २२. | ” ” ” १-२ | १-०-० |
| | ” ” संपर्ण पाकुं पुंठुं. | ३-०-० |

उपदेशतरङ्गिणी-पत्राकार-उपदेशतथारसीककथाओ ३-०-०
न्यायार्थमञ्जूषा—सिद्धहैमनीपरिभाषाओनी व्याख्या ३-०-०
२३. गुरुगुणरत्नाकरकाव्य-लक्ष्मीसागरसूरिनो इतिहास ०-८-०
२४. विजयप्रशस्तिमहाकाव्य—सटीक-हेमविजयगणी ५-०-०
२६. गद्यपाण्डवचरित्र—पण्डित देवविजयजीगणीए बनावेलुं, घणुं सरल अने बोधदायक छे. सामान्य संस्कृत जाणनाराओ पण वांचननो सारो लाभ मेलवी शके छे. वधारे खात्री अनुभवथी करो किमत मात्र रु. ४-०-०
२९. मल्लिनाथमहाकाव्य—(पुस्तकाकारे तेमज पत्राकारे)आ महाकाव्य श्रीविनयचन्द्रसूरिए बनावेलुं छे. जेमां मल्लिनाथस्वामीना चरित्र उपरान्त प्रासङ्गिक केटलीक रसिक कथाओ सरल संस्कृतमां आपवामां आवीछे. साधारण संस्कृत जाणनाराओ पण तेनो लाभ लई शके छे. किमत. ३-०-०
३०. स्याद्वादमञ्जरी—(पत्राकारे) आ पुस्तक केटलेक स्थळे मुद्रित छे, तो पण अमे शुद्धता तेमज अल्प मूल्यथी ते प्राप्त थई शके तेटला सारू छपाव्युं छे किमत मात्र १-०-०
३२. पार्श्वनाथ चरित्र—भावदेवसूरिविरचित-घणुंज रसिक तथा सरल छे, पुस्तकाकारे तथा पत्राकारे श्लोकबद्ध कीमत रु. ३—०—०

## शास्त्रविशारद जैनाचार्य—श्रीविजयधर्मसूरिजी विरचित पुस्तको।

| | | |
|---|---|---|
| १. जैनतत्त्वादिग्दर्शन | (हिन्दी भाषा) | ०-२-० |
| २. जैनशिक्षादिग्दर्शन | ” | ०-२-० |
| ३. ” | (गुजराती) | ०-२-० |
| ४. पुरुषार्थदिग्दर्शन | (हिन्दी भाषा) | ०-४-० |
| ५. आत्मोन्नतिदिग्दर्शन | (गुजराती) पोस्टेज, | ०-०-६ |
| ६. अहिंसादिग्दर्शन— | (हिन्दी भाषा) | ०-४-० |
| ७. ” | (बंगला) | ०-४-० |

## एशीयाटीक सोसायटी ओफ बंगालमां छपाएला जैन ग्रन्थो.

१. योगशास्त्र–त्रण अंको प्रत्येकना १-४-०
२. शान्तिनाथचरित्र–त्रण अंक दरेकना ०-१०-०
३. षड्दर्शनसमुच्चय–बे अंक, प्रत्येकना ०-१०-०
४. समराइच्चकहा–चार अंक, प्रत्येकना ०-१०-०
५. प्रबन्धचिन्तामणि–(इंग्रेजीभाषामां) त्रण अंक प्रत्येकना १-४-०
६. परीक्षामुख–लघुवृत्तिसहित, न्यायनो ग्रन्थ. १-०-०
७. न्यायसार–सटीक. " २-०-०
८. तत्त्वार्थाधिगमसूत्र–भाष्य सहित, त्रण अंक, प्रत्येकना ०-१०-०
९. उपमितिभवप्रपञ्चाकथा–(त्रीजो तथा चोथो अंक छोडी) १३ अंक संपूर्ण. प्रत्येक अंकना ०-१०-०
१०. उपासकदशाङ्गसूत्र–मूल तथा टीका. प्राकृत शब्दोनो कोश पण साथे छे. ६-०-०
११. प्राकृतलक्षण-चण्डकृत–प्राकृतव्याकरण १-८-०
१२. बौद्धप्रकरणसंग्रह– बौद्ध न्यायशास्त्रनां न्हानां न्हानां छ प्रकरणोनो समावेश छे. ०-१०-०

---

१. श्रीधर्ममहोदय–(संस्कृत) श्रीरत्नविजयजी विरचित ०-४-०
२. श्रीविजयधर्मसूरिचरित्र–(गूजराती) पोस्टेज ०-१-०
३. सुजनसम्मेलनम्–( हिन्दी ) महामहोपाध्याय श्रीरामभिश्रशास्त्रीजीनुं व्याख्यान तेमां जैनधर्मनी प्राचीनता सिद्ध करी छे. ०-१-०

---

### 'जैन-शासन'

आ पत्र दरेक पूर्णिमा तथा अमावास्याए प्रगट थाय छे. पो-

स्टेज सहित वार्षिक लवाजम रु. २) ग्राहक थवा इच्छनारे पोतानुं नाम, गाम, ठाम शुद्ध अक्षरे लखी मोकलवुं।

## श्रीयशोविजयजैनग्रन्थमाला.

### ( संस्कृत मासिक पुस्तक )

श्रीयशोविजय जैन ग्रन्थमाळा मासिकमां एक सो पृष्ठ संस्कृत अने प्राकृत साहित्यने माटे रोकवामां आवेछे, जेनी अंदर न्याय, कोश, तथा महाकाव्यना ग्रंथो प्रसिद्ध करवामां आवेछे. पोस्टखर्च साथे वार्षिक लवाजम रु-८) प्रथमथी लेवामां आवे छे. नमूना दाखल काइने अंक मोकलवामां आवतो नथी.

# विशेषावश्यकभाष्य.

## बृहद्वृत्तिसहित.

२५ २७ २८ ३१

### पहेलो बीजो त्रीजो अने चोथो भाग दरेक २०० पानानां.

जलदी मंगावी ल्यो, व्हेलो ते पहेलो, ग्राहक थनारने दर त्रण त्रण मासे बसो बसो पानानो एक एक भाग मोकलवामां आवशे. संपूर्ण ग्रन्थनी कि० रु. २५) अगाउथीज लेवामां आवे छे. पाछळथी ग्राहक थनार पासेथी रु. ३२) लेवामां आवशे.

### प्राकृत मार्गोपदेशिका.

आ पुस्तक मी० भाण्डारकरनी रीतीने अनुसरि तैयार करवामां आव्युं छे. संस्कृत शिख्या वगर मात्र गुजराती भाषा जाणनाराओ पण आ पुस्तक द्वारा प्राकृत भाषा सारी रीते शिखी शकेछे. कीं. ०-१२-०

मलवानुं ठेकाणुं—शाह हर्षचन्द्र भूराभाई,

वीर सं-२४३८ दीवाली। अंग्रेजी कोठी, बनारस सिटी.

Dharmabhyudaya Press, Benares City.

स्टेज सहित वार्षिक लवाजम रु. २) ग्राहक थवा इच्छनारे पोतानुं नाम, गाम, ठाम शुद्ध अक्षरे लखी मोकलवुं।

## श्रीयशोविजयजैनग्रन्थमाला.

### ( संस्कृत मासिक पुस्तक )

श्रीयशोविजय जैन ग्रन्थमाळा मासिकमां एक सो पृष्ठ संस्कृत अने प्राकृत साहित्यने माटे रोकवामां आवेछे, जेनी अंदर न्याय, कोश, तथा महाकाव्यना ग्रंथो प्रसिद्ध करवामां आवेछे. पोस्टखर्च साथे वार्षिक लवाजम रु-८) प्रथमथी लेवामां आवे छे. नमूना दाखल काइने अंक मोकलवामां आवतो नथी.

# विशेषावश्यकभाष्य.

### बृहद्वृत्तिसहित.

२५ २७ २८ ३१
पहेलो बीजो त्रीजो अने चोथो भाग दरेक २०० पानानां.

जलदी मंगावी ल्यो, व्हेलो ते पहेलो, ग्राहक थनारने दर त्रण त्रण मासे बसो बसो पानानो एक एक भाग मोकलवामां आवशे. संपूर्ण ग्रन्थनी कि० रु. २५) अगाउथीज लेवामां आवे छे. पाछळथी ग्राहक थनार पासेथी रु. ३२) लेवामां आवशे.

### प्राकृत मार्गोपदेशिका.

आ पुस्तक मी० भाण्डारकरनी रीतीने अनुसरि तैयार करवामां आव्युं छे. संस्कृत शिख्या वगर मात्र गुजराती भाषा जाणनाराओ पण आ पुस्तक द्वारा प्राकृत भाषा सारी रीते शिखी शकेछे. की. ०-१२-०

मलवानुं ठेकाणुं—शाह हर्षचन्द्र भूराभाई,

वीर सं–२४३८ दीवाली। अंग्रेजी कोठी, बनारस सिटी.

Dharmabhyudaya Press, Benares City.